बद्धाः कीकसासु च जत्रुषु च ॥ १० ॥ ग्रीवा ऽउष्णिहः । ता ऽअनन्तर्हिता गायत्रीभ्य ऽउपदधात्यनन्तर्हितास्तच्छीर्ष्णो ग्रीवा दधाति ॥ ११ ॥ पक्षौ पङ्क्तयः । ता यत्पङ्क्तयो भवन्ति पाङ्क्तौ हि पक्षौ पार्श्वत ऽउपदधाति पार्श्वतो हीमौ पक्षौ यद्वर्षीयश्छन्दस्तद्दक्षिणत ऽउपदधाति दक्षिणं तदूर्द्ध्वं पशोर्वीर्य्यवत्तरं करोति तस्माद्दक्षिणोऽर्द्धः पशोर्वीर्य्यवत्तरः ॥ १२ ॥ उदरमतिच्छन्दाः । पशवो वै छन्दाᳪंस्यन्नं पशव ऽउदरं वा ऽअन्नमत्त्युदरᳪं हि वाऽअन्नमत्ति तस्माद्यदोदरमन्नं प्राप्नोत्यथ तज्जग्धं रूपातयामरूपं भवति तद्यदेषा पशूँश्छन्दाᳪंस्यत्ति तस्मादत्तिच्छन्दा ऽअत्तिच्छन्दा ह वै तामतिच्छन्दा ऽइत्याचक्षते परोक्षं परोक्षकामा हि देवाः ॥ १३ ॥ योनिः पुरीषवती । ते सᳪंस्पृष्टे ऽउपदधाति सᳪंस्पृष्टे ह्युदरं च योनिश्च पुरीषसᳪंहिते भवतो माᳪंसं वै पुरीषं माᳪंसेन वाऽउदरं च योनिश्च सᳪंहिते पूर्वातिच्छन्दा भवत्यपरा पुरीषवत्युत्तरᳪं ह्युदरमधरा योनिः ॥ १४ ॥ ते प्राच्च्याऽउपदधाति । प्राङ् ह्येषोऽग्निश्चीयतेऽथो प्राग्वै प्राचऽउदरं प्राची योनिर्बहि स्तोमभागः हृदयं वै स्तोमभागा हृदयमु वा ऽउत्तममथोदरमथ योनिः ॥ १५ ॥ ते दक्षिणतः स्वयमातृण्णाया ऽउपदधाति । अथ प्रथमायां चिताऽउत्तरतः स्वयमातृण्णाया ऽउदरं च योनिं चोपदधाति यो वा ऽअयं मद्ध्ये प्राणस्तदेषा स्वयमातृण्णैतस्य तत्प्राणस्योभयत ऽउदरं च योनिं च दधाति तस्मा-

देतस्य प्राणस्योभयत ऽउदरं च योनिश्च ॥ १६ ॥ प्रतिष्ठा द्विपदाः । ता यद् द्विपदा भवन्ति द्वन्द्वꣳ हि प्रतिष्ठा तिस्रो भवन्ति त्रिवृद्धि प्रतिष्ठा पश्चादुपदधाति पश्चाद्धीयं प्रतिष्ठा ॥ १७ ॥ सोऽस्यैष सुकृत ऽआत्मा । तद्यस्य हैतमेवꣳ सुकृतमात्मानं कुर्वन्त्येतꣳ ह स सुकृतमात्मानमभिसम्भवत्यथ यस्य हैतमतोऽन्यथा कुर्वन्ति दुष्कृतꣳ ह तस्यात्मानं कुर्वन्ति स ह स दुष्कृतमेवात्मानमभिसम्भवति ॥ १८ ॥ तदेते साम निधनेऽअभ्युक्ते । अर्क्को देवानां परमे व्व्योमन्नर्क्कस्य देवाः परमे व्व्योमन्नित्येतद्वै देवानां विशतां प्रजापतिरुत्तमोऽविशत्तस्मादाहार्क्को देवानां परमे व्व्योमन्नित्यथ यद्वाहार्क्कस्य देवाः परमे व्व्योमन्नित्ययं वा ऽअग्निरर्क्कस्तस्यैतदुत्तमायां चितौ सर्वे देवा विष्टास्तस्मादाहार्क्कस्य देवाः परमे व्व्योमन्निति ॥ १९ ॥ (B)

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या १०८ ॥



[ गार्हपत्येष्टकोपधानम् ]

गार्हपत्यमुपदधाति । एतद्वै देवाः प्राप्य राद्धेवामन्यन्त तेऽब्रुवन्केनेदमरात्स्मेति गार्हपत्येनैवेत्यब्रुवन्गार्हपत्यं वै चित्वा समारुह्य प्रथमां चितिमपश्याम

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. १. २ ।

प्प्रथमायै द्वितीयां द्वितीयायै तृतीयां तृतीयायै चतुर्त्थीं चतुर्त्थ्यै पञ्चमीं पञ्चम्म्या ऽइदमिति ॥ १ ॥ तेऽब्रुवन् । उप तज्जानीत यथेयमस्म्मास्वेव राद्धिरसदिति तेऽब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्तदिच्छत यथेयमस्म्मास्वेव राद्धिरसदिति ॥ २ ॥ ते चेतयमानाः । एतदपश्श्यन्निहेममाहृत्त्योपदधामहा ऽइति तमिहाहृत्त्योपादधत तस्स्मिन्न्व्यवदन्त वसवः पुरस्ताद्रुद्रा दक्षिणत ऽआदित्याः पश्चान्मरुत ऽउत्तरतो विश्श्वे देवा ऽउपरिष्टादिहोपदधामेहोपदधामेति ॥ ३ ॥ तेऽब्रुवन् । मद्ध्य ऽएवोपदधामहै स नो मद्ध्य ऽउपहितः सर्व्वेषां भविष्यतीति तं मद्ध्य ऽउपादधत तदेताᳩं राद्धिमात्मन्नदधत मद्ध्यतो मद्ध्यत ऽएवैतदेताᳩं राद्धिमात्मन्नदधत तथैवैतद्यजमानो यद्गार्हपत्त्यमुपदधात्त्येतामेवैतद्राद्धिमात्मन्धत्ते मद्ध्यतो मद्ध्यत ऽएवैतदेताᳩं राद्धिमात्मन्धत्ते ॥ ४ ॥ यद्वेव गार्हपत्त्यमुपदधाति । अन्नं वै गार्हपत्त्योऽत्तायमग्निश्चितोऽत्र ऽएवैतदन्नमपिदधाति मद्ध्यतो मद्ध्यत ऽएवास्मिन्नेतदन्नं दधाति ॥ ५ ॥ यद्वेव गार्हपत्त्यमुपदधाति । वेदिर्व्वै देवलोकोऽथ वा ऽएष बहिर्व्वेदि चितो भवति तं यदिहाहृत्त्योपदधाति तदेनं वेदौ देवलोके प्प्रतिष्ठापयति ॥ ६ ॥ यद्वेव गार्हपत्त्यमुपदधाति । योनिर्व्वै पुष्करपर्ण्णमथ वा ऽएष बहिर्य्योनि चितो भवति बहिर्द्धो वाऽ ऽएतद्योनेरग्निकर्म्म यत्पुरा पुष्करपर्ण्णात्तँ यदिहाहृत्त्योपदधाति तदेनं योनौ पुष्करपर्ण्णे प्प्रतिष्ठापयति

तथो हैषोऽबहिर्द्धा भवत्यष्टाविष्टका ऽउपदधाति तस्योक्तो बन्धुस्तं वा ऽएतैरेव यजुर्भिरेतयावृता चिनोति यो ह्येवासौ स ऽएवायं तमेवैतदाहृत्येहोपदधाति ॥ ७ ॥ अथ पुनश्चितिमुपदधाति । एतद्वै देवा गार्हपत्यं चित्वा तस्मिन् राद्धिं नापश्यन्योनिर्वै गार्हपत्या चितिरेषो वै योने राद्धिर्यद्रेतः प्प्रजातिस्तस्यामेतस्यां स्योनौ रेतः प्प्रजातिं नापश्यन् ॥ ८ ॥ तेऽब्रुवन् । उप तज्जानीत यथास्यां स्योनौ रेतः प्प्रजातिं दधामेति तेऽब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्तदिच्छत यथास्यां स्योनौ रेतः प्प्रजातिं दधामेति ॥ ९ ॥ ते चेतयमानाः । एतां पुनश्चितिमपश्यँस्तामुपादधत तदेतस्यां स्योनौ रेतः प्प्रजातिमदधुर्म्मद्ध्यतो मद्ध्यत ऽएवैतदेतस्यां स्योनौ रेतः प्प्रजातिमदधुस्तथैवैतद्यजमानो यत्पुनश्चितिमुपदधात्येतस्यामेवैतद्योनौ रेतः प्प्रजातिं दधाति मद्ध्यतो मद्ध्यतऽएवैतदेतस्यां स्योनौ रेतः प्प्रजातिं दधाति ॥ १० ॥ ताᳬं हैके जघनार्द्धे ऽउपदधति । जघनार्द्धाद्वै रेतः सिच्च्यते पुच्छसन्धौ पुच्छाद्वै रेतः सिच्च्यत ऽइति न तथा कुर्य्याद्बहिर्द्धा ह ते योने रेतः प्प्रजातिं दधति ये तथा कुर्वन्ति मद्ध्य ऽएवोपदद्ध्यात्तत्सम्प्रति योनौ रेतः प्प्रजातिं दधाति ॥ ११ ॥ अष्टाविष्टका ऽउपदधाति । अष्टाक्षरा गायत्री गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतᳬं सिञ्चति पञ्चकृत्वः सादयति पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्या-

वानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्धेतोभूतः सिञ्चत्यष्टा-
विष्टकाः पञ्चकृत्वः सादयति तत्त्रयोदश त्रयोदश
मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्या-
वत्यस्य मात्रा तावत्तद्भवति ॥ १२ ॥ यद्वेव * पुनश्चि-
तिमुपदधाति । एतद्वा ऽएतदयथायथं करोति यदाहव-
नीयाद्‌ गार्हपत्यमुत्तरं चिनोति तद्यत्पुनश्चितिमुपदधाति
य ऽएवायमग्निश्चितस्तमेवैतदाहृत्यास्योपरिष्टात्पुनश्चिच-
नोति तद्यच्चितः सन्तं पुनश्चिनोति तस्मात्पुनश्चितिः
॥ १३ ॥ तद्धैके । जघनार्द्धे गार्हपत्यमुपदधति पूर्वार्द्धे
पुनश्चितिमाहवनीयश्च वा ऽएतौ गार्हपत्यश्चैवं वा-
ऽएतावग्नी ऽइति न तथा कुर्य्यादयं वै लोको गार्हपत्यो
द्यौराहवनीय ऽउत्तरो वा ऽअसावस्यै तस्मादेनामुत्तरा-
मेवोपदध्यात् ॥ १४ ॥ यद्वेव गार्हपत्यं च पुनश्चितिं
चोपदधाति । वेदिश्च हैते ऽअग्नेरुत्तरवेदिश्चाथ ये-
ऽअमू पूर्वे निवपत्यद्धुरस्य ते ऽअथ हैते ऽअग्नेस्तद्यदेते-
ऽउपधायाग्निं निदधाति वेदौ चैवैनमेतदुत्तरवेदौ च
प्रतिष्ठापयति ॥ १५ ॥ यद्वेव पुनश्चितिमुपदधाति ।
पुनर्यज्ञो हैष ऽउत्तरा हैषा देवयज्या पुनर्यज्ञमेवैतदु-
पधत्त ऽउत्तरामेव देवयज्यामुप हैनं पुनर्यज्ञो नमति
॥ १६ ॥ यद्वेव पुनश्चितिमुपदधाति । यं वै तं प्राणा-
ऽऋषयोऽग्रेऽग्निः समस्कुर्वन्त्स ऽएष तमेवैतत्पुनश्चिच-
नोति तद्यच्चितः सन्तं पुनश्चिनोति तस्माद्वेव

* का० श्रौ० सू० १७. १२. १८ ।

पुनश्चिचतिः ॥ १७ ॥ '[1]येन ऽऋषयस्तपसा सत्रमायन्नि'ति । अमूनेतदृषीना'[2]हेन्धाना ऽअग्निꣳ स्वराभरन्त' ऽइतीन्धाना ऽअग्निꣳ स्वर्ग्गं लोकमाहरन्त ऽइत्येत'[3]त्तस्मिन्नहं निदधे नाके ऽअग्निमि'ति स्वर्ग्गो वै लोको नाको '[4]यमाहुर्म्मनव स्तीर्ण्णबर्हिषमि'ति ये विद्वाꣳसस्ते मनव स्तीर्ण्णबर्हिषमिति सर्व्वदा हैव स स्तीर्ण्णबर्हिः ॥ १८ ॥ '[5]तं पत्नीभिरनुगच्छेम देवाः । पुत्रैर्ब्भ्रातृभिरुत वा हिरण्यैरि'त्येतेनैनꣳ सर्व्वेणानुगच्छेमेत्येत'[6]न्नाकं गृब्भ्णानाः सुकृतस्य लोक ऽइति स्वर्ग्गो वै लोको नाकः स्वर्ग्गं लोकं गृह्णानाः? सुकृतस्य लोक ऽइत्येत'[7]त्तृतीये पृष्ठेऽअधि रोचने दिव' ऽइत्येतद्ध तृतीयं पृष्ठꣳ रोचनं दिवो यत्रैष ऽएतत्तपति ॥ १९ ॥ '[8]आ वाचो मद्ध्यमरुहद्भुरण्युरि'ति । एतद्ध वाचो मद्ध्यं यत्रैष ऽएतच्चीयते भुरण्युरिति भर्त्तेत्येत'[9]दयमग्निः सत्पतिश्चेकितान'- ऽइत्ययमग्निः सतां पतिश्चेतयमान ऽइत्येत'[10]त्पृष्ठे पृथिव्व्या निहितो दविद्युतदि'ति पृष्ठे पृथिव्व्या निहितो दीप्प्यमान ऽइत्येत'[11]दधस्पदं कृणुतां ये पृतन्न्यव' ऽइत्यधस्पदं कुरुताꣳ सर्व्वान्पाप्प्मन ऽइत्येतत् ॥ २० ॥ '[12]अयमग्निर्वीरतमो वयोधा' ऽइति । अयमग्निर्व्वीर्य्यवत्तमो

(१) शु० य० सं० अ० १५ क० ४९ । (२) शु० य० सं० अ० १५ क० ४९ ।
(३) शु० य० सं० अ० १५ क० ४९ । (४) शु० य० सं० अ० १५ क० ४९ ।
(५) शु० य० सं० अ० १५ क० ५० । (६) शु० य० सं० अ० १५ क० ५० ।
(७) शु० य० सं० अ० १५ क० ५० । (८) शु० य० सं० अ० १५ क० ५१ ।
(९) शु० य० सं० अ० १५ क० ५१ । (१०) शु० य० सं० अ० १५ क० ५१ ।
(११) शु० य० सं० अ० १५ क० ५१ । (१२) शु० य० सं० अ० १५ क० ५२ ।

वयोधा ऽइत्त्येत'त्सहस्रियो द्योततामप्प्रयुच्छन्नि'ति सहस्रियो दीप्प्यतामप्प्रमत्त ऽइत्त्येत'द्विभ्राजमानः सरिरस्य मद्ध्य' ऽइतीमे वै लोकाः सरिरं दीप्प्यमान ऽएषु लोकेष्वित्त्येत'दुप प्प्रयाहि दिव्व्यानि धामे'त्युप प्प्रयाहि स्वर्ग्गं लोकमित्त्येतत् ॥ २१ ॥ 'सम्प्रच्च्यवद्ध्वमुप सम्प्रयाते'ति । अमूनेतदृषीनाह समेनं प्रच्च्यवद्ध्वमुप चैनः सम्प्रयाते'त्यग्ने पथो देवयानान्कृणुद्ध्वमि'ति यथैव यजुस्तथा बन्धुः 'पुनः कृण्वाना पितरा युवाने'ति वाक्च वै मनश्च्च पितरा युवाना वाक्च मनश्च्चैतावग्नी 'ऽअन्वाताथंसीत्त्वयि तन्तुमेतमि'ति योऽसावृषिभिस्तन्तुस्ततस्तमेतदाह ॥ २२ ॥ 'उद्बुद्ध्यस्वाग्ने प्प्रतिजागृहि त्वमि'ति । इममेतदग्निमाहोच्चैनं बुद्ध्यस्व प्प्रति चैनं जागृही'तीष्टापूर्त्ते सꣳसृजेथामयं चे'ति यथैव यजुस्तथा बन्धु'रस्मिन्त्सधस्त्थे ऽअद्ध्युत्तरस्मिन्नि'ति द्यौर्वा ऽउत्तरः सधस्त्थं 'विश्श्वे देवा यजमानश्च्च सीदते'ति तद्विश्श्वैर्देवैः सह यजमानः सादयति ॥ २३ ॥ 'येन वहसि सहस्रम् । येनाग्ने सर्व्ववेदसमि'त्येतद्धास्य प्प्रतिज्ञाततमं धाम येन सहस्रं वहति येन सर्व्ववेदसं 'तेनेमं यज्ञं नो नय स्वर्देवेषु

(१) शु० य० सं० अ० १५ क० ५२। (२) शु० य० सं० अ० १५ क० ५२। (३) शु० य० सं० अ० १५ क० ५२। (४) शु० य० सं० अ० १५ क० ५३। (५) शु० य० सं० अ० १५ क० ५३। (६) शु० य० सं० अ० १५ क० ५३। (७) शु० य० सं० अ० १५ क० ५३। (८) शु० य० सं० अ० १५ क० ५४। (९) शु० य० सं० अ० १५ क० ५४। (१०) शु० य० सं० अ० १५ क० ५४। (११) शु० य० सं० अ० १५ क० ५४। (१२) शु० य० सं० अ० १५ क० ५५। (१३) शु० य० सं० अ० १५ क० ५५।

गन्तव' ऽइति तेन न ऽइमं यज्ञं नय स्वर्गं लोकं देवेषु गन्तव ऽइत्येतदयं ते योनिर्ऋत्विय ऽइति तस्योक्तो बन्धुरष्टाविष्टका ऽउपदधाति तस्यो ऽएवोक्तः ॥ २४ ॥ (C)

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥



[ ऋतव्या-स्वयमातृण्णा-विकर्ण्यर्थवादः ]

ऋतव्या ऽउपदधाति । ऋतव ऽएते यदृतव्याऽऋतूनेवैतदुपदधाति तदेतत्सर्वं यदृतव्याः संवत्सरो वाऽऋतव्याः संवत्सर ऽइदꣳ सर्वमिदमेवैतत्सर्वमुपदधात्यथो प्रजननमेतत्संवत्सरो वा ऽऋतव्याः संवत्सरः प्रजननं प्रजननमेवैतदुपदधाति ॥ १ ॥ यद्वेवर्त्तव्याऽउपदधाति । क्षत्रं वा ऽऋतव्या विश ऽइमा ऽइतराऽइष्टकाः क्षत्रं तद्विश्यत्तारं दधाति ताः सर्वासु चितिषूपदधाति सर्वस्यां तद्विशि क्षत्रमत्तारं दधाति ॥ २ ॥ यद्वेवर्त्तव्या ऽउपदधाति । संवत्सर ऽएषोऽग्निः सऽऋतव्याभिः सꣳहितः संवत्सरमेवैतदृतुभिः सन्तनोति सन्दधाति ता वै नाना प्रभृतयः समानोदर्का ऽऋतवो वा ऽअसृज्यन्त ते सृष्टा नानैवासन् ॥ ३ ॥ तेऽब्रुवन् । न वा ऽइत्थꣳ सन्तः शक्ष्यामः प्रजनयितुꣳ रूपैः समायामेति त ऽएकैकमृतुꣳ रूपैः समायँस्तस्मादेकैकस्मिन्नृतौ सर्वेषामृतूनाꣳ रूपं ता यन्नाना प्रभृतयो नाना

---

( C ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११. २. ३ ।

ध्वसृज्यन्ताथ यत्समानोदर्क्कं रूपैर्हि समायन् ॥ ४ ॥ स ऽउपदधाति । 'तपश्च तपस्यश्च शैशिरावृतू' ऽइति नामनी ऽएनयोरेते नामभ्यामेवैने ऽएतदुपदधात्यसौ वा ऽआदित्यस्तपस्तस्मादेतावृतू ऽअनन्तर्हितौ तद्यदेतस्मादेतावृतू ऽअनन्तर्हितौ तस्मादेतौ तपश्च तपस्यश्च ॥ ५ ॥ 'अग्नेरन्तः श्लेषोऽसी'ति । संवत्सर ऽएषोऽग्निः स ऽऋतव्याभिः सहितः संवत्सरमेवैतदृतुभिः सन्तनोति सन्दधाति 'कल्पेतां द्यावापृथिवी कल्पन्तामाप ऽओषधय' ऽइतीदमेवैतत्सर्व्वमृतुभिः कल्पयति 'कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रता' ऽइत्यग्नयो हैते पृथग्यदेता ऽइष्टकास्ते यथानयोर्ऋत्वोर्ज्यैष्ठ्याय कल्पेरन्नेवमेतदाह 'ये ऽअग्नयः समनसोऽन्तरा द्यावापृथिवी ऽइमे' ऽइति यथैव यजुस्तथा बन्धुः 'शैशिरावृतू ऽअभिकल्पमाना ऽइन्द्रमिव देवा ऽअभिसंविशन्त्वि'ति यथेन्द्रं देवा ऽअभिसंविष्टा ऽएवमिमावृतू ज्यैष्ठ्यायाभिसंविशन्त्वित्येतद् द्वे ऽइष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोति ॥ ६ ॥ तद्यदेते ऽअत्रोपदधाति । संवत्सर ऽएषोऽग्निरिम ऽउ लोकाः संवत्सरस्तस्य द्यौरेव पञ्चमी चितिर्द्यौरस्य शिशिर ऽऋतुस्तद्यदेते ऽअत्रोपदधाति यदेवास्यैते ऽआत्मनस्त-

---

(१) शु० य० सं० अ० १५ क० ५७। (२) शु० य० सं० अ० १५ क० ५७। (३) शु० य० सं० अ० १५ क० ५७। (४) शु० य० सं० अ० १५ क० ५७। (५) शु० य० सं० अ० १५ क० ५७। (६) शु० य० सं० अ० १५ क० ५७।

दस्मिन्नेतत्प्रतिदधाति तस्मादेते ऽअत्रोपदधाति ॥ ७ ॥ यद्वेवैते ऽअत्रोपदधाति । प्रजापतिरेषोऽग्निः संवत्सर-ऽउ प्प्रजापतिस्तस्य शिर ऽएव पञ्चमी चितिः शिरोऽ-स्य शिशिर ऽऋतुस्तद्यदेते ऽअत्रोपदधाति यदेवास्यैते-ऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते ऽअत्रोप-दधाति ॥ ८ ॥ स पुरस्तात्स्वयमातृण्णायै च विश्वज्ज्योतिषश्चर्त्तव्ये ऽउपदधाति । द्यौर्वा ऽउत्तमा स्वयमातृ-ण्णादित्य ऽउत्तमा विश्वज्ज्योतिरर्वाचीनं तद्दिवश्चादि-त्याच्चर्त्तून्दधाति तस्मादर्वाचीनमेवात ऽऋतवोऽथो प्प्रजन-नमेतदर्वाचीनं तद्दिवश्चादित्याच्च प्रजननं दधाति तस्मा-दर्वाचीनमेवातः प्प्रजायते स्थितः हैवातः पराक्प्रजननं स्यावन्तो ह्येव सनाग्ग्रे देवास्तावन्तो देवाः ॥ ९ ॥ अथ प्प्रथमायै स्वयमातृण्णायै । प्रथमायै च विश्वज्ज्योतिष-ऽउपरिष्टादृतव्ये ऽउपदधातीयं वै प्प्रथमा स्वय-मातृण्णाग्निः प्प्रथमा विश्वज्ज्योति*रितस्तदूर्द्ध्वानृतून्दधाति तस्मादित ऽऊर्द्ध्वा ऽऋतवोऽथो प्प्रजननमेतदितस्तदूर्द्ध्वं प्रजननं दधाति तस्मादित ऽऊर्द्ध्वमेव प्प्रजायते ॥ १० ॥ ता न व्व्यूहेत् । नेदृतून्व्व्यूहानीति षो वै म्म्रियत-ऽऋतवो ह तस्मै व्व्युह्यन्ते तस्माद्यत्रैव प्प्रथमे ऽउप-दधाति तत्सर्वा ऽउपदद्ध्यात् ॥ ११ ॥ अथो ऽइमे वै लोका ऽऋतव्व्याः । इमाँस्तल्लोकानूर्द्ध्वाँश्चितिभिश्चिनो-त्यथो क्षत्रं वा ऽऋतव्व्याः क्षत्रं तदूर्द्ध्वं चितिभिश्चिनो-

* 'रितस्तदूर्ध्वा' इति 'क-घ'। 'स्तदूर्ध्वा' इति 'ग-ज' पुस्तकयोः।

त्त्यथो संवत्सरो वा ऽऋतव्व्याः संवत्सरं तदूर्द्ध्वं चितिभिश्चिनोति ता नान्न्यया यजुष्मत्त्येष्टकयोपरिष्टादभ्युपदद्ध्यान्नेत्क्षत्त्रं व्विशाभ्युपदधानीति ॥ १२ ॥ ता हैताऽएव सँरुयान्न्यः । एतद्वै देवा ऽऋतव्व्याभिरेवेमाँल्लोकान्त्समयुरितश्चोर्द्ध्वानमुतश्चार्व्वाचस्तथैवैतद्यजमान ऽऋतव्व्याभिरेवेमाँल्लोकान्त्सँरुयातीतश्चोर्द्ध्वानमुतश्चार्व्वाचः ॥१३॥ तदु ह चरकाद्ध्वर्य्यवः । अन्न्या ऽएव सँरुयानीरित्त्युपदधति न तथा कुर्य्यादत्त्यहैव रेचयन्त्येता ऽउ ऽएव सँरुयान्न्यः ॥ १४ ॥ अथ व्विश्श्वज्ज्योतिषमुपदधाति । आदित्त्यो वा ऽउत्तमा व्विश्श्वज्ज्योतिरादित्त्यो ह्येवामुष्मिँल्लोके व्विश्श्वज्ज्योतिरादित्त्यमेवैतदुपदधाति ॥ १५ ॥ यद्वेव व्विश्श्वज्ज्योतिषमुपदधाति । प्रजा वै व्विश्श्वज्ज्योतिः प्प्रजा ह्येव व्विश्श्वज्ज्योतिः प्प्रजननमेवैतदुपदधाति ॥ १६ ॥ स पुरस्तात्स्वयमातृण्णायै * व्विश्श्वज्ज्योतिषमुपदधाति । द्यौर्व्वा ऽउत्तमा स्वयमातृण्णादित्त्य ऽउत्तमा व्विश्श्वज्ज्योतिरर्व्वाचीनं तद्दिव ऽआदित्त्यं दधाति तस्म्माद्देषोऽर्व्वाचीनमेवातस्तपत्त्यथो प्प्रजननमेतदर्व्वाचीनं तद्दिवः प्प्रजननं दधाति तस्म्मादर्व्वाचीनमेवातः प्प्रजायते ॥ १७ ॥ अथ प्प्रथमायै स्वयमातृण्णायै । उपरिष्टाद्विश्श्वज्ज्योतिषमुपदधातीयं व्वै प्प्रथमा स्वयमातृण्णाग्निः प्प्रथमा व्विश्श्वज्ज्योतिरितस्तदूर्द्ध्वमाग्निं दधाति तस्म्मादितऽऊर्द्ध्वोऽग्निर्द्दीप्प्यतेऽथो प्प्रजननमेतदितस्तदूर्द्ध्वं प्रजननं

* का० श्रौ० सू० १७. १२. २३ ।

दधाति तस्मादित ऽऊर्द्ध्वमेव प्प्रजायते ॥ १८ ॥ अथ मद्ध्यमायै स्वयमातृण्णायै । उपरिष्ट्टाद्विश्श्वज्ज्योतिषमुपदधात्यन्तरिक्षं वै मद्ध्यमा स्वयमातृण्णा वायुर्म्मद्ध्यमा विश्श्वज्ज्योतिरन्तरिक्षे तद्वायुं दधाति तस्मादयमन्तरिक्षे वायुः ॥ १९ ॥ तान्येतानि ज्ज्योतीꣳषि । तद्यदेता ऽएवमुपदधात्येतान्येवैतज्ज्योतीꣳषि सम्म्यञ्चि दधाति तस्मादित ऽऊर्द्धोऽग्निर्द्दीप्प्यतेऽर्व्वाङसावादित्यस्तपत्यन्तरिक्षेऽयं तिर्य्यङ् वायुः पवते ॥ २० ॥ '[१]परमेष्ट्ठी त्वा सादयत्वि'ति । परमेष्ट्ठी ह्येतां पञ्चमीं चितिमपश्श्य'द्दिवस्पृष्ठे[२] ज्ज्योतिष्मतीमि'ति दिवो ह्यसौ पृष्ठे ज्ज्योतिष्मानादित्यः ॥ २१ ॥ 'विश्श्वस्म्मै[३] प्प्राणायापानाय । व्व्यानाये'ति प्प्राणो वै विश्श्वज्ज्योतिः सर्व्वस्म्मा ऽउ वा ऽएतस्म्मै प्प्राणो 'विश्श्वञ्ज्योतिर्य्यच्छे'[४]ति सर्व्वं ज्ज्योतिर्य्यच्छेत्येत'त्सूर्य्यस्तेऽधिपतिरि'[५]ति सूर्य्यमेवास्या ऽअधिपतिं करोति सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ २२ ॥ ता हैता ऽएव सँख्यान्यः । एतद्वै देवा विश्श्वज्ज्योतिर्ब्भिरेवेमाँल्लोकान्त्समयुरितश्चोर्द्ध्वानमुतश्चार्व्वाचस्तथैवैतद्यजमानो विश्श्वज्ज्योतिर्ब्भिरेवेमाँल्लोकान्त्सँख्यातीतश्चोर्द्ध्वानमुतश्चार्व्वाचः ॥ २३ ॥ तदु ह चरकाद्ध्वर्य्यवः ।

---

(१) शु० य० सं० अ० १५ क० ५८ । (२) शु० य० सं० अ० १५ क० ५८ । (३) शु० य० सं० अ० १५ क० ५८ । (४) शु० य० सं० अ० १५ क० ५८ । (५) शु० य० सं० अ० १५ क० ५८ ।

अन्न्या ऽएव सँख्यानीरित्त्युपदधति न तथा कुर्य्यादत्त्यहैव रेचयन्त्येता ऽउ ऽएव सँख्याऽन्न्यः ॥ २४ ॥ (A)

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ लोकम्पृणेष्टकोपधानम्, इष्टकाप्रमाणं च ]

अथ लोकम्पृणामुपदधाति । असौ वा ऽआदित्त्यो लोकम्पृणैष ह्रीमाँल्लोकान्न्पूरयत्त्यमुमेवैतदादित्त्यमुपदधाति ताᳬ सर्वासु चितिषूपदधातीमे वै लोका ऽएताश्चितयोऽमुं तदादित्त्यमेषु लोकेषु दधाति तस्मादेष सर्वेब्भ्य ऽएवैब्भ्यो लोकेब्भ्यस्तपति ॥ १ ॥ यद्वेव * लोकम्पृणामुपदधाति । क्षत्त्रं वै लोकम्पृणणा विशऽइमा ऽइतरा ऽइष्टकाः क्षत्त्रं तद्विश्यत्तारं दधाति ताᳬ सर्वासु चितिषूपदधाति सर्वस्यां तद्विशि क्षत्त्रमत्तारं दधाति ॥ २ ॥ सैषैकैव भवति । एकस्त्थं तत्क्षत्त्रमेकस्त्थाᳬ श्रियं करोत्त्यथ या द्वितीया मिथुनं तदर्द्धमु हैतदात्मनो यन्मिथुनं यदा वै सह मिथुनेनाथ सर्वोऽथ कृत्स्नः कृत्स्नताया ऽएकेन यजुषा बह्वीरिष्टका ऽउपदधाति क्षत्त्रं तद्वीर्य्येणात्त्यादधाति क्षत्त्रं विशो वीर्य्यवत्तरं करोत्त्यथेतराः पृथङ् नाना यजुर्ब्भिरुपदधाति विशं तत्क्षत्त्रादवीर्य्यतरां करोति पृथग्वादिनीं नाना चेतसम् ॥ ३ ॥ स वा ऽअस्याᳬ स्त्रक्त्यां प्रथमे ऽउपदधाति ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा– का० श० ११. २. १; कठ० १७. १०; कपिष्ठ० २६. ९; मै० सं० ११. ८. १२; तै० सं० ४. ४. ११ ।

* का० श्रौ० सू० १७. १२. २४ ।

अमुं तदादित्यमेतस्यां दिशि दधात्यथेतस्तस्मादुतोऽनुपर्य्यैत्यथेतस्तस्मादुतोऽनुपर्य्यैत्यथेतस्तस्मादुतोऽनुपर्य्यै-त्यथातस्तस्मादुतोऽनुपर्य्यैति ॥ ४ ॥ स यद्यत्रैव प्प्रथमेऽउपदधाति । तदुत्तमेऽअनूपदद्ध्यात्सकृद्धैवासावादित्यऽइमाँल्लोकान्नपर्य्येत्यनातिप्प्रच्च्यवेतातिहृत्य पूर्वेऽउत्तमेऽअनूपदधात्यमुं तदादित्यमिमाँल्लोकानतिप्प्रच्च्यावयति तस्मादसावादित्यऽइमाँल्लोकानसथ्ठंस्थितो दक्षिणावृत्पुनः-पुनरनुपर्य्यैति ॥ ५ ॥ 'लोकं पृण च्छिद्रं पृणे'ति[1] । लोकं च पूरय च्छिद्रं च पूरयेत्येत'दथो सीद ध्रुवा त्वमि'त्यथो सीद स्थिरा त्वं प्रतिष्ठिते'त्येतद'[2]न्द्राग्नी त्वा बृहस्पतिरस्मिन्न्योनावसीषदन्नि'तीन्द्राग्नी[3] च त्वा बृहस्प्पतिश्चचास्मिन्न्योनौ प्प्रत्यतिष्ठिपन्नित्येतदनुष्टुभा वाग्वाऽअनुष्टुब्वाग्विन्द्र *ऽइन्द्रो लोकम्पृणा न सादयत्यसन्नो ह्येष सूददोहसाधिवदति प्प्राणो वै सूददोहाः प्प्राणेनैवैनमेतत्सन्तनोति सन्दधाति ॥ ६ ॥ तदाहुः । कथमेषा लोकम्पृणायातयाम्म्नी भवतीत्यसौ वाऽआदित्यो लोकम्पृणायातयामा वाऽएषोऽथो वाग्वै लोकम्पृणायातयाम्म्न्यु वै वाक् ॥ ७ ॥ [अर्धप्रपाठकः ५५॥] स वै यजुष्मतीरुपधाय । लोकम्पृणया प्प्रच्छादयत्यन्नं वै यजुष्मत्यऽइष्टका ऽआत्मा लोकम्पृणान्नं तदात्मना परिदधाति तस्मादन्नमात्मना परिहितमात्मैव भवति ॥ ८ ॥ स

(१) शु० य० सं० अ० १५ क० ५९। (२) शु० य० सं० अ० १५ क० ५९। (३) शु० य० सं० अ० १५ क० ५९।

* 'व्वागिन्द्र' इति 'ग-ज' पुस्तकयोः।

वा ऽआत्मन्नेव । यजुष्मतीरुपदधाति न पक्षपुच्छेष्वात्मँस्त-
दन्नं दधाति यदु वा ऽआत्मन्नन्नं धीयते तदात्मान-
मवति तत्पक्षपुच्छान्यथ यत्पक्षपुच्छेषु नैव तदात्मा-
नमवति न पक्षपुच्छानि ॥ ९ ॥ उभयीर्य्यजुष्मतीश्च
लोकम्पृणाश्चात्मन्नुपदधाति । तस्मादयमात्मा द्वि-
गुणो बहुलतर ऽइव लोकम्पृणा ऽएव पक्षपुच्छेषु
तस्मात्पक्षपुच्छानि तनीयाꣳसीवानूचीश्च तिरश्ची-
श्चात्मन्नुपदधात्यस्थीनि वा ऽइष्टकास्तस्मादिमान्य-
न्वञ्चि च तिर्य्यञ्चि चात्मन्नस्थीनि पराचीरेव पक्षपुच्छेषु
न हि किञ्चन पक्षपुच्छेषु तिर्य्यगस्त्यस्ति तद्धैतदेव
चितस्य चाचितस्य च विज्ञानमेवमेव चित ऽइतरथा चितः
॥ १० ॥ स वै स्वयमातृण्णां लोकम्पृणया प्रच्छादयति ।
प्राणो वै स्वयमातृण्णादित्यो लोकम्पृणा प्राणं तदादित्येन
समिन्धे तस्मादयमुष्णः प्राणस्तया सर्वमात्मानं प्रच्छा-
दयति सर्वं तदात्मानमादित्येन समिन्धे तस्मादयꣳ
सर्व ऽएवात्मोष्णस्तद्धैतदेव जीविष्यतश्च मरिष्यतश्च
विज्ञानमुष्ण ऽएव जीविष्यञ्छीतो मरिष्यन् ॥ ११ ॥
स यस्याꣳ स्रक्त्यां प्रथमे ऽउपदधाति । ततो दशभि-
र्दशभिः सञ्छादयन्नेत्या स्वयमातृण्णायै स तेनैव दक्षिणा-
वृज्जघनेन स्वयमातृण्णाꣳ सञ्छादयन्नेत्यानूक्याया ऽअथ
पुनरेत्य तमवधिꣳ सञ्छादयति ॥ १२ ॥ आत्मानमग्रे
सञ्छादयति । आत्मा ह्येवाग्रे सम्भवतः सम्भवत्यथ
दक्षिणं पक्षमथ पुच्छमथोत्तरं तद्दक्षिणावृत्तद्धि देवत्राथो-

ऽएवं व्वा ऽअसावादित्य ऽइमाँल्लोकान्दक्षिणावृदनुपर्य्यैति ॥ १३ ॥ स ऽएष प्प्राण ऽएव यल्लोकम्पृणा । तया सर्व्वमात्त्मानं प्रच्छादयति सर्व्वस्मिँस्तदात्त्मन्प्राणं दधाति तद्यद्धास्यैषाङ्गं नाभिप्प्राप्नुयात्प्राणो हास्य तदङ्गं नाभिप्प्राप्नुयाद्यदु वै प्प्राणोऽङ्गं नाभिप्प्राप्नोति शुष्यति वा वै तन्म्लायति वा तस्मादेनꣳ सर्व्वमेवैतया प्प्रच्छादयेत् ॥ १४ ॥ स वा ऽआत्त्मन ऽएवाधि पक्षपुच्छानि चिनोति । आत्त्मनो ह्येवाङ्ग्यङ्गानि प्प्ररोहन्त्यथ * यत्परस्तादर्व्वाचीरुपदद्ध्याद्यथान्न्यत ऽआहृत्त्याङ्गं प्रतिदद्ध्यात्तादृक्तत् ॥ १५ ॥ न भिन्नां न कृष्णामुपदद्ध्यात् । आर्च्छति वा ऽएषा-षा भिद्यत ऽआर्त्तम्वेतद्रूपं यत्कृष्णं नेदार्त्तमात्त्मानमभिसँस्करवा ऽइति नाभिन्नां परास्येन्नेदुनार्त्तमात्त्मनो बहिर्द्धा करवाणीति धिष्णेभ्यः प्प्रतिसंख्याय या विराजमतिरिच्च्येरन्नोत्तरामुद्रवेयुस्तद्वै खलु ताऽआर्च्छन्ति ता भित्त्वोत्त्कर ऽउत्किरेदुत्करो वा ऽअतिरिक्तस्य प्प्रतिष्ठा तद्यत्रातिरिक्तस्य प्प्रतिष्ठा तदेवैनाऽएतत्प्रतिष्ठापयति ॥ १६ ॥ अथात ऽइष्टकामात्राणामेव । पादमात्रीः प्प्रथमायाश्चोत्तमायाश्च चित्त्योरुपदद्ध्यात्प्रतिष्ठा वै पादो यो वै पादः स हस्त ऊर्वस्त्थमात्र्यो व्वर्षिष्ठाः स्युर्न्न ह्यूर्वस्त्थात्किञ्चन व्वर्षीयोऽस्त्थ्यस्ति त्र्यालिखितवत्त्यस्तिस्रश्चित्तयः स्युस्त्रिवृतो हीमे लोका ऽअपरिमितालिखिते द्वे रसो हैते चिती ऽअपरिमित ऽउ वै रसः

* 'यत्पुरस्ता' इति 'ग-ज' पुस्तकयोः ।

सर्वास्त्वेव त्र्यालिखितवत्यः स्युः सर्वे ह्येवेमे लोकास्त्रिवृतः ॥ १७ ॥ अथात ऽइष्टकानामेवावपनस्य । यां काञ्च यजुष्मतीमिष्टकां विद्यात्तां मद्ध्यमायां चिता ऽउपदद्ध्यादन्तरिक्षं वै मद्ध्यमा चितिरन्तरिक्षमु वै सर्वेषां भूतानामावपनमथो ऽअन्नं वै यजुष्मत्य ऽइष्टका ऽउदरं मद्ध्यमा चितिरुदरे तदन्नं दधाति ॥ १८ ॥ तदाहुः । नोपदद्ध्यान्नेदतिरेचयानीति स वा ऽउपैव दद्ध्यात्कामेभ्यो वा ऽएता ऽइष्टका ऽउपधीयन्ते न वै कामानामतिरिक्तमस्ति स वै नैवोपदद्ध्यादेतावद्वा ऽएतद्देवा ऽअकुर्वन् ॥ १९ ॥ (B)

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ इष्टकासु पुरीषनिवापः, स्वयमातृण्णा-विकर्ण्युपधानं च ]

अथ पुरीषं निवपति । माᳪंसं वै पुरीषं माᳪंसेनैवैनमेतत्प्रच्छादयतीष्टका ऽउपाधायास्थीष्टका ऽअस्थि तन्माᳪंसैः सञ्छादयति ॥ १ ॥ स वै स्वयमातृण्णायामावपति । प्राणो वै स्वयमातृण्णान्नं पुरीषं प्राणे तदन्नं दधाति तेन सर्वमात्मानं प्रच्छादयति तस्माद्यत्प्राणेऽन्नं धीयते * तत्सर्वमात्मानमवति सर्वमात्मानमनुव्येति ॥ २ ॥ न स्वयमातृण्णायामावपेदित्यु हैक ऽआहुः । प्राणः स्वयमातृण्णा नेत्प्राणानपिदधानीति स वा ऽऐव वपेदन्नेन वै प्राणा विष्टब्धा यो वा ऽअन्नं नात्ति सं वै तस्य प्राणा

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११. २. २।

* 'तत्सर्वम्' इति 'क-घ' । 'सर्वम्' इति 'ग-ज' पुस्तकयोः ।

रोहन्ति तद्यस्य ह तथा कुर्वन्ति यथा शुष्का सूर्म्मी सुषिरैवᳫं ह सोऽमुष्मिँल्लोके सम्भवति तस्मात्स्वयमातृण्णायामेव वपेत् ॥ ३ ॥ स्वयमातृण्णायामोप्य । अनूक्यया सञ्छादयन्नेत्या परिश्रिद्भ्यः स तेनैव दक्षिणावृज्जघनेन स्वयमातृण्णाᳫं सञ्छादयन्नेत्या पुनरनूक्यायै ॥ ४ ॥ आत्मानमग्ग्रे सञ्छादयति । आत्मा ह्येवाग्ग्रे सम्भवतः सम्भवत्यथ दक्षिणं पक्षमथ पुच्छमथोत्तरं तद्दक्षिणावृत्तद्धि देवत्रा ॥ ५ ॥ स ऽएष प्प्राण ऽएव यत्पुरीषम् । तेन सर्वमात्मानं प्रच्छादयति सर्वस्मिँस्तदात्मन्प्राणं दधाति तद्यद्धास्यैतदङ्गं नाभिप्प्राप्नुयात्प्राणो हास्य तदङ्गं नाभिप्प्राप्नुयाद्यदु वै प्प्राणोऽङ्गं नाभिप्प्राप्नोति शुष्यति वा वै तन्म्लायति वा तस्मादेनᳫं सर्वमेवैतेन प्प्रच्छादयेत् ॥ ६ ॥ '[1]इन्द्रं विश्श्वा ऽअवीवृधन्नि'ति । इन्द्रᳫं हि सर्वाणि भूतानि वर्द्धयन्ति '[2]समुद्रव्व्यचसं गिर' ऽइति महिमानमस्यैतदाह 'रथीतमᳫं[3] रथीनामि'ति रथितमो ह्येष रथिनां 'व्वाजानाᳫं सत्पतिं पतिमि'त्यन्नं वै व्वाजा ऽअन्नानाᳫं सत्पतिं पतिमित्येतदैन्द्र्यानुष्टुभा निवपत्यैन्द्रᳫं हि पुरीषं तदेतदर्द्धमग्नेर्यत्पुरीषमर्द्धमैष्टकम् ॥ ७ ॥ तदाहुः । यत्सर्वैश्छन्दोभिः सर्वाभिर्देवताभिरिष्टका ऽउपदधात्यथैतदेकयैकदेवत्यया निवपति कथमेतदर्द्धमग्नेरितीन्द्रो वै सर्वान्देवा-

(१) शु० य० सं० अ० १५ क० ६१। (२) शु० य० सं० अ० १५ क० ६१। (३) शु० य० सं० अ० १५ क० ६१। (४) शु० य० सं० अ० १५ क० ६१।

ऽप्रतिप्रतिस्तद्यदैन्द्रया निवपति तेनैतदर्द्धमग्नेरथ यदनुष्टुभा वाग्वा ऽअनुष्टुब्वाग्वु सर्वाणि च्छन्दाᳫंसि तेनो ऽएवार्द्धम् ॥ ८ ॥ अथ * विकर्णीं च स्वयमातृण्णां चोपदधाति । वायुर्वै विकर्णी द्यौरुत्तमा स्वयमातृण्णा वायुं च तद् दिवं चोपदधात्युत्तमे ऽउपदधात्युत्तमे हि वायुश्च द्यौश्च सᳫंस्पृष्टे सᳫंस्पृष्टे हि वायुश्च द्यौश्च पूर्वां विकर्णीमुपदधात्यर्वाचीनं तद्दिवो वायुं दधाति तस्मादेषोऽर्वाचीन†मेवातः पवते ॥ ९ ॥ यद्वेव विकर्णीमुपदधाति । यत्र वा ऽअदोऽश्वं चितिमवघ्रापयन्ति तदसावादित्य ऽइमाँल्लोकान्त्सूत्रे समावयते तद्यत्तत्सूत्रं वायुः स स यः स वायुरेषा सा विकर्णी तद्यदेतामुपदधात्यसावेव तदादित्य ऽइमाँल्लोकान्त्सूत्रे समावयते ॥ १० ॥ यद्वेव विकर्णीं च स्वयमातृण्णां चोपदधाति । आयुर्वै विकर्णी प्राणः स्वयमातृण्णायुश्च तत्प्राणं चोपदधात्युत्तमे ऽउपदधात्युत्तमे ह्यायुश्च प्राणश्च सᳫंस्पृष्टे सᳫंस्पृष्टे ह्यायुश्च प्राणश्च पूर्वामुत्तरां विकर्णीमुपदधात्यायुषा तत्प्राणमुभयतः परिगृह्णाति ॥ ११ ॥ ‘प्रोथदश्वो न यवसे । अविष्यन्यदा महः संवरणाद्व्यस्थात् । आदस्य वातो ऽअनुवाति शोचिरध स्म ते व्रजनं कृष्णमस्ती’ति यदा वा ऽएतस्य वातोऽनुवाति शोचिरथैतस्य

---

* “प्रच्छाद्य पुरीषेण विकर्णीस्वयमातृण्णे शर्करे संस्पृष्टे छिद्रे ‘प्रोथदश्व’ इत्युत्तरां विकर्णीमायोष्ट्वेति स्वयमातृण्णाम्” ( का० श्रौ० सू० १७. १२. २५ ) ।

† ‘मेवातः’ इति ‘क–घ’ । मेव वातः’ इति ‘ग–ज’ पुस्तकयोः ।

( १ ) शु० य० सं० अ० १५ क० ६२ ।

व्रजनं कृष्णं भवति त्रिष्टुभोपदधाति त्रैष्टुभो हि वायुराग्ने-रुयाग्निकर्म्म ह्यनिरुक्तयानिरुक्तो हि वायुरथ यद्वात ऽइत्याह वातो हि वायुः ॥ १२ ॥ * अथ स्वयमातृण्णामुपदधाति। 'आयोष्ट्वा सदने सादयामी'त्येष वा ऽआयुस्तस्यैतत्सदन-'मवत' ऽइत्येष हीदꣳ सर्वमवति छायायामित्येतस्य हीदꣳ सर्वं 'छायायाꣳ समुद्रस्य हृदय' ऽइति समुद्रस्य ह्येतद्धृ-दयꣳ 'रश्मीवतीं भास्वतीमि'ति रश्मीवती हि द्यौर्भा-स्व'त्या या द्यां भास्या पृथिवीमोर्वन्तरिक्षमि'त्येवꣳ ह्येष-ऽइमाँल्लोकानाभाति ॥ १३ ॥ 'परमेष्ठी त्वा सादयत्वि'ति। परमेष्ठी ह्येतां पञ्चमीं चितिमपश्यत् ॥ १४ ॥ यद्वेव परमे-ष्ठिनोपदधाति । प्रजापतिं विस्रस्तं देवता ऽआदाय व्युदक्रामँस्तस्य परमेष्ठी शिर ऽआदायोत्क्रम्यातिष्ठत् ॥ १५ ॥ तमब्रवीत्। उप मेहि प्रति म ऽएतद्धेहि येन मे त्वमुदक्रमीरिति किं मे ततो भविष्यतीति त्वद्देवत्यमेव म ऽएतदात्मनो भविष्यतीति तथेति तदस्मिन्नेतत्परमेष्ठी प्रत्यदधात् ॥ १६ ॥ तस्यैषोत्तमा स्वयमातृण्णा। एतदस्य तदात्मनस्तद्यदेतामत्रोपदधाति यदेवास्यैषात्मनस्तदस्मि-न्नेतत्प्रतिदधाति तस्मादेतामत्रोपदधाति ॥ १७ ॥ 'दिवं-

---

* अत्र शतम् ४७०० ॥

(१) शु० य० सं० अ० १५ क० ६३। (२) शु० य० सं० अ० १५ क० ६३। (३) शु० य० सं० अ० १५ क० ६३। (४) शु० य० सं० अ० १५ क० ६३। (५) शु० य० सं० अ० १५ क० ६३। (६) शु० य० सं० अ० १५ क० ६४। (७) शु० य० सं० अ० १५ क० ६४।

स्पृष्ठे व्व्यचस्वतीम्प्रथस्वतीमि'ति । दिवो ह्येतत्पृष्ठं व्व्यचस्वत्प्रथस्वद्दिवँ 'य्यच्छ दिवं दृꣳह दिवं मा हिꣳसीरि'त्यात्मानं य्यच्छात्मानं दृꣳहात्मानं मा हिꣳसीरित्येतत् ॥१८॥

विश्वस्म्मै प्प्राणायापानाय । व्व्यानायोदानाये'ति प्प्राणो वै स्वयमातृण्णा सर्व्वस्म्मा ऽउ वा ऽएतस्म्मै प्प्राणः 'प्प्रतिष्ठायै चरित्त्राये'तीमे वै लोकाः स्वयमातृण्णा ऽइम ऽउ लोकाः प्प्रतिष्ठा चरित्त्रꣳ 'सूर्य्यस्त्वाभिपात्त्वि'ति सूर्य्यस्त्वाभिगोपायत्त्वित्त्येत'न्न्मह्या स्वस्त्ये'ति महत्या स्वस्त्येत्त्येत'च्छर्द्दिषा शन्तमेने'ति यच्छर्द्दिः शन्तमं तेनेत्त्येतत् ॥१९॥

नानोपदधाति । नाना हि व्वायुश्च द्यौश्च सकृत्सादयति समानं तत्करोति समानꣳ ह्वायुश्च प्प्राणश्च ते वा ऽउभे ऽएव शर्क्करे भवत ऽउभे स्वयमातृण्णे समानꣳ ह्येवायुश्च प्प्राणश्चाथैने सूददोहसाधिवदति प्प्राणो वै सूददोहाः प्प्राणेनैवैने ऽएतत्सन्तनोति सन्दधाति ॥ २० ॥

'ताँ ऽअस्य सूददोहस' ऽइति । आपो वै सूदोऽन्नं दोहः 'सोमꣳ श्रीणन्ति पृश्नय' ऽइत्त्यन्नं वै पृश्नि 'जन्मन्देवाना-मि'ति संवत्सरो वै देवानां जन्म 'विशः' ऽइति यज्ञो वै विशो यज्ञे हि सर्व्वाणि भूतानि विष्टानि 'त्रिष्वा रोचने

(१) शु० य० सं० अ० १५ क० ६४। (२) शु० य० सं० अ० १५ क० ६४। (३) शु० य० सं० अ० १५ क० ६४। (४) शु० य० सं० अ० १५ क० ६४। (५) शु० य० सं० अ० १५ क० ६४। (६) शु० य० सं० अ० १५ क० ६४। (७) शु० य० सं० अ० १५ क० ६४। (८) शु० य० सं० अ० १५ क० ६४। (९) शु० य० सं० अ० १५ क० ६४। (१०) शु० य० सं० अ० १५ क० ६४। (११) शु० य० सं० अ० १५ क० ६४।

दिव' ऽइति सवनानि वै त्रीणि रोचनानि सवनान्येतदाहा-
नुष्टुभा वाग्वा ऽअनुष्टुब्वागु सर्व्वे प्प्राणा वाचा चैवैने-
ऽएतत्प्राणेन च सन्तनोति सन्दधाति सा वा ऽएषैका
सती सूददोहाः सर्व्वा ऽइष्टका ऽअनुसञ्चरति प्प्राणो वै
सूददोहास्तस्मादयमेक ऽएव प्प्राणः सन्त्सर्व्वाण्यङ्गानि
सर्व्वमात्मानमनुसञ्चरति ॥ २१ ॥ (C)

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ पञ्चम्याश्चितः सुवर्णशकलसहस्रेण प्रोक्षणम्, पुरीषेणाच्छादनं च ]

अथ स्वयमातृण्णासु सामानि गायति । इमे वै
लोकाः स्वयमातृण्णास्ता ऽएताः शर्क्करास्ता देवा ऽउपधा-
यैतादृशीरेवापश्यन्यथैताः शुष्काः शर्क्कराः ॥ १ ॥ तेऽब्रु-
वन् । उप तज्जानीत यथैषु लोकेषु रसमुपजीवनं दधामेति
तेऽब्रुवँश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्त-
दिच्छत यथैषु लोकेषु रसमुपजीवनं दधामेति ॥ २ ॥
ते चेतयमानाः । एतानि सामान्यपश्यँस्तान्यगायँस्तैरेषु
लोकेषु रसमुपजीवनमदधुस्तथैवैतद्यजमानो यदेतानि
सामानि गायत्येष्वेवैतल्लोकेषु रसमुपजीवनं दधाति ॥ ३ ॥
स्वयमातृण्णासु गायति । इमे वै लोकाः स्वयमातृण्णा-
ऽएष्वेवैतल्लोकेषु रसमुपजीवनं दधाति ॥ ४ ॥ स वै

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. १२. ३; कठ० १७. १०; कपिष्ठ० २६. ९; मै० सं० ११. ८. १, १४; तै० सं० ४. ४. ५ ।

'भूर्भुवः स्वरि'ति । एतासु व्याहृतिषु गायति भूरिति वा ऽअयं लोको भुव ऽइत्यन्तरिक्षलोकः स्वरित्यसौ लोक ऽएष्वेवैतल्लोकेषु रसमुपजीवनं दधाति ॥ ५ ॥ तानि वै नाना प्रस्तावानि । समाननिधनानि तानि यन्नाना प्रस्तावानि नाना ह्यपश्यन्नथ यत्समाननिधनान्येका ह्येव यज्ञस्य प्रतिष्ठैकं निधनꣳ स्वर्ग ऽएव लोकस्तस्मात्स्वर्ज्योतिर्निधनानि ॥ ६ ॥ अथैनꣳ हिरण्यशकलैः प्रोक्षति । अत्रैष सर्वोऽग्निः संस्कृतस्तस्मिन्देवा ऽएतदमृतꣳ रूपमुत्तममदधुस्तथैवास्मिन्नयमेतदमृतꣳ * रूपमुत्तमं दधाति ॥ ७ ॥ यद्वेवैनꣳ हिरण्यशकलैः † प्रोक्षति । एतद्वाऽअस्मिन्नदोऽमूं पुरस्ताद्दम्म्यां तनूं मध्यतो दधाति रुक्मं च पुरुषं चाथैनमेतत्सर्वमेवोपरिष्टाद्दम्म्यया तन्वा प्रच्छादयति ॥ ८ ॥ द्वाभ्यां–द्वाभ्याꣳ शताभ्याम् । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदमृतꣳ रूपमुत्तमं दधाति पञ्चकृत्वः पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदमृतꣳ रूपमुत्तमं दधाति सहस्रेण सर्वं वै सहस्रꣳ सर्वेणैवास्मिन्नेतदमृतꣳ रूपमुत्तमं दधाति ॥ ९ ॥ पश्चादुग्रे प्राङ् तिष्ठन् । अथोत्तरतो दक्षिणाथ पुरस्तात्प्रत्यङ्ङथ जघनेन परीत्य

---

* 'रूपमुपतमम्' इति 'क' पुस्तके ।

† "पुरुषाभिहोमवत्तिष्ठन्नग्निं प्रोक्षति हिरण्यशकलसहस्रेण शते द्वे-द्वे प्रकिरति सहस्रस्येति [illegible] सहस्रस्येति प्रतिमन्त्रम्" ( का० श्रौ० सू० १७. १२. २६ )

दक्षिणत ऽउदङ् तिष्ठँस्तद्दक्षिणावृत्तद्धि देवत्राथानुपरीत्य पश्चात्प्राङ् तिष्ठँस्तथो हास्यैतत्प्रागेव कर्म्म कृतं भवति ॥ १० ॥ '(1)सहस्रस्य प्रमासि । सहस्रस्य प्रतिमासि सहस्रस्योन्मासि साहस्रोऽसि सहस्राय त्वे'ति सर्वं वै सहस्रꣳ सर्वमसि सर्वस्म्मै त्वेत्येतत् ॥ ११ ॥ अथातश्चित्च-तिपुरीषाणामेव मीमाꣳसा । अयमेव लोकः प्रथमा चितिः पशवः पुरीषं स यत्प्रथमां चितिं पुरीषेण प्रच्छादयतीमं तल्लोकं पशुभिः प्रच्छादयति ॥ १२ ॥ अन्तरिक्षमेव द्वितीया चितिः । वयाꣳसि पुरीषं स यद् द्वितीयां चितिं पुरीषेण प्रच्छादयत्यन्तरिक्षं तद्वयोभिः प्रच्छादयति ॥ १३ ॥ द्यौरेव तृतीया चितिः । नक्षत्राणि पुरीषं स यत्तृतीयां चितिं पुरीषेण प्रच्छादयति दिवं तन्नक्षत्रैः प्रच्छादयति ॥ १४ ॥ यज्ञ ऽएव चतुर्थी चितिः । दक्षिणाः पुरीषं स यच्चतुर्थीं चितिं पुरीषेण प्रच्छादयति यज्ञं तद्दक्षिणाभिः प्रच्छादयति ॥ १५ ॥ यजमान ऽएव पञ्चमी चितिः । प्रजा पुरीषं स यत्पञ्चमीं चितिं पुरीषेण प्रच्छादयति यजमानं तत्प्रजया प्रच्छादयति ॥ १६ ॥ स्वर्ग्ग ऽएव लोकः षष्ठी चितिः । देवाः पुरीषं स यत्षष्ठीं चितिं पुरीषेण प्रच्छादयति स्वर्ग्गं तल्लोकं देवैः प्रच्छादयति ॥ १७ ॥ अमृतमेव सप्तमी चितिः । तामुत्तमामुपदधात्यमृतं तदस्य सर्वस्यो-त्तमं दधाति तस्मादस्य सर्वस्यामृतमुत्तमं तस्माद्देवा-

(१) शु० य० सं० अ० १४ क० १७ ।

ऽअनन्तर्हितास्तस्मादु तेऽमृता ऽइत्यधिदेवतम् ॥ १८ ॥ अथाध्यात्मम् । यैवेयं प्रतिष्ठा यश्चायमवाङ् प्राणस्तत्प्रथमा चितिर्म्माᳬसं पुरीषं रुयत्प्रथमां चितिं पुरीषेण प्रच्छादयत्येतदस्य तदात्मनो माᳬसैः सञ्छादयतीष्टका ऽउपधायास्थीष्टका ऽअस्थि तन्माᳬसैः सञ्छादयति नाधस्तात्सञ्छादयति तस्मादिमे प्राणा ऽअधस्तादसञ्छन्ना ऽउपरिष्टात्तु प्रच्छादयत्येतदस्य तदात्मन ऽउपरिष्टान्माᳬसैः सञ्छादयति तस्मादस्यैतदात्मन ऽउपरिष्टान्माᳬसैः सञ्छन्नं नावकाशते ॥ १९ ॥ यदूर्द्ध्वं प्रतिष्ठाया ऽअवाचीनं मध्यात् । तद् द्वितीया चितिर्म्माᳬसं पुरीषं रुयद् द्वितीयां चितिं पुरीषेण प्रच्छादयत्येतदस्य तदात्मनो माᳬसैः सञ्छादयतीष्टका ऽउपधायास्थीष्टका ऽअस्थि तन्माᳬसैः सञ्छादयति पुरीष ऽउपदधाति पुरीषेण प्रच्छादयत्येतदस्य तदात्मन ऽउभयतो माᳬसैः सञ्छादयति तस्मादस्यैतदात्मन ऽउभयतो माᳬसैः सञ्छन्नं नावकाशते ॥ २० ॥ मध्यमेव तृतीया चितिः । यदूर्द्ध्वं मध्यादवाचीनं ग्रीवाभ्यस्तच्चतुर्थी चितिर्ग्रीवा ऽएव पञ्चमी चितिः शिर ऽएव षष्ठी चितिः प्राणा ऽएव सप्तमी चितिस्तामुत्तमामुपदधाति प्राणाँस्तदस्य सर्वस्योत्तमान्दधाति तस्मादस्य सर्वस्य प्राणा ऽउत्तमाः पुरीष ऽउपदधाति माᳬसं वै पुरीषं * माᳬसे तत्प्राणा-

* 'माᳬसेन' इति 'ग–ज' पुस्तकयोः ।

न्प्रतिष्ठापयति नोपरिष्टात्प्रच्छादयति तस्मादिमे प्राणा ऽउपरिष्टादसञ्छन्नाः ॥ २१ ॥ (D)

सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥ ४ ॥ कण्डिकासंख्या १०९ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

24.8.07

* चितिनामाष्टमं काण्डं समाप्तम् ॥ ८ ॥



(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का॰ श॰ ११. २. ४ ।

* अस्मिन्काण्डे कण्डिकासंख्या ४३७ ।

# अथ साग्निचितिनाम नवमं काण्डम्



अस्मिन् काण्डे प्रतिपाद्या विषयाः— शतरुद्रियहोमविधानम्, चित्यपरिषेकः, वसोर्धाराहोमः, वाजप्रसवीयहोमः राष्ट्रभृद्धोमादि, धिष्ण्यचयनम्, पुनश्चितिः, चित्युपस्थानं चेति ।



[ शतरुद्रियहोमः ]

ॐ ॥ अथातः शतरुद्रियं * जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः स ऽएषोऽत्र रुद्रो देवता तस्मिन्देवा ऽएतदमृतꣳ रूपमुत्तममदधुः स ऽएषोऽत्र दीप्यमानोऽतिष्ठदन्नमिच्छमानस्तस्माद्देवा ऽअबिभयुर्यद्वै नोऽयं न हिꣳस्यादिति ॥ १ ॥ तेऽब्रुवन् । अन्नमस्मै सम्भराम तेनैनꣳ शमयामेति तस्मा ऽएतदन्नꣳ समभरञ्छान्तदेवत्यं तेनैनमशमयँस्तद्यदेतं देवमेतेनाशमयँस्तस्माच्छान्तदेवत्यꣳ शान्तदेवत्यꣳ ह वै तच्छतरुद्रियमित्याचक्षते परोक्षं परोक्षकामा हि देवास्तथैवास्मिन्नयमेतदमृतꣳ रूपमुत्तमं दधाति स ऽएषोऽत्र दीप्यमानस्तिष्ठत्यन्नमिच्छमानस्तस्मा ऽएतदन्नꣳ सम्भरति शान्तदेवत्यं तेनैनꣳ शमयति ॥ २ ॥ जर्त्तिलैर्जुहोति । जायत ऽएष ऽएतद्य-

---

* शतरुद्रियहोम उत्तरपक्षस्याऽपरस्याꣳ स्रक्त्यां परिश्रित्स्वर्कपर्णेनाऽर्ककाष्ठेन शातयन् सन्ततं जर्तिलमिश्रान् गवेधुकासक्तूनजाक्षीरमेके तिष्ठन्नुदङ् 'नमस्त' इत्यध्यायेन ( का० श्रौ० सू० १८. १. १ ) ।

चीयते स ऽएष सर्वस्म्मा ऽअन्नाय जायत ऽउभयम्वेतदन्नं ख्यज्जर्त्तिला यच्च ग्ग्राम्म्यं यच्चारण्ण्यं ख्यदुह तिलास्तेन ग्ग्राम्म्यं ख्यदकृष्टे पच्च्यन्ते तेनारण्ण्यमुभयेनैवैनमेतदन्नेन प्प्रीणाति ग्ग्राम्म्येण चारण्ण्येन च ॥३॥ अर्क्कपर्ण्णेन जुहोति। अन्नमर्क्कोऽन्नेनैवैनमेतत्प्रीणाति ॥ ४॥ परिश्रित्सु जुहोति। अग्नय ऽएते यत्परिश्रितस्तथो हास्यैता ऽअग्निमत्त्येवाहुतयो हुता भवन्ति ॥ ५ ॥ यद्वेवैतच्छतरुद्रियं जुहोति। प्रजापतेर्व्विस्रस्ताद्देवता ऽउदक्रामँस्तमेक ऽएव देवो नाजहान्मन्न्युरेव सोऽस्मिन्नन्तर्व्वितोऽतिष्ठत्सोऽरोदीत्तस्य यान्न्यश्रूणि प्प्रास्कन्दँस्तान्यस्मिन्न्मन्न्यौ प्प्रत्यतिष्ठन्त्सऽएव शतशीर्षा रुद्रः समभवत्सहस्राक्षः शतेषुधिरथ याऽअन्न्या व्विप्प्रुषोऽपतँस्ता ऽअसङ्ख्याता सहस्राणीमाँल्लोकाननुप्प्राविशँस्तद्यद्रुदितात्समभवँस्तस्म्माद्रुद्राः सोऽयः शतशीर्षा रुद्रः सहस्राक्षः शतेषुधिरधिज्यधन्न्वा प्प्रतिहितायी भीषयमाणोऽतिष्ठदन्नमिच्छमानस्तस्म्माद्देवा ऽअबिभयुः ॥ ६ ॥ ते प्प्रजापतिमब्रुवन्। अस्म्माद्वै बिभीमो यद्वै नोऽयं न हिंस्यादिति सोऽब्रवीदन्नमस्म्मै सम्भरत तेनैनः शमयतेति तस्म्मा ऽएतदन्नः समभरञ्छतरुद्रियं तेनैनमशमयँस्तद्यदेतः शतशीर्षाणः रुद्रमेतेनाशमयँस्तस्म्माच्छतशीर्षरुद्रशमनीयः शतशीर्षरुद्रशमनीयः ह वै तच्छतरुद्रियमित्त्याचक्षते परोक्षं परोक्षकामा हि देवास्तथैवास्म्मा ऽअयमेतदन्नः सम्भरति शतरुद्रियं तेनैनः

शमयति ॥ ७ ॥ गवेधुकासक्तुभिर्जुहोति । यत्र वै सा देवता विस्रस्ताशयत्ततो गवेधुकाः समभवन्त्स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥ ८ ॥ अर्कपर्णेन जुहोति । एतस्य वै देवस्याशयादर्कः समभवत्स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥ ९ ॥ परिश्रित्सु जुहोति । लोमानि वै परिश्रितो न वै लोमसु विषं न किञ्चन हिनस्त्युत्तरार्द्धेऽग्नेरुदङ् तिष्ठञ्जुहोत्येतस्याꣳ ह दिश्येतस्य देवस्य गृहाः स्वायामेवैनमेतद्दिशि तत्प्रीणाति स्वायां दिश्यवयजते ॥ १० ॥ स वै जानुदघ्ने प्रथमꣳ स्वाहाकरोति । अध ऽइव वै तद्यज्जानुदघ्नमध ऽइव तद्यदयं लोकस्तद्य ऽइमं लोकꣳ रुद्राः प्राविशꣳस्तꣳस्तत्प्रीणाति ॥ ११ ॥ अथ नाभिदघ्ने । मध्यमिव वै तद्यन्नाभिदघ्नं मध्यमिवान्तरिक्षलोकस्तद्येऽन्तरिक्षलोकꣳ रुद्राः प्राविशꣳस्तꣳस्तत्प्रीणाति ॥ १२ ॥ अथ * मुखदघ्ने । उपरीव वै तद्यन्मुखदघ्नमुपरीव तद्यदसौ लोकस्तद्येऽमुं लोकꣳ रुद्राः प्राविशꣳस्तꣳस्तत्प्रीणाति स्वाहाकारेणान्नं वै स्वाहाकारोऽन्नेनैवैनानेतत्प्रीणाति ॥ १३ ॥ 'नमस्ते रुद्र मन्यव' ऽइति । स ऽएवास्मिन्त्सोऽन्तर्म्मन्युर्वितातोऽतिष्ठत्तस्माऽएतन्नमस्करो'त्युतो त ऽइषवे नमो बाहुभ्यामुत ते नम'[2] ऽइतीष्वा च हि बाहुभ्यां च भीषयमाणोऽतिष्ठत् ॥ १४ ॥ स ऽएष क्षत्रं देवः । यः स शतशीर्षा समभवद्धिश-

---

* 'मुखदघ्न । ऽउ' इति 'ग–ज' पु० । 'मुखदघ्ने । उ' इति 'क–घ' पुस्तकयोः ।

(१) शु० य० सं० अ० १६ क० १ । (२) शु० य० सं० अ० १६ क० १

ऽइम ऽइतरे ये विप्प्रुड्भ्यः समभवँस्तस्म्मा ऽएतस्म्मै क्षत्रायैता व्विश ऽएतं पुरस्तादुद्धारमुदहरन्न्य ऽएष प्प्रथमोऽनुवाकस्तेनैनमप्प्रीणँस्तथैवास्म्मा ऽअयमेतं पुरस्तादुद्धारमुद्धरति तेनैनं प्रीणाति तस्म्मादेष ऽएकदेवत्त्यो भवति रौद्र ऽएतथ्ं ह्येतेन प्प्रीणाति ॥ १५ ॥ चतुर्दशैतानि यजूथ्ंषि भवन्ति त्त्रयोदश मासाः संवत्त्सरः प्प्रजापतिश्चतुर्दशः प्प्रजापतिरग्निरुर्यावानग्निर्य्यावत्त्यस्य मात्त्रा तावतैवैनमेतदन्नेन प्प्रीणाति नमो नम ऽइति यज्ञो वै नमो यज्ञेनैवैनमेतन्नमस्कारेण नमस्यति तस्म्मादु ह नायज्ञियं ब्रूयान्नमस्त ऽइति यथा हैनं ब्रूयाद्यज्ञस्त ऽइति तादृक्तत् ॥ १६ ॥ अथ व्वन्दिभ्भ्यो जुहोति । नमोऽमुष्मै चामुष्मै चेति तद्यथा वै ब्रूयादसौ त्त्वं च न ऽएष च मा हिथ्ंसिष्टमित्त्येवमेतदाह नतराथ्ं हि विदितऽआमन्त्रितो हिनस्ति ॥ १७ ॥ '[१]नमो हिरण्ण्यबाहवे । सेनान्न्ये दिशां च पतये नम' ऽइत्त्येष ऽएव हिरण्ण्यबाहुः सेनानीरेष दिशां पतिस्तद्यत्त्किञ्चात्रैकदेवत्त्यमेतमेव तेन प्प्रीणाति क्षत्त्रमेव तद्विश्श्यपि भागं करोति तस्म्माद्यद्विशस्तस्मिन्न्क्षत्त्रियोऽपि भागोऽथ या ऽअसङ्ख्याता सहस्राणीमाँल्लोकाननुप्प्राविशन्नेतास्ता देवता याभ्भ्य ऽएतज्जुहोति ॥१८॥ अथ जातेभ्भ्यो जुहोति । एतानि ह जातान्न्येते रुद्राऽअनुप्प्रविविशुर्य्यत्त्र-यत्त्रैते तदेवैनानेतत्त्प्रीणात्त्यथो ऽएवथ्ं हैतानि रुद्राणां जातानि देवानां वै विधामनु मनुष्यास्त-

(१) शु० य० सं० अ० १६ क० १७।

स्म्मादु हेमानि मनुष्याणां जातानि यथाजातमेवैनानेतत्प्रीणाति ॥१९॥ तेषां व्वा ऽउभयतो नमस्कारा *ऽअन्न्ये । अन्न्यतरतो नमस्कारा ऽअन्न्ये ते ह ते घोरतरा ऽअशान्ततरा य ऽउभयतो नमस्कारा ऽउभयत ऽएवैनानेतद्यज्ञेन नमस्कारेण शमयति ॥ २० ॥ स वा ऽअशीत्त्यां च स्वाहाकरोति । प्रथमे चानुवाकेऽथाशीत्त्यामथाशीत्त्यां च यानि चोर्द्धानि यजूꣳष्यावतानेब्भ्योऽन्नमशीतयोऽन्नेनैवैनानेतत्प्रीणाति ॥ २१ ॥ अथैतानि यजूꣳषि जपति । 'नमो वः किरिकेब्भ्य' ऽइत्त्येतद्धास्य प्प्रतिज्ञाततमं धाम यथा प्प्रियो वा पुत्रो हृदयं व्वा तस्म्माद्यत्रैतस्म्माद्देवाच्छङ्केत तदेताभिर्व्वाहुतिभिर्जुहुयादुप हैवैतस्य देवस्य प्प्रियं धाम गच्छति तथो हैनमेष देवो न हिनस्ति ॥ २२ ॥ 'नमो वः किरिकेब्भ्य' ऽइति । एते हीदꣳ सर्वं कुर्वन्ति 'देवानाꣳ हृदयेब्भ्य' ऽइत्त्यग्निर्वायुरादित्त्य ऽएतानि ह तानि देवानाꣳ हृदयानि 'नमो विचिन्न्वत्केब्भ्य' ऽइत्त्येते हीदꣳ सर्वं विचिन्न्वन्ति 'नमो विक्षिणत्केब्भ्य' ऽइत्त्येते वै तं विक्षिणन्ति यं विचिक्षीषन्ति 'नम ऽआनिर्हतेब्भ्य' ऽइत्त्येते ह्येब्भ्यो लोकेब्भ्योऽनिर्हताः ॥ २३ ॥ अथोत्तराणि जपति । 'द्रापे ऽअन्धसस्पत' ऽइत्त्येष वै द्रापिरेष वै तं द्रापयति यं दिद्रापयिषत्त्यन्धसस्पत ऽइति सोमस्य पत-

* 'ऽअन्न्ये । ऽन्न्य' इति 'ग-ज' पु० । 'ऽअन्न्ये । अन्न्य' इति 'क-घ' पुस्तकयोः ।

(१) शु० य० सं० अ० १६ क० ४६ । (२) शु० य० सं० अ० १६ क० ४६ । (३) शु० य० सं० अ० १६ क० ४६ । (४) शु० य० सं० अ० १६ क० ४६ । (५) शु० य० सं० अ० १६ क० ४६ । (६) शु० य० सं० अ० १६ क० ४७ ।

ऽइत्त्येत'द्दरिद्र नीललोहिते'ति नामानि चास्यैतानि रूपाणि च नामग्ग्राहमेवैनमेतत्त्प्रीणा'त्यासां प्रजानामेषां पशूनां मा भेर्म्मा रोङ्मो च नः किञ्चनाममदि'ति यथैव यजुस्तथा बन्धुः ॥ २४ ॥ स ऽएष क्षत्त्रं देवः । तस्म्मा ऽएतस्म्मै क्षत्त्रायैता व्विशोऽमुं पुरस्तादुद्धारमुदहरन्न्योऽसौ प्प्रथमोऽनुवाकोऽथास्म्मा ऽएतमुपरिष्ष्टादुद्धारमुदहरँस्तेनैनमप्प्रीणँस्तथैवास्म्मा ऽअयमेतमुपरिष्ष्टादुद्धारमुद्धरति तेनैनं प्रीणाति तस्म्मादुप्प्येष ऽएकदेवत्त्यो भवति रौद्द्र ऽएवैतछ्छ ह्येवैतेन प्प्रीणाति ॥२५॥ सप्तैतानि यजूꣳषि भवन्ति । सप्तचितिकोऽग्निः सप्त्तर्त्तवः संवत्त्सरः संवत्त्सरोऽग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्त्रा तावतैवैनमेतदन्नेन प्प्रीणाति तान्न्युभयान्न्येकविꣳशतिः सम्पद्यन्ते द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्त्य ऽएकविꣳश ऽएतामभिसम्पदम् ॥ २६ ॥ अथावतानाञ्जुहोति । एतद्वा ऽएनान्देवा ऽएतेनान्नेन प्प्रीत्त्वाथैषामेतैरवतानैर्द्धनूꣳष्ष्यवातन्न्वँस्तथैवैनानयमेतदेतेनान्नेन प्प्रीत्त्वाथैषामेतैरवतानैर्द्धनूꣳष्ष्यवतनोति न ह्यवततेन धनुषा कञ्चन हिनस्ति ॥ २७ ॥ तद्वै सहस्रयोजन ऽइति । एतद्ध परमं दूरं यत्त्सहस्रयोजनं तद्यदेव परमं दूरं तदेवैषामेतद्धनूꣳष्ष्यवतनोति ॥ २८ ॥ यद्वेवाह सहस्रयोजन ऽइति । अयमग्निः सहस्रयोजनं न ह्येतस्म्मादुति नेत्त्यन्न्यत्त्परमस्ति तद्यदग्नौ जुहोति तदेवैषाꣳ सहस्रयोजने धनूꣳष्ष्यवतनोति ॥ २९ ॥ 'असङ्ख्याता

(१) शु० य० सं० अ० १६ क० ४७। (२) शु० य० सं० अ० १६ क० ४७।
(३) शु० य० सं० अ० १६ क० ५४,५५।

सहस्राणि । अस्मिन्न्महत्यर्णव' ऽइति यत्र-यत्र ते तदेवैषामेतद्धनूꣳष्यवतनोति ॥ ३० ॥ दशैतानवतानाञ्जुहोति । दशाक्षरा विराड्विराडग्निर्दश दिशो-दिशोऽग्निर्दश प्प्राणाः प्प्राणा ऽअग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैषामेतद्धनूꣳष्यवतनोति॥ ३१ ॥ अथ *प्प्रत्यवरोहाञ्जुहोति । एतद्वा ऽएतदिमाँल्लोकानित ऽऊर्ध्वो रोहति स स पराङिव रोह ऽइयमु वै प्प्रतिष्ठा ते देवा ऽइमां प्रतिष्ठामभिप्प्रत्यायँस्तथैवैतद्यजमान ऽइमां प्रतिष्ठामभिप्प्रत्यैति ॥ ३२ ॥ यद्वेव प्प्रत्यवरोहति । एतद्वा ऽएनानेतत्प्रीणन्नन्ववैति तत ऽएवैतदात्मानमपोद्धरते जीवात्वै तथो हानेनात्मना सर्वमायुरेति ॥ ३३ ॥ यद्वेव प्प्रत्यवरोहति । एतद्वा ऽएतदेतान्रुद्रानित ऽऊर्ध्वान्प्रीणाति तान्पुनरमुतोऽर्वाचः ॥ ३४ ॥ '[1]नमोऽस्तु रुद्रेभ्यो ये दिवी'ति । तद्येऽमुष्मिँल्लोके रुद्रास्तेभ्य ऽएतन्नमस्करोति 'येषां वर्षमिषव' ऽइति वर्षꣳ ह तेषामिषवो वर्षेण ह ते हिꣳसन्ति यं जिहिꣳसिषन्ति ॥ ३५ ॥ '[2]नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्ष' ऽइति । तद्येऽन्तरिक्षलोके रुद्रास्तेभ्य ऽएतन्नमस्करोति 'येषां वात ऽइषव' ऽइति वातो ह तेषामिषवो वातेन ह ते हिꣳसन्ति यं जिहिꣳसिषन्ति ॥ ३६ ॥ 'नमोऽस्तु रुद्रेभ्यो

---

* प्रतिलोमं प्रत्यवरोहान् जुहोति प्रमाणेषु नमोऽस्त्विति प्रतिमन्त्रम् ( का० श्रौ० सू० १८ . १. ५ ।

( १ ) शु० य० सं० अ० १६ क० ६४ । ( २ ) शु० य० सं० अ० १६ क० ६४ । ( ३ ) शु० य० सं० अ० १६ क० ६५ । ( ४ ) शु० य० सं० अ० १६ क० ६५ ( ५ ) शु० य० सं० अ० १६ क० ६६ ।

षे पृथिव्व्यामि'ति। तद्येऽस्मिँल्लोके रुद्रास्तेब्भ्य ऽएतन्न-मस्करोति 'षेषामन्नमिषव' ऽइत्त्यन्नꣳ ह तेषामिषवोऽन्नेन ह ते हिꣳसन्ति षं जिहिꣳसिषन्ति ॥ ३७ ॥ 'तेब्भ्यो दश प्प्राचीः। दश दक्षिणा दश प्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वा' ऽइति * दश-दशेति दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्प्राणाः प्प्राणा ऽअग्निर्ष्यावानग्निर्ष्यावत्त्यस्य मात्रा तावतैवैनानेतदन्नेन प्प्रीणाति ॥ ३८ ॥ षद्वेवाह दश-दशेति। दश वा ऽअञ्जलेरङ्गुलयो दिशि-दिश्श्येवैब्भ्य-ऽएतदञ्जलिं करोति तस्म्मादु हैतद्भीतोऽञ्जलिं करोति 'तेब्भ्यो नमो ऽअस्त्वि'ति तेब्भ्य ऽएव नमस्करोति 'ते नो मृडयन्त्वि'ति त ऽएवास्म्मै मृडयन्ति 'ते षं द्विष्मो षश्च नो द्वेष्टि तमेषां जम्भे दध्म' ऽइति षमेव द्वेष्टि षश्चैनं द्वेष्टि तमेषां जम्भे दधात्त्यमुमेषां जम्भे दधामीति ह ब्रूयाद्यं द्विष्यात्ततोऽह तस्म्मिन्न पुनरस्त्त्यपि तन्नाद्रियेत स्वयं निर्द्दिष्टो ह्येव स षमेवं विद्वेष्टि ॥ ३९ ॥ त्रिष्कृत्त्वः प्प्रत्त्यवरोहति। त्रिवृदग्निर्ष्यावान-ग्निर्ष्यावत्त्यस्य मात्रा तावतैवैनानेतदन्नेन प्प्रीणाति स्वाहाकारेणान्नं वै स्वाहाकारोऽन्नेनैवैनानेतत्प्प्रीणाति त्रिरिति ऽऊर्द्ध्वो रोहति तत्त्षट् तस्योक्तो बन्धुः ॥ ४० ॥ षद्वेव त्रिष्कृत्त्वः प्प्रत्त्यवरोहति। त्रिर्हि कृत्व ऽऊर्द्ध्वो रोहति

* 'दश दशेति' पाठोऽयं 'ग-ज' पुस्तकयोर्नास्ति।

(१) शु० य० सं० अ० १६ क० ६६। (२) शु० य० सं० अ० १६ क० ६६। (३) शु० य० सं० अ० १६ क० ६६। (४) शु० य० सं० अ० १६ क० ६६। (५) शु० य० सं० अ० १६ क० ६६।

तद्यावत्कृत्व ऽऊर्द्ध्वो रोहति तावत्कृत्वः प्प्रत्यवरोहति ॥४१॥ अथ तदर्क्कपर्ण्णं * चात्वाले प्प्रास्यति। एतद्वा ऽएनेनैतदुग्रं कर्म्म करोति तदेतदशान्तं तदेतत्तिरः करोति नेदिदमशान्तं कश्चिदभितिष्ठात्तं नेद्धिनसदिति तस्माच्चात्वाले यद्वेव चात्वालेऽग्निरेष यच्चात्वालस्तथो हैनदेषोऽग्निः सन्दहत्यथातः सम्पदेव ॥ ४२ ॥ तदाहुः। कथमस्यैतच्छतरुद्रियꣳ संवत्सरमग्निमाप्नोति कथꣳ संवत्सरेणाग्निना सम्पद्यत ऽइति षष्टिश्च ह वै त्रीणि च शतान्येतच्छतरुद्रियमथ त्रिꣳशदथ पञ्चत्रिꣳशत्ततो यानि षष्टिश्च त्रीणि च शतानि तावन्ति संवत्सरस्याहानि तत्संवत्सरस्याहान्याप्नोत्यथ यानि त्रिꣳशत्त्रिꣳशन्मासस्य रात्रयस्तन्मासस्य रात्रीराप्नोति तदुभयानि संवत्सरस्याहोरात्राण्याप्नोत्यथ यानि पञ्चत्रिꣳशत्स त्रयोदशो मासः स ऽआत्मा त्रिꣳशदात्मा प्प्रतिष्ठा द्वे प्प्राणा द्वे शिर ऽएव पञ्चत्रिꣳशमेतावान्वै संवत्सर ऽएवमु हास्यैतच्छतरुद्रियꣳ संवत्सरमग्निमाप्नोत्येवꣳ संवत्सरेणाग्निना सम्पद्यत ऽएतावत्य ऽउ वै † शाण्डिलेऽग्नौ मद्ध्यतो यजुष्मत्य ऽइष्टका ऽउपधीयन्तेऽग्नयो हैते पृथग्यदेता ऽइष्टका ऽएवमु हास्यैतेऽग्नयः पृथक् शतरुद्रियेणाभिहुता भवन्ति ॥ ४३ ॥ तदाहुः । कथमस्यैतच्छतरुद्रियं महदुक्थमाप्नोति

* "उत्तरवेदिनिचयार्थं यत्र भूप्रदेशे मृदं खनति स प्रदेशश्चात्वाल उच्यते" (का० श्रौ० सू० १८. १. ६)।

† शाण्डिलेऽग्नौ = शाण्डिलदृष्टेऽग्नौ मध्यवेद्यां षष्ट्युत्तरशतत्रयसङ्ख्या यजुष्मत्य इष्टका उपधीयन्त इत्यर्थः।

कथं महतोक्थेन सम्पद्यत ऽइति षाड्यमूनि पञ्चविंश-शतिर्यजूंष्यभितोऽशीतीः स पञ्चविंशः ऽआत्मा यत्र वाऽ आत्मा तदेव शिरस्तत्पक्षपुच्छान्यथ या ऽअशीतयः सैवाशीतीनामाप्तिरशीतिभिर्हि महदुक्थमाख्यायतेऽथ यदूर्द्ध्वमशीतिभ्यो यदेवादो महत ऽउक्थस्योर्द्ध्वमशीतिभ्य-ऽएतदस्य तदेवसु हास्यैतच्छतरुद्रियं महदुक्थमाप्नोत्येवं महतोक्थेन सम्पद्यते ॥ ४४ ॥ (A)

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ चित्याग्नेः परिषेकादि-विधिः ]

अथैनमतः * परिषिञ्चति । एतद्वा ऽएनं देवाः शतरुद्रियेण शमयित्वाथैनमेतद्भूय ऽएवाशमयँस्तथैवैन†मय-मेतच्छतरुद्रियेण शमयित्वाथैनमेतद्भूय ऽएव शमयति ॥ १ ॥ अद्भिः परिषिञ्चति । शान्तिर्वा ऽआपः शमयत्ये-वैनमेतत्सर्वतः परिषिञ्चति सर्वत ऽएवैनमेतच्छमयति त्रिष्कृत्वः परिषिञ्चति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतच्छमयति ॥ २ ॥ यद्वेवैनं परिषिञ्चति । इमे वै लोका ऽएषोऽग्निरिमाँस्तल्लोकानद्भिः परितनोति समुद्रेण

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. ३. १; कठ० १७. ११, १२, १६ कपिष्ठ० २७. १, २, ६; मै० सं० १०. ९. २, ३, ९; तै० सं० ४. ५. ०, २, ९ ।

* अग्नीत् दक्षिणपक्षस्याऽपरसन्धिसमीपवर्तिन्यात्मभागेऽद्रिं निधाय, तत आरभ्य 'अश्मन्नूर्जम्' इति मन्त्रेणाऽग्निं प्रदक्षिणं स.क्षपुच्छं जलधारया परितः सिञ्चतीति ( का० श्रौ० सू० १८. २. १ ) ।

† 'मेवमेत' इति 'ग-ज' पुस्तकयोः ।

हैनाँस्तत्परितनोति सर्वतस्तस्मादिमाँल्लोकान्त्सर्वतः समुद्रः पर्य्येति दक्षिणावृत्तस्मादिमाँल्लोकान्दक्षिणावृत्समुद्रः पर्य्येति ॥ ३ ॥ अग्नीत्परिषिञ्चति । अग्निरेष यदाग्नीध्रो नो वाऽआत्मात्मानꣳ हिनस्त्यहिꣳसायाऽअश्मनोऽध्यश्मनो ह्यापः प्प्रभवन्ति निकक्षान्निकक्षाद्ध्यापः प्प्रभवन्ति दक्षिणान्निकक्षाद्दक्षिणाद्धि निकक्षादापः प्प्रभवन्ति ॥ ४ ॥ 'अश्मन्नूर्ज्जं पर्वते शिश्रियाणामि'ति । अश्मनि वाऽएषोर्क्पर्वतेषु श्रिता यदापो'ऽद्भ्यऽओषधीभ्यो वनस्पतिभ्योऽअधि सम्भृतं पय' ऽइत्येतस्माद्ध्येतत्सर्वस्मादधि सम्भृतं पय'स्तान्न ऽइषमूर्ज्जं धत्त मरुतः सꣳरराणा' ऽइति मरुतो वै वर्षस्येशते'ऽश्मँस्ते क्षुँद्दि'ति निदधाति * तदश्मनि क्षुधं दधाति तस्मादश्मानाद्योऽथो स्थिरो वाऽअश्मा स्थिरा क्षुत्स्थिरऽएव तत्स्थिरं दधाति 'मयि तं ऽऊर्ग्गि'त्युपादत्ते तदात्मन्नूर्ज्जं धत्ते तथा द्वितीयं तथा तृतीयम् ॥ ५ ॥ निधायोदहरणं त्रिर्विपल्ययते । एतद्वाऽएनमेतल्लघूयतीव यदेनꣳ समन्तं पर्य्येति तस्माऽएवैतन्निह्नुतेऽहिꣳसायै ॥ ६ ॥ यद्वेव विपल्ययते । एतद्वाऽएनमेतदन्ववैति तत ऽएवैतदात्मानमपोद्धरते जीवात्वै तथो हानेनात्मना सर्वमायुरेति ॥ ७ ॥ † त्रिर्विपल्ययते ।

---

(१) शु० य० सं० अ० १७ क० १। (२) शु० य० सं० अ० १७ क० १। (३) शु० य० सं० अ० १७ क० १। (४) शु० य० सं० अ० १७ क० १।
* का० श्रौ० सू० १८. २. २।
(५) शु० य० सं० अ० १७ क० १।
† का० श्रौ० सू० १८. २. ३।

त्रिर्हि कृत्वः पर्य्येति तद्यावत्कृत्वः पर्य्येति तावत्कृत्वो विपल्ययते ॥ ८ ॥ अथ तमश्मानमुदहरणेऽवधाय । एतां दिशꣳ हरन्त्येषा वै नैर्ऋती दिङ् नैर्ऋत्यामेव तद्दिशि शुचं दधाति ॥ ९ ॥ एतद्वा ऽएनं देवाः । शतरुद्रियेण चाद्भिश्च शमयित्वाथास्यैतेन शुचं पाप्मानमपाघ्नꣳस्तथै-वैनमयमेतच्छतरुद्रियेण चाद्भिश्च शमयित्वाथास्यैतेन शुचं पाप्मानमपहन्ति ॥१०॥ बाह्येनाग्निꣳ हरति । इमे वै लोका-ऽएषोऽग्निरेभ्यस्तल्लोकेभ्यो बहिर्द्धा शुचं दधाति बहिर्वेदीयं वै वेदिरस्यै तद् बहिर्द्धा शुचं दधाति ॥११॥ [अर्धप्रपाठकः ५५॥]

स * वेदेर्दक्षिणायाꣳ श्रोणौ । प्राङ् तिष्ठन्दक्षिणा निरस्यति 'यं द्विष्मस्तं ते शुगृच्छत्वि'ति यमेव द्वेष्टि तमस्य शुगृ-च्छत्यमुं ते शुगृच्छत्विति ह ब्रूयाद्यं द्विष्यात्ततो ह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत स्वयं निर्दिष्टो ह्येव स यमेवं विद्वेष्टि यदि न भिद्येत भेत्तवै ब्रूयाद्यदा ह्येव † स भिद्यतेऽथ तꣳ शुगृच्छति यं द्वेष्ट्यथप्रतीक्षमायन्त्यप्रतीक्षमेव तच्छुचं पाप्मानं जहति ॥ १२ ॥ प्रत्येत्येष्टका धेनूः कुरुते । एतद्वा ऽएनं देवाः शतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहत्य प्रत्येत्येष्टका धेनूरकुर्वत तथैवैनमयमेतच्छतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहत्य प्रत्येत्येष्टका धेनूः कुरुते ॥१३॥ आसीनः

* कुम्भेऽद्रिं कृत्वा दक्षिणस्यां वेदिश्रोणौ प्राङ् तिष्ठन् दक्षिणाऽस्यति 'यं द्विष्म' इति (का० श्रौ० सू० १८. २. ४)।

(१) शु० य० सं० अ० १७ क० १ ।

† 'सुमिद्यते' इति 'क' पुस्तके ।

कुर्वीतेत्त्यु हैक ऽआहुः । आसीनो वै धेनुं दोग्धीति तिष्ठँ-स्त्वेव कुर्वीतेमे वै लोका ऽएषोऽग्निस्तिष्ठन्तीव वा ऽइमे लोका-ऽअथो तिष्ठन्वै वीर्य्यवत्तरः ॥१४॥ उदङ् प्राङ् * तिष्ठन् । पुरस्ताद्वा ऽएषा प्प्रतीची यजमानं धेनुरुपतिष्ठते दक्षिणतो वै प्प्रतीचीं धेनुं तिष्ठन्तीमुपसीदन्ति ॥ १५ ॥ स यत्राभ्याप्प्नोति । तदभिमृश्यैतद्यजुर्ज्जपती'[1]मा मे ऽअग्न-ऽइष्टका धेनवः सन्त्वि'त्त्यग्निर्हैतासां धेनुकरणस्येष्टे तस्मा-देतावतीनां देवतानामग्निमेवामन्त्रयत 'ऽएका[2] च दश चा'न्तश्च परार्द्धश्चेत्त्येष हावरार्द्ध्यो भूमा यदेका च दश चाथ हैष परार्द्ध्यो भूमा यदन्तश्च परार्द्धश्चावरार्द्धतश्चैवैना-ऽएतत्परार्द्धतश्च परिगृह्य देवा धेनूरकुर्वत तथैवैना ऽअय-मेतदवरार्द्धतश्चैव परार्द्धतश्च परिगृह्य धेनूः कुरुते तस्मा-दुपि नाद्रियेत बह्वीः कर्त्तुममुत्र वा ऽएष ऽएता ब्रह्मणा यजुषा बह्वीः कुरुतेऽथ यत्सन्तनोति कामानेव तत्सन्तनोति ॥ १६ ॥ यद्वेवेष्टका धेनूः कुरुते । वाग्वा ऽअयमग्निर्वाचा हि चितः स यदाहैका च दश चान्तश्च परार्द्धश्चेति वाग्वा ऽएका वाग्दश वागन्तो वाक्परार्द्धो वाचमेव तद्देवा धेनुमकुर्वत तथैवैतद्यजमानो वाचमेव धेनुं कुरुतेऽथ यत्सन्तनोति वाचमेव तत्सन्तनो'त्त्येता 'मे ऽअग्न ऽइष्टका[3] धेनवः सन्त्वमुत्रामुष्मिँल्लोक ऽइत्त्येतद्वा ऽएना ऽअस्मिँल्लोके धेनूः कुरुतेऽथैना ऽएतदमुष्मिँल्लोके धेनूः कुरुते तथो

* का० श्रौ० सू० १८. २. ९ ।

(१) शु० य० सं० अ० १७ क० २ । (२) शु० य० सं० अ० १७ क० २ ।

(३) शु० य० सं० अ० १७ क० २ ।

हैनमेता ऽउभयोर्ल्लोकयोर्ब्भुञ्जन्त्यस्मिँश्चामुष्मिँश्च ॥ १७ ॥ ‘ऋतव[1] स्थे’ति । ऋतवो ह्येता ‘ऽऋतावृध[2]’ ऽइति स-त्यवृध ऽइत्त्येत‘दृतुष्ठा[3] स्थ ऽऋतावृध’ ऽइत्त्यहोरात्राणि वा ऽइष्टका ऽऋतुषु वा ऽअहोरात्राणि तिष्ठन्ति ‘घृतश्चुतो[4] मधुश्चुत’ ऽइति तदेना घृतश्चुतश्च मधुश्चुतश्च कुरुते ॥ १८ ॥ ‘विराजो[5] नामे’ति । एतद्वै देवा ऽएता इष्टका नामभिरुपाह्वयन्त यथा—यथैना ऽएतदाचक्षते ता ऽएनान-भ्युपावर्त्तन्ताथ लोकम्पृणा ऽएव पराच्च्यस्तस्थुरहित-नाम्न्न्यो निमिमिहत्त्यस्ता विराजो नामाकुर्वत ता ऽएनान-भ्युपावर्त्तन्त तस्म्माद्दश—दशेष्टका ऽउपधाय लोकम्पृण-याभिमन्त्रयते तदेना विराजः कुरुते दशाक्षरा हि विराट् ‘कामदुघा[6] ऽअक्षीयमाणा’ ऽइति तदेनाः कामदुघा ऽअक्षी-यमाणाः कुरुते ॥ १९ ॥ अथैनं विकर्षति । मण्डूकेनावकया वेतसशाखयैतद्वा ऽएनं देवाः शतरुद्रियेण चाद्भिश्च शमयित्त्वा शुचमस्य पाप्प्मानमपहत्त्याथैनमेतद्भूय ऽएवा-शमयँस्तथैवैनमयमेतच्छतरुद्रियेण चाद्भिश्च शमयित्त्वा शुचमस्य पाप्प्मानमपहत्त्याथैनमेतद्भूय ऽएव शमयति सर्व्वतो विकर्षति सर्व्वत ऽएवैनमेतच्छमयति ॥ २० ॥ यद्वेवैनं विकर्षति । एतद्वै यत्रैतं प्राणा ऽऋषयोग्ग्रेऽग्निः समस्कुर्व्वंस्तमद्भिरवोक्षँस्ता ऽआपः समस्कन्दँस्ते मण्डूका-

(१) शु० य० सं० अ० १७ क० ३ । (२) शु० य० सं० अ० १७ क० ३ । (३) शु० य० सं० अ० १७ क० ३ । (४) शु० य० सं० अ० १७ क० ३ । (५) शु० य० सं० अ० १७ क० ३ । (६) शु० य० सं० अ० १७ क० ३ ।

धाजरममृतमात्मानमकुरुत तथैवैतद्यजमान ऽएकधाजरममृतमात्मानङ्कुरुते ॥ ८ ॥ अथ विकर्णीञ्च स्वयमातृण्णाञ्चोपधाय । हिरण्यशकलैः प्प्रोक्षत्यग्निमभ्यादधाति रूपमेव तत्प्रजापतिर्हिरण्मयमन्तत ऽआत्मनोऽकुरुत तद्यदन्ततस्तस्मादिदमन्त्यमात्मनो रूपन्तस्मादाहुर्हिरण्मयः प्प्रजापतिरिति तथैवैतद्यजमानो रूपमेव हिरण्मयमन्तत ऽआत्मनः कुरुते तद्यदन्ततस्तस्मादिदमन्त्यमात्मनो रूपं तस्माद्ये चैतद्विदुर्ये च न हिरण्मयोऽग्निचिदमुष्मिँल्लोके सम्भवतीत्येवाहुः ॥ ९ ॥ तद्धैतच्छाण्डिल्यश्च साप्तरथवाहणिश्च । आचार्य्यान्तेवासिनौ व्यूदाते रूपमेवास्यैतदिति ह स्माह शाण्डिल्यो लोमानीति साप्तरथवाहणिः ॥ १० ॥ स होवाच शाण्डिल्यः । रूपं वाव लोमवद्रूपमलोमकः रूपमेवास्यैतदिति तद्द्वै तत्तथा यथा तच्छाण्डिल्य ऽउवाच सञ्चितेऽग्निः प्प्रणीयते प्प्रणीतादूर्द्ध्वः समिध ऽआहुतय ऽइति हूयन्ते ॥ ११ ॥ प्प्राणेन वै देवा ऽअन्नमदन्ति । अग्निरु देवानाम्प्राणस्तस्मात्प्राग्देवेभ्यो जुह्वति प्प्राणेन हि देवा ऽअन्नमदन्त्यपानेन मनुष्या ऽअन्नमदन्ति तस्मात्प्रत्यङ्ङ्मनुष्येष्वन्नन्धीयतेऽपानेन हि मनुष्या ऽअन्नमदन्ति ॥ १२ ॥ तदाहुः । न वयसोऽग्निचिदश्नीयाद्वयो वा ऽएष रूपम्भवति योऽग्निञ्चिनुत ऽईश्वर ऽआर्त्तिमार्त्तोस्तस्मान्न वयसोऽग्निचिदश्नीयादिति तद्द्वै काममेवैवंविदश्नीयादग्नेर्वा ऽएष रूपम्भवति योऽग्निञ्चिनुते सर्व्वं वा ऽइदमग्नेरन्नः सर्व्वं म

ऽइदमन्नमित्येवैवँविद्विद्यादिति ॥ १३ ॥ तदाहुः । किन्तदग्नौ क्रियते येन यजमानः पुनर्म्मृत्युमपजयतीत्यग्निर्वा ऽएष देवता भवति योऽग्निश्चिनुतेऽमृतमु वा ऽअग्निः श्रीर्देवाः श्रियङ्गच्छति यशो देवा यशो ह भवति य ऽएवँवेद ॥ १४ ॥ (D)

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

[ अग्निचयनस्य अग्न्याधेयादिसर्वयज्ञात्मकत्वम् ]

सर्वे हैते यज्ञा योऽयमग्निश्चितः । स यत्पशुमालभते तदग्न्याधेयमथ यदुखाᳬं सम्भरति तान्यग्न्याधेयहवीᳬंष्यथ यद्दीक्षते तदग्निहोत्रमथ यद्दीक्षितः समिधावादधाति ते ऽअग्निहोत्राहुती ॥ १ ॥ ते वै सायम्प्रातरादधाति । सायम्प्रातर्ह्यग्निहोत्राहुती जुह्वति समानेन मन्त्रेण समानेन हि मन्त्रेणाग्निहोत्राहुती जुह्वत्यथ यद्द्वनीवाहनञ्च भस्मनश्चाभ्यवहरणन्तौ दर्शपूर्ण्णमासावथ यद्गार्हपत्यञ्चिनोति तानि चातुर्म्मास्यान्यथ यदूर्द्ध्वङ्गार्हपत्यादा सर्वौषधात्ता ऽइष्टयोऽथ यदूर्द्ध्वᳬं सर्वौषधात्प्राचीनञ्चितिभ्यस्ते पशुबन्धा य ऽएवैतेषु यज्ञेषु विष्णुक्रमास्ते विष्णुक्रमा यज्ञप्प्यन्तद्यात्सप्प्रम् ॥ २ ॥ सौम्म्योऽध्वरः प्रथमा चितिः । यत्प्राचीनᳬं सवेभ्यो राजसूयो द्वितीया वाजपेयस्तृतीयाश्वमेधश्चतुर्थ्यग्निसवः पञ्चमी यैश्चितः

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. १. ४ ।

सामभिः परिगायति तन्महाव्रतमथ यत्तत्रोद्गातुः पुरस्ता-ज्जप्यन्तच्छतरुद्रियं वसोर्द्धारा महदुक्थमथ यदूर्द्ध सामभ्यः प्राचीनं वसोर्द्धारायै यदेव तत्र होतुः पुरस्ता-ज्जप्यन्तत्तदथ यदूर्द्धं वसोर्द्धारायै ते गृहमेधा ऽएतावन्तो वै सर्वे यज्ञास्तानग्निनाप्नोति ॥ ३ ॥ अथातो यज्ञवीर्य्या-णामेव। सायम्प्रातर्ह वा ऽअमुष्मिँल्लोकेऽग्निहोत्रहुदश्नाति तावती ह तस्मिन्नयज्ञ ऽऊर्ग्गर्द्धमासेऽर्द्धमासे दर्शपूर्ण्णमा-सयाजी चतुर्षु-चतुर्षु मासेषु चातुर्म्मास्ययाजी षट्सु षट्सु पशुबन्धयाजी सँवत्सरे सँवत्सरे सोमयाजी शते-शते सँवत्सरेष्वग्निचित्कामश्नाति काममन्न तद्धै-तद्यावच्छतꣳ सँवत्सरास्तावदमृतमनन्तमपर्य्यन्तꣳ स यो हैतदेवं वेदैवꣳ हैवास्यैतदमृतमनन्तमपर्य्यन्तम्भवति तस्य यदुपीषीकयेवोपहन्यात्तदेवास्यामृतमनन्तमपर्य्यन्त-म्भवति ॥ ४ ॥ (E)

प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

[ चित्याग्नेः पक्षिरूपत्वम्, तत्पक्षपुच्छयोः प्रमाणं च ]

प्रजापतिः स्वर्ग्गँल्लोकमजिगाꣳसत् । सर्वे वै पशवः प्रजापतिः पुरुषोऽश्वो गौरविरजः स ऽएतै रूपैर्न्ना-शक्नोत्स ऽएतं वयोविधमात्मानमपश्यदग्निन्तं व्यधत्त

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा-का० श० १२. १. ७।

सोऽनुपसमुह्यानुपाधायोदपिपतिषत्स नाशक्नोत्स ऽउपसमुह्योपाधायोदपतत्तस्मादुप्येतर्हि वयाᳬसि यदैव पक्षा ऽउपसमूहन्ते यदा पत्राणि विसृजन्तेऽथोत्पतितुᳬ शक्नुवन्ति ॥ १ ॥ तँवा ऽअङ्गुलिभिर्म्मिमीते। पुरुषो वै यज्ञस्तेनेदᳬ सर्वम्मितन्तस्यैषावमा मात्रा यदङ्गुलयस्तद्यास्यावमा मात्रा तामस्य तदाप्नोति तयैनन्तन्मिमीते ॥ २ ॥ चतुर्विᳬशत्याङ्गुलिभिर्म्मिमीते । चतुर्विᳬशत्यक्षरा वै गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनन्तन्मिमीते ॥ ३ ॥ स चतुरङ्गुलमेवोभयतोऽन्तरत ऽउपसमूहति । चतुरङ्गुलमुभयतो वाह्यतो व्युदूहति तद्यावदेवोपसमूहति तावद्व्युदूहति तन्नाहैवातिरेचयति नो कनीयᳬ करोति तथा पुच्छस्य तथोत्तरस्य पक्षस्य ॥ ४ ।
अथ निर्ण्णामौ पक्षयोᳬ करोति । निर्ण्णामौ हि वयसᳬ पक्षयोर्भवतो वितृतीये वितृतीये हि वयसᳬ पक्षयोर्न्निर्ण्णामौ भवतोऽन्तरे वितृतीयेऽन्तरे हि वितृतीये वयसᳬ पक्षयोर्न्निर्ण्णामौ भवतᳬ स चतुरङ्गुलमेव पुरस्तादुदूहति चतुरङ्गुलम्पश्चादुपसमूहति तद्यावदेवोदूहति तावदुपसमूहति तन्नाहैवातिरेचयति नो कनीयᳬ करोति ॥ ५ ॥ स तस्मिन्निर्ण्णामे एकामिष्टकामुपदधाति तद्येयं वयसᳬ पततो निर्ण्णामादेका नाड्युपशेते तान्तत्करोत्यथो ऽइदम् ॥ ६ ॥ अथ वक्रौ पक्षौ करोति । वक्रौ हि वयसᳬ पक्षौ भवतᳬ स चतुरङ्गुलमेव पश्चादुदूहति चतुरङ्गुलम्पुरस्तादुपसमूहति तद्यावदेवोदूहति तावदुपसमूहति तन्नाहैवातिरेचयति

नो कनीयः करोति ॥ ७ ॥ अथ रूपमुत्तमङ्करोति । अत्रैष सर्व्वोऽग्निः सँस्कृतस्तस्मिन्देवा ऽएतद्रूपमुत्तम-मदधुस्तथैवास्मिन्नयमेतद्रूपमुत्तमन्दधाति स सहस्र-मृज्वालिखिता ऽइष्टकाः करोति सहस्रमित्यालिखिताः सहस्रमित्यलिखिताः ॥ ८ ॥ अथ पञ्चमीञ्चितिमुपधाय । अथाग्निं व्विमिमीते स मद्ध्यमे व्वितृतीये सहस्रमृज्ज्वालिखिता ऽइष्टका ऽउपदधाति तद्यानीमानि व्वयसः प्प्रत्यञ्चि शीर्ष्ण ऽआपुच्छादृजूनि लोमानि तानि तत्करोति ॥९॥ अथ सहस्र-मित्यालिखिता दक्षिणत ऽउपदधाति । तद्यानीमानि व्वयसो दक्षिणतो व्वक्राणि लोमानि तानि तत्करोति ॥ १० ॥ अथ सहस्रमित्यालिखिता ऽउत्तरत ऽउपदधाति । तद्या-नीमानि व्वयस ऽउत्तरतो व्वक्राणि लोमानि तानि तत्करोति सहस्रेण सर्व्वं व्वै सहस्रः सर्व्वेणैवास्मिन्नेतद्रूपमुत्तमन्द-धाति त्रिभिः सहस्रैस्त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्रूपमुत्तमन्दधाति ॥ ११ ॥ (A)

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



चित्याग्नेः सप्तपुरुषप्रमाणत्वम्, पक्षपुच्छयोश्चारत्नि-वितस्तिप्रमाणत्वम् ]

यान्न्वै तान्त्सप्प्त पुरुषान् । एकम्पुरुषमकुर्व्वन्त्स प्प्रजापतिरभवत्स प्प्रजा ऽअसृजत स प्प्रजाः सृष्ट्वोर्द्ध्व ऽउदक्क्रामत्स ऽएतँल्लोकमगच्छद्यत्रैष ऽएतत्तपति नो ह तर्ह्यन्न्य ऽएतस्म्मादत्र यज्ञिय ऽआस तन्देवा यज्ञेनैव

(A) एतद्ब्राह्मणस्थाविषया अभ्यन्त्राऽप्युपलभ्यन्ते यथा—का० श० १२. २. १ ।

यष्टुमद्रियन्त ॥ १ ॥ तस्मादेतदृषिणाऽभ्यनूक्तम् । 'यज्ञेन यज्ञमयजन्त देवा, इति यज्ञेन हि तँ यज्ञमयजन्त 'देवास्तानि धर्म्माणि प्रथमान्यासन्नि'ति ते हि धर्म्माः प्रथमेऽक्रियन्त 'ते ह नाकम्महिमानः सचन्न्ते'ति स्वर्गो वै लोको नाको देवा महिमानस्ते देवाः स्वर्गं लोकः सचन्त ये तँ यज्ञमयजन्नित्येतत् ॥ २ ॥ 'यत्र पूर्वे साध्याः सन्ति देवा' इति । प्राणा वै साध्या देवास्त एतमग्र एवमसाधयन्नेतदेव बुभूषन्तस्त उ एवाप्येतर्हि साधयन्ति पश्चेदमन्न्यदभवद्यजत्रममर्त्यस्य भुवनस्य भूनेति पश्चाद्धैवेदमन्न्यद्यज्ञियमास यत्किञ्चामृतम् ॥ ३ ॥ ॥ ३ ॥ सुपर्णो अङ्ग सवितुर्गरुत्मान् । पूर्वो जातः स उ अस्यानु धर्म्मेति प्रजापतिर्वै सुपर्णो गरुत्मानेष सवितैतस्य प्रजापतिरनु धर्म्ममित्येतत् ॥ ४ ॥ स वै सप्तपुरुषो भवति । सप्तपुरुषो ह्ययम्पुरुषो यच्चत्वार आत्मा त्रयः पक्षपुच्छानि चत्वारो हि तस्य पुरुषस्यात्मा त्रयः पक्षपुच्छानि ॥ ५ ॥ तँ वा उद्बाहुना पुरुषेण मिमीते । पुरुषो वै यज्ञस्तेनेदँ सर्वम्मितन्तस्यैषा परमा मात्रा यदुद्बाहुस्तद्यास्य परमा मात्रा तामस्य तदाप्नोति तयैनन्तन्मिमीते तत्रोप यत्प्रपदेनाभ्युच्छ्रितो भवति तत्परिश्रिद्भिराप्नोति तस्मादु बाह्वेनैव लेखाम्परिश्रिद्भ्यः खनेत् ॥ ६ ॥ अथ पक्षयोररत्नी उपादधाति ।

(१) शु० य० सं० अ० ३१ क० १६ । (२) शु० य० सं० अ० ३१ क० १६ । (३) शु० य० सं० अ० ३१ क० १६ । (४) शु० य० सं० अ० ३१ क० १६ ।

पक्षयोस्तद्द्वीरुर्षन्दधाति बाहू वै पक्षौ बाहुभ्यामु वा ऽअन्नमद्यते ऽन्नायैव तमवकाशङ्करोति तद्यत्पक्षयोररत्नी ऽउपादधात्यरत्निमात्राद्ध्यन्नमद्यते ॥ ७ ॥ अथ पुच्छे वितस्तिमुपादधाति । प्रतिष्ठायान्तद्वीरुर्षन्दधाति प्रतिष्ठा वै पुच्छꣳ हस्तो वितस्तिर्हस्तेन वा ऽअन्नमद्यते ऽन्नायैव तमवकाशङ्करोति तद्यत्पुच्छे वितस्तिमुपादधात्यन्न ऽएवैनन्तत्प्रतिष्ठापयति तद्यत्तत्र कनीय ऽउपादधात्यन्ने ह्येवैनन्तत्प्रतिष्ठापयत्यथो ऽएतावद्द्वा ऽइदम्मितम्भवत्येतावदिदन्तद्यदेवम्मिमीत ऽएतस्यैवाप्त्यै ॥ ८ ॥ (B)

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ प्राकृतस्य सप्तविधाग्नेर्वैकृतस्यैकशतविधाग्नेश्च वेदिमानम् ]

या वा ऽइयँवेदिः सप्तविधस्य । एषा वेदेम्मात्रा स देवयजनमद्ध्यवसाय पूर्वया द्वारा पत्नीशालम्प्रपद्य गार्हपत्यायोद्धत्यावोक्षति गार्हपत्यस्योद्धतात्सप्त प्राचः प्रक्रमान्प्रक्रामति ततः प्राञ्चं व्यामं विमिमीते तस्य मद्ध्य ऽआहवनीयायोद्धत्यावोक्षति पूर्वार्द्धाद्व्यामस्य त्रीन्प्राचः प्रक्रमान्प्रक्रामति स वेद्यन्तः ॥ १ ॥ *
ते वा ऽएते । व्यामैकादशाः प्रक्रमा ऽअन्तरा वेद्यन्तञ्च गार्हपत्यञ्चैकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीरुर्षन्त्रिष्टुब्वज्रे-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. २, २; ऋ० सं० २. ३. २३ ॥

* अन्नशतम् ५२०० ।

णैवैतद्वीर्य्येण यजमानः पुरस्ताद्यज्ञमुखाद्रक्षाᳬंसि नाष्ट्रा ऽअपहन्ति ॥ २ ॥ सैषा वेदेर्य्योनिः । एतस्यै वै योनेर्देवा वेदिम्प्राजनयन्नथ य ऽएष व्व्यामः सा गार्हपत्यस्य योनिरेतस्यै वै योनेर्देवा गार्हपत्यम्प्राजनयन्गार्हपत्यादा- हवनीयम् ॥ ३ ॥ स वेद्यन्तात् । षट्त्रिᳬंशत्प्रक्रमाम्प्राचीं वेदिं विमिमीते त्रिᳬंशतम्पश्चात्तिरश्चीञ्चतुर्विᳬंशति- म्पुरस्तात्तन्नवतिः सैषा नवतिप्प्रक्रमा वेदिस्तस्याᳬं सप्त- विधमग्निं विदधाति ॥ ४ ॥ तदाहुः । कथमेष सप्तविध ऽएतया वेद्या सम्पद्यत ऽइति दश वा ऽइमे पुरुषे प्प्राणा- श्चत्वार्य्यङ्गान्न्यात्मा पञ्चदश ऽएवन्द्वितीय ऽएवन्तृतीये षट्सु पुरुषेषु नवतिरथैकः पुरुषोऽत्येति पाङ्क्तो वै पुरुषो लोम त्वङ्माᳬंसमस्थि मज्जा पाङ्क्तो ऽइयं वेदिश्चतस्रो दिश ऽआत्मा पञ्चम्म्येवमेष सप्तविध ऽएतया वेद्या सम्प- द्यते ॥ ५ ॥ तद्धैके । उत्तरा विधा विधास्यन्त ऽएताँश्च प्प्रक्रमानेतञ्च व्व्याममनुवर्द्धयन्ति योनिमनुवर्द्धयाम ऽइति न तथा कुर्य्यान्न वै जातङ्गर्ब्भं य्योनिरनुवर्द्धते यावद्वाव योनावन्तर्ग्गर्ब्भो भवति तावदेव योनिर्व्वर्द्धत ऽएतावत्त्यु वा ऽअत्र गर्ब्भस्य व्वृद्धिः ॥ ६ ॥ ते ये ह तथा कुर्व्वन्ति । एतᳬं ह ते पितरम्प्रजापतिᳬं सम्पदश्च्च्यावयन्ति त ऽइष्ट्वा पापीयाᳬंसो भवन्ति पितरᳬं हि प्प्रजा- पतिᳬं सम्पदश्च्च्यावयन्ति सा यावत्त्येषा सप्तविधस्य वेदिस्तावतीञ्चतुर्द्दश कृत्व ऽएकशतविधस्य वेदिं विमि- मीते ॥ ७ ॥ अथ षट्त्रिᳬंशत्प्रक्रमाᳬं रज्जुम्मिमीते ।

ताᳬं सप्तधा समस्यति तस्यै त्रीन्भागान्प्राच ऽउपदधाति निःसृजति चतुरः ॥ ८ ॥ अथ त्रिᳬंशत्प्रक्रमाम्मिमीते । ताᳬं सप्तधा समस्यति तस्यै त्रीन्भागान्पश्चादुपदधाति निःसृजति चतुरः ॥ ९ ॥ अथ चतुर्विᳬंशतिप्रक्रमाम्मिमीते । ताᳬं सप्तधा समस्यति तस्यै त्रीन्भागान्पुरस्तादुपदधाति निः सृजति चतुर ऽइति नु वेदिविमानम् ॥ १० ॥ अथाग्नेर्विधाः । अष्टाविᳬंशतिः प्राञ्चः पुरुषा ऽअष्टाविᳬंशतिस्तिर्य्यञ्चः स ऽआत्मा चतुर्द्दश पुरुषा दक्षिणः पक्षश्चतुर्द्दशोत्तरश्चतुर्द्दश पुच्छञ्चतुर्द्दशारत्नीन्दक्षिणे पक्ष ऽउपदधाति चतुर्द्दशोत्तरे चतुर्द्दश वितस्तीः पुच्छ ऽइति न्वष्टानवतेः पुरुषाणाम्मात्रा साधिमानानाम् ॥ ११ ॥ अथ त्रिपुरुषाᳬं रज्जुम्मिमीते । ताᳬं सप्प्तधा समस्यति तस्यै चतुरो भागानात्मन्नुपदधाति त्रीन्पक्षपुच्छेषु ॥ १२ ॥ अथारत्निमात्रीम्मिमीते । ताᳬं सप्तधा समस्यति तस्यै त्रीन्भागान्दक्षिणे पक्ष ऽउपदधाति त्रीनेवोत्तरे निःसृजति चतुरः ॥ १३ ॥ अथ वितस्तिमात्रीम्मिमीते । ताᳬं सप्तधा समस्यति तस्यै त्रीन्भागान्पुच्छ ऽउपदधाति निःसृजति चतुर ऽएवमेष ऽएकशतविध ऽएतया वेद्या सम्पद्यते ॥ १४ ॥ तदाहुः । षट्त्रयोदश पुरुषा ऽअतियन्ति कथमेते सम्पदो न च्यवन्त ऽइति षा वा ऽएतस्य सप्तमस्य पुरुषस्य सम्पत्सैवैतेषाᳬं सर्वेषाᳬं सम्पत् ॥ १५ ॥ अथो ऽआहुः । प्रजापतिरेवात्मानं विधाय तस्य यत्र–यत्र न्यूनमासीत्तदेतैः सम।-

पूरयत तेनो ऽएवापि सम्पन्न ऽइति॥ १६ ॥ तद्धैके । एकविधम्प्रथमं विदधत्यथैकोत्तरमापरिमितविधान्न तथा कुर्य्यात् ॥ १७ ॥ सप्तविधो वा ऽअग्ग्रे प्प्रजापतिरसृज्यत । स ऽआत्मानं विदधान ऽऐत्स ऽएकशतविधेऽतिष्ठत स यो ऽर्वाचीनꣳ सप्तविधाद्विधत्त ऽएतꣳ ह स पितरम्प्रजापतिं विच्छिनत्ति स ऽइष्ट्वा पापीयान्भवति यथा श्रेयाꣳसꣳ हिꣳसित्वाथ य ऽएकशतविधमतिविधत्तेऽस्मात्स सर्वस्मादृहिर्द्धा निष्पद्यते सर्वमु हीदम्प्रजापतिस्तस्मादु सप्तविधमेव प्प्रथमं विदधीताथैकोत्तरमैकशतविधादेकशतविधन्तु नातिविदधीत नाहैतम्पितरम्प्रजापतिं विच्छिनत्ति नो ऽअस्मात्सर्वस्माद्बहिर्द्धा निष्पद्यते ॥ १८ ॥ (C)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ एकशतविधस्याग्नेरादित्यात्मना स्तुतिः, तस्य प्राकृताग्निसङ्ख्यया सम्पत्तिप्रकारादिश्च ]

सँवत्सरो वै प्प्रजापतिः । अग्निरु सर्वे कामाः सोऽयꣳ सँवत्सरः प्प्रजापतिरकामयताग्निꣳ सर्वान्कामानात्मानमभिसञ्चिन्वीयेति स ऽएकशतधात्मानं व्यधत्त स ऽएकशतधात्मानं विधायाग्निꣳ सर्वान्कामानात्मानमभिसमचिनुत स सर्वे कामा ऽअभवत्तस्मान्न कश्चन बहिर्द्धा कामोऽभवत्तस्मादाहुः सँवत्सरः सर्वे कामा ऽइति न ह सँवत्सरात्कश्चन बहिर्द्धा कामोऽस्ति ॥ १ ॥

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२, २. ३ ।

तथैवैतद्यजमानः । एकशतधात्मानं विधायाग्निः सर्वान्कामानात्मानमभिसञ्चिनुते स सर्वे कामा भवति तस्मान्न कश्चन बहिर्द्धा कामो भवति ॥ २ ॥ स यः स सँवत्सरोऽसौ स ऽआदित्यः । स ऽएष ऽएकशतविधस्तस्य रश्मयः शतं विधा ऽएष ऽएवैकशततमो य ऽएष तपत्यस्मिन्त्सर्वस्मिन्प्रतिष्ठितस्तथैवैतद्यजमान ऽएकशतधात्मानं विधायास्मिन्त्सर्वस्मिन्प्रतितिष्ठति ॥ ३ ॥ अथ वा ऽएकशतविधः । सप्तविधमभिसम्पद्यत ऽएकशतधा वा ऽअसावादित्यो विहितः सप्तसु देवलोकेषु प्रतिष्ठितः सप्त वै देवलोकाश्चतस्रो दिशस्त्रय ऽइमे लोका ऽएते वै सप्त देवलोकास्तेष्वेष प्रतिष्ठितस्तथैवैतद्यजमान ऽएकशतधात्मानं विधाय सप्तसु देवलोकेषु प्रतितिष्ठति ॥ ४ ॥ यद्वेवैकशतविधः । सप्तविधमभिसम्पद्यत ऽएकशतधा वा ऽअसावादित्यो विहितः सप्तस्वृतुषु सप्तसु स्तोमेषु सप्तसु पृष्ठेषु सप्तसु छन्दःसु सप्तसु प्राणेषु सप्तसु दिक्षु प्रतिष्ठितस्तथैवैतद्यजमान ऽएकशतधात्मानं विधायैतस्मिन्त्सर्वस्मिन्प्रतितिष्ठति ॥ ५ ॥ यद्वेवैकशतविधः । सप्तविधमभिसम्पद्यत ऽएकशतधा वा ऽअसावादित्यो विहितः सप्ताक्षरे ब्रह्मन्प्रतिष्ठितः सप्ताक्षरं वै ब्रह्मर्ग्गित्येकमक्षरं यजुरिति द्वे सामेति द्वे ऽअथ यदतोऽन्यद्ब्रह्मैव तद्व्यक्षरं वै ब्रह्म तदेतत्सर्वं सप्ताक्षरम्ब्रह्म तस्मिन्नेष प्रतिष्ठितस्तथैवैतद्यजमान ऽएकशतधात्मानं विधाय सप्ताक्षरे

ब्रह्मन्प्रतितिष्ठति ॥ ६ ॥ तस्मादु सप्तभिः सप्तभिः परिश्रयन्ति । तस्मादेकशतविधः सप्तविधमभिसम्पद्यतेऽथ वै सप्तविध एकशतविधमभिसम्पद्यते ॥ ७ ॥ सप्तविधो वा अग्रे प्रजापतिरसृज्यत । स एतमेकशतधात्मानं विहितमपश्यत्प्राणभृत्सु पञ्चाशदिष्टकाः पञ्चाशद्यजूꣳषि तच्छतꣳ सादनञ्च सूददोहाश्चैकशततमे तत्समानꣳ सादयित्वा हि सूददोहसाधिवदति स एतेनैकशतविधेनात्मनेमाक्षितिमजयदिमां व्यष्टिं व्याश्नुत तथैवैतद्यजमान एतेनैकशतविधेनात्मनेमाक्षितिञ्जयतीमां व्यष्टिं व्यश्नुत एवमु सप्तविध एकशतविधमभिसम्पद्यते स य एवैकशतविधः स सप्तविधो यः सप्तविधः स एकशतविध इति नु विधानाम् ॥ ८ ॥ (D)

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥१॥
कण्डिकासंख्या ॥ ९४ ॥

---

[ चित्याग्नेः कालविध्यादि ]

अथातश्चयनस्यैव । अन्तरोपसदौ चिनोत्येतद्वै देवा अबिभयुर्यद्वै न इममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति त एताः पुरोऽपश्यन्नुपसद इमानेव लोकानिमे वै लोकाः पुरस्ताः प्रापद्यन्त ताः प्रपद्याभयेऽनाष्ट्र एतमात्मानꣳ समस्कुर्वत तथैवैतद्यजमान एताः पुरः प्रपद्या-

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. २. ४ ।

भयेऽनाष्ट्र ऽएतमात्मानꣳ संस्कुरुते ॥ १ ॥ यद्द्वेवान्तरोपसदौ चिनोति । एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्न्युरिति त ऽएतान्वज्रानपश्श्यन्नुपसदो वज्रा वा ऽउपसदस्तान्प्रापद्यन्त तान्प्रपद्याभयेऽनाष्ट्र ऽएतमात्मानꣳ समस्कुर्वत तथैवैतद्यजमान ऽएतान्वज्ज्रान्प्रपद्याभयेऽनाष्ट्रऽएतमात्मानꣳ संस्कुरुते ॥ २ ॥ एतदु ह यज्ञे तपः । यदुपसदस्तपो वा ऽउपसदस्तद्यत्तपसि चीयते तस्मात्तापश्चितस्तद्वै यावद्देवोपसद्भिश्चरन्ति तावत्प्रवर्ग्ग्येण सँवत्सरमेवोपसद्भिश्चरन्ति सँवत्सरम्प्रवर्ग्ग्येण ॥ ३ ॥ अहोरात्राणि वा ऽउपसदः । आदित्यः प्प्रवर्ग्ग्योऽमुन्तदादित्यमहोरात्रेषु प्प्रतिष्ठापयति तस्मादेषोऽहोरात्रेषु प्प्रतिष्ठितः ॥ ४ ॥ अथ यदि चतुर्विꣳशतिः । चतुर्विꣳशतिर्वा ऽअर्द्धमासा ऽअर्द्धमासा ऽउपसद ऽआदित्यः प्प्रवर्ग्ग्योऽमुन्तदादित्यमर्द्धमासेषु प्रतिष्ठापयति तस्मादेषोऽर्द्धमासेषु प्प्रतिष्ठितः ॥ ५ ॥ अथ यदि द्वादश । द्वादश वै मासा मासा ऽउपसद ऽआदित्यः प्प्रवर्ग्ग्योऽमुन्तदादित्यम्मासेषु प्प्रतिष्ठापयति तस्मादेष मासेषु प्प्रतिष्ठितः ॥ ६ ॥ अथ यदि षट् । षड्वा ऽऋतव ऽऋतव ऽउपसद ऽआदित्यः प्प्रवर्ग्ग्योऽमुन्तदादित्यमृतुषु प्प्रतिष्ठापयति तस्मादेष ऽऋतुषु प्प्रतिष्ठितः ॥ ७ ॥ अथ यदि तिस्रः । त्रयो वा ऽइमे लोका ऽइमे लोका ऽउपसद ऽआदित्यः प्प्रवर्ग्ग्योऽमुन्तदादित्यमेषु लोकेषु प्प्रतिष्ठापयति तस्मादेष ऽएषु लोकेषु

प्रतिष्ठितः ॥ ८ ॥ अथातश्चितिपुरीषाणामेव मीमाᳩंसा । मासम्प्रथमा चितिम्मासम्पुरीषमेतावान्वासन्तिक ऽऋतौ कामस्तद्यावान्वासन्तिक ऽऋतौ कामस्तन्तत्सर्वमात्मान-मभिसञ्चिनुते ॥ ९ ॥ मासन्द्वितीया । मासम्पुरीषमेता-वान्ग्रैष्म ऽऋतौ कामस्तद्यावान्ग्रैष्म ऽऋतौ कामस्त-न्तत्सर्वमात्मानमभिसञ्चिनुते ॥ १० ॥ मासन्तृतीया । मासम्पुरीषमेतावान्वार्षिक ऽऋतौ कामस्तद्यावान्वार्षिक ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ ११ ॥ मास-ञ्चतुर्थी । मासम्पुरीषमेतावाञ्छारद ऽऋतौ कामस्तद्यावा-ञ्छारद ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥१२॥ अथ पञ्चम्यै चितेः । असपत्ना विराजश्च प्रथमाहमुप-दधाति स्तोमभागा ऽएकैकामन्वहन्ताः सकृत्सादयति सकृत्सूददोहसाधिवदति तूष्णीम्मासᳩं स्तोमभागा-पुरीषमभिहरन्त्येतावान्हैमन्तिक ऽऋतौ कामस्तद्यावान्है-मन्तिक ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ १३ ॥ मासः षष्ठी । मासम्पुरीषमेतावाञ्छैशिर ऽऋतौ कामस्तद्यावाञ्छैशिर ऽऋतौ कामस्तन्तत्सर्वमात्मानमभि-सञ्चिनुत ऽएतावान्वै द्वादशसु मासेषु कामः षट्स्वृतुषु तद्यावान्द्वादशसु मासेषु कामः षट्स्वृतुषु तन्तत्सर्वमा-त्मानमभिसञ्चिनुते ॥ १४ ॥ अथ त्रीण्यहान्युपातियन्ति । षडहः शतरुद्रियञ्जुहोति षडहरुपवसथो षडहः प्रसुतस्तद्यत्ते-ष्वहःसूपसदा चरन्ति तानि तस्य मासस्याहोरात्राण्यथ यत्प्रवर्ग्येण तदु तस्मिन्नृतावादित्यम्प्रतिष्ठापयत्येतावान्वै

त्रयोदशसु मासेषु कामः सप्प्तस्वृतुषु तद्यावाँस्त्रयोदशसु मासेषु कामः सप्प्तस्वृतुषु तन्तत्सर्व्वमात्मानमभिसञ्चिनुते ॥ १५ ॥ स सँव्वत्सरम्प्रसुतः स्यात्। सर्वं वै सँव्वत्सरः सर्व्वमेकशतविधः सर्व्वेणैव तत्सर्व्वमाप्प्नोति यदि सँव्वत्सरन्न शक्क्नुयाद्विश्वजिता सर्व्वपृष्ठेनातिरात्रेण यजेत तस्मिन्त्सर्व्ववेदसन्दद्यात्सर्व्वं वै विश्वजित्सर्व्वपृष्ठोऽतिरात्रः सर्व्वꣳ सर्व्ववेदसꣳ सर्व्वमेकशतविधः सर्व्वेणैव तत्सर्व्वमाप्प्नोति ॥ १६ ॥ (E)

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ प्रजापतेः प्रकारान्तरेणैकशतसंख्याकत्वादिविधानम् ]

सँव्वत्सरो वै प्प्रजापतिरेकशतविधः । तस्याहोरात्राण्यर्द्धमासा मासा ऽऋतवः षष्टिर्म्मासस्याहोरात्राणि मासि वै सँव्वत्सरस्याहोरात्राण्याप्प्यन्ते चतुर्विꣳशतिरर्द्धमासास्त्रयोदश मासास्त्रय ऽऋतवस्ताः शतं विधाः सँव्वत्सर ऽएवैकशततमी विधा ॥ १ ॥ स ऽऋतुभिरेव सप्प्तविधः । षड्ऋतवः सँव्वत्सर ऽएव सप्प्तमी विधा तस्यैतस्य सँव्वत्सरस्यैतत्तेजो य ऽएष तपति तस्य रश्मयः शतं विधा मण्डलमेवैकशततमी विधा ॥ २ ॥ स दिग्भिरेव सप्प्तविधः । ये प्प्राच्च्यान्दिशि रश्मयः सैका विधा ये दक्षिणायाꣳ सैका ये प्प्रतीच्च्याꣳ सैका य ऽउदीच्च्याꣳ सैका य ऽऊर्द्ध्वायाꣳ

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. २. ४।

सैका येऽर्वाच्च्यार्थं सैका मण्डलमेव सप्तमी विधा ॥ ३ ॥
तस्यैतस्य परस्तात्कामप्रो लोकः । अमृतं वै कामप्रममृत-
मेवास्य तत्परस्तात्तद्यत्तदमृतमेतत्तद्यदेतदर्च्चिर्दीप्यते ॥ ४ ॥
तदेतदह्नसुचित्रꣳ राधः । तदेष सविता विभक्ताभ्यः
प्रजाभ्यो विभजत्यप्योषधिभ्योऽपि वनस्पतिभ्यो
भूय ऽइव ह त्वेकाभ्यः प्रयच्छति कनीय ऽइवैकाभ्य-
स्तद्याभ्यो भूयः प्रयच्छति ता ज्ज्योक्तमाञ्जीवन्ति
याभ्यः कनीयः कनीयस्ताः ॥ ५ ॥ तदेतदृचाभ्युक्तम् ।
'विभक्तारꣳ हवामहे वसोश्चित्रस्य राधसः । सवितारन्नृच-
क्षसमि'ति तदेतत्सर्वमायुर्दीर्घमनन्तꣳ हि तद्यदिदमाहु-
र्दीर्घन्त ऽआयुरस्तु सर्वमायुरिहीत्येष ते लोक ऽएतत्ते-
ऽस्त्विति हैवैतत् ॥ ६ ॥ पश्यन्ती वाग्वदति । तदेतदे-
कशतविधेन वैवाप्तव्यꣳ शतायुतया वा य ऽएवैकशतविधं
विधत्ते यो वा शतं वर्षाणि जीवति स हैवैतदमृतमाप्नोति
तस्माद्ये चैतद्विदुर्ये च न लोक्यता शतायुतेत्येवाहुस्त-
स्माद्दु ह न पुरायुषः स्वकामी प्रेयादलोक्यꣳ हैत ऽउ वाव
लोका यदहोरात्राण्यर्द्धमासा मासा ऽऋतवः संवत्सरः
॥ ७ ॥ तद्येऽर्वाग्विꣳशेषु वर्षेषु प्रयन्ति । अहोरात्रेषु
ते लोकेषु सज्ज्यन्तेऽथ ये परोविꣳशेष्वर्वाक्चत्वारिꣳ-
शेष्वर्द्धमासेषु तेऽथ ये परश्चत्वारिꣳशेष्वर्वाक्षष्टेषु मासेषु
तेऽथ ये परः षष्टेष्वर्वागशीतेष्वृतुषु तेऽथ ये परोऽशीते-
ष्वर्वाक्शतेषु सँवत्सरे तेऽथ य ऽएव शतं वर्षाणि यो वा

(१) शु० य० सं० अ० ३० क० ४।

भूयाᳬंसि जीवति स हैवैतदमृतमाप्नोति ॥ ८ ॥ बहुभिर्ह वै यज्ञैः । एकमहरेका रात्रिर्म्मिता स य ऽएवैकशतविधं विधत्ते यो वा शतं वर्षाणि जीवति स हैवैनदद्धातमामाप्नोत्येष वा ऽएकशतविधं विधत्ते य ऽएनᳬ सँवत्सरं बिभर्त्ति तस्मादेनᳬ सँवत्सरभृतमेव चिन्वीतेत्यधिदेवतम् ॥ ९ ॥ अथाधियज्ञम् । यानमूनेकशतमुद्द्बाहून्पुरुषान्निमिमीते स विधैकशतविधः स चितिभिरेव सप्तविधः षड्तᳬव्यवत्यश्चितयोऽग्निरेव सप्तमी विधा ॥ १० ॥ स ऽउ वा ऽइष्टकैकशतविधः । याः पञ्चाशत्प्रथमा ऽइष्टका याश्चोत्तमास्ताः शतं विधा ऽअथ या ऽएतदन्तेरेणेष्टका ऽउपधीयन्ते सैवैकशततमी विधा ॥ ११ ॥ स ऽउ ऽएव यजुस्तेजाः । यजुरेकशतविधो यानि पञ्चाशत्प्रथमानि यजूᳬंषि यानि चोत्तमानि ताः शतं विधा ऽअथ यान्येतदन्तरेण यजूᳬंषि क्रियन्ते सैवैकशततमी विधैवमु सप्तविध ऽएकशतविधो भवति स यः शतायुतायाङ्कामो य ऽएकशतविधे सप्तविधेन हैव तमेवंविदाप्नोति ॥ १२ ॥ एवं वाव सर्वे यज्ञाः । एकशतविधा ऽअग्निहोत्रादृग्भिरर्यजुर्भिः पदैरक्षरैः कर्म्मभिः सामभिः स यः शतायुतायाङ्कामो य ऽएकशतविधे यः सप्तविधे यज्ञेन-यज्ञेन हैव तमेवंविदाप्नोतीत्यु ऽएवाधियज्ञम् ॥ १३ ॥ अथाध्यात्मम् । पञ्चेमाश्चतुर्विधा ऽअङ्गुलयो द्वे कल्कुषी दोरᳬसफलकश्चाक्षश्च तत्पञ्चविᳬशतिरेवमिमानीतराण्यङ्गानि ताः शतं विधा ऽआत्मैवैकशततमी

विधोक्तः सप्तविधतायै ॥ १४ ॥ स ऽउ ऽएव प्राणतेजाः । प्राणैकशतविधोऽन्वङ्गमङ्गेऽङ्गे हि प्राणः स यः शतायुतायाङ्कामो य ऽएकशतविधे यः सप्तविधे यः सर्वेषु यज्ञेषु विद्यया हैव तमेवंविदाप्नोति सर्वैर्हि यज्ञैरात्मानः सरूपन्नं विदे ॥१५॥ त्रीणि वा ऽइमानि पञ्चविधानि । सँवत्सरोऽग्निः पुरुषस्तेषाम्पञ्चविधा ऽअन्नम्पानꣳ श्रीर्ज्योतिरमृतं यदेव सँवत्सरेऽन्नन्तदन्नं यथा ऽआपस्तत्पानः रात्रिरेव श्रीः श्रियाꣳ हैतद्वात्र्याꣳ सर्वाणि भूतानि सँवसन्त्यहर्ज्योतिरादित्योऽमृतमित्यधिदेवतम् ॥ १६ ॥ अथाधियज्ञम् । यदेवाग्नावन्नमुपधीयते तदन्नं यथा ऽआपस्तत्पानम्परिश्रित ऽएव श्रीस्तद्धि रात्रीणाꣳ रूपं यजुष्मत्यो ज्योतिस्तद्ध्यह्नाꣳ रूपमग्निरमृतन्तद्ध्यादित्यस्य रूपमित्यु ऽएवाधियज्ञम् ॥ १७ ॥ अथाध्यात्मम् । यदेव पुरुषेऽन्नन्तदन्नं यथा ऽआपस्तत्पानमस्थीन्येव श्रीस्तद्धि परिश्रिताꣳ रूपम्मज्जानो ज्योतिस्तद्धि यजुष्मतीनाꣳ रूपम्प्राणोऽमृतन्तद्ध्यग्ने रूपम्प्राणोऽग्निः प्राणोऽमृतमित्यु वा ऽआहुः ॥ १८ ॥ अन्नाद्द्वा ऽअशनाया निवर्त्तते । पानात्पिपासा श्रियै पाप्मा ज्योतिषस्तमोऽमृतान्मृत्युर्निं ह वा ऽअस्मादेतानि सर्वाणि वर्त्तन्तेऽप पुनर्मृत्युञ्जयति सर्वमायुरेति य ऽएवं वेद तदेतदमृतमित्येवामुत्रोपासीतायुरितीह प्राण ऽइति हैक ऽउपासते प्राणोऽग्निः प्राणोऽमृतमिति वदन्तो न तथा विद्याद्ध्रुवं वै तद्यत्प्राण'स्तन्ते विष्याम्यायुषो न मध्यादि'[1]ति-

(१) शु० य० सं० अ० १२ क० ६५ ।

ह्यपि यजुषाऽभ्युक्तन्तस्मादेनदमृतमित्त्येवामुत्रोपासीतायु-
रितीह तथो ह स सर्वमायुरेति ॥ १९ ॥ (F)

द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ गायत्र्यादि-सप्तच्छन्दसां वीर्यरूपत्वेन स्तुतिः ]

प्प्राणो गायत्री । चक्षुरुष्णिग्ग्वागनुष्टुम्मनो बृह-
तीऽश्श्रोत्रम्पङ्क्तिर्य्य ऽएवायम्प्रजननः प्प्राण ऽएष
त्रिष्टुबथ योऽयमवाङ् प्प्राण ऽएष जगती तानि वा
ऽएतानि सप्प्त च्छन्दाथ्ंसि चतुरुत्तराण्ण्यग्ग्नौ क्रियन्ते
॥ १ ॥ प्प्राणो गायत्रीति । तद्य ऽएव प्प्राणस्य महिमा
यद्द्वीर्य्यन्तदेतत्त्सहस्रम्प्राणस्यैवैतद्द्वीर्य्यँय्यद्ध्यस्य चिन्न्वतः
प्प्राण ऽउत्क्रामेत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य
रूपेण सहस्रमेष गायत्रीः सञ्चितो भवति ॥ २ ॥
चक्षुरुष्णिगिति । तद्य ऽएव चक्षुषो महिमा यद्द्वीर्य्य-
न्तदेतत्त्सहस्रञ्चक्षुषऽएवैतद्द्वीर्य्यँय्यद्ध्यस्य चिन्न्वतश्चक्षु-
रुत्क्रामेत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्र-
मेष ऽउष्णिहः सञ्चितो भवति ॥ ३ ॥ व्वागनुष्टुबिति ।
तद्य ऽएव व्वाचो महिमा यद्द्वीर्य्यन्तदेतत्त्सहस्रं व्वाच
ऽएवैतद्द्वीर्य्यँय्यद्ध्यस्य चिन्न्वतो व्वागुत्क्रामेत्तत ऽएवैषो-
ऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेषोऽनुष्टुभः सञ्चितो

(F) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपक्रम्यन्ते यथा—का० श० १२. २. ५ ।

भवति ॥४॥ मनो बृहतीति । तद्य ऽएव मनसो महिमा यद्वीर्य्यन्तदेतत्सहस्रम्मनस ऽएवैतद्वीर्य्यँ ऽयद्ध्यस्य चिन्न्वतो मन ऽउत्क्रामेत्तत ऽएवैषोऽग्निनर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष बृहतीः सञ्चितो भवति ॥५॥ श्रोत्रम्पङ्क्तिरिति। तद्य ऽएव श्रोत्रस्य महिमा यद्वीर्य्यन्तदेतत्सहस्रं श्रोत्रस्यैवैतद्वीर्य्यं ऽयद्ध्यस्य चिन्वतः श्रोत्रमुत्क्रामेत्तत ऽएवैषोऽग्निनर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष पङ्क्तीः सञ्चितो भवति ॥ ६ ॥ यऽएवायम्प्रजननः प्प्राणः । एष त्रिष्टुबिति तद्य ऽएवैतस्य प्प्राणस्य महिमा यद्वीर्य्यन्तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य वीर्य्यं ऽयद्ध्यस्य चिन्वत ऽएष प्प्राण ऽआलुभ्येत्तत ऽएवैषोऽग्निनर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष त्रिष्टुभः सञ्चितो भवति ॥ ७ ॥ अथ सोऽयमवाङ् प्प्राणः । एष जगतीति तद्य ऽएवैतस्य प्प्राणस्य महिमा यद्वीर्य्यन्तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य वीर्य्यं ऽयद्ध्यस्य चिन्वत ऽएष प्प्राण ऽआलुभ्येत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष जगतीः सञ्चितो भवति ॥ ८ ॥ तानि वा ऽएतानि । सप्त च्छन्दाᳬसि चतुरुत्तराण्यन्न्योऽन्न्यस्मिन्न्प्रतिष्ठितानि सप्तेमे पुरुषे प्प्राणा ऽअन्न्योऽन्न्यस्मिन्न्प्रतिष्ठितास्तद्यावन्तमेवँविच्छन्दसाङ्गणमन्न्वाह च्छन्दसश्छन्दसो हैवास्य सोऽनूक्तो भवति स्तुतो वा शस्तो वोपहितो वा ॥ ९ ॥ (E)

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ३. १।

[ वेदवादिप्रश्नोत्तराभ्यां शिरोग्रीवादीनां छन्दोमयत्वनिरूपणम् ]

तदाहुः । किञ्छन्दः का देवताग्नेः शिर ऽइति गायत्री च्छन्दोऽग्निर्द्देवता शिरः ॥ १ ॥ किञ्छन्दः । का देवता ग्ग्रीवा ऽइत्युष्णिक्कछन्दः सविता देवता ग्ग्रीवाः ॥ २ ॥ किञ्छन्दः । का देवतानूकमिति बृहती च्छन्दो बृहस्प्पतिर्द्देवतानूकम् * ॥ ३ ॥ किञ्छन्दः । का देवता पक्षाविति बृहद्रथन्तरे च्छन्दो द्यावापृथिवी देवते पक्षौ ॥४॥ किञ्छन्दः का देवता मद्ध्यमिति त्रिष्टुप्प्छन्द ऽइन्द्रो देवता मद्ध्यम् ॥ ५ ॥ किञ्छन्दः । का देवता श्श्रोणी ऽइति जगती च्छन्द ऽआदित्यो देवता श्श्रोणी ॥ ६ ॥ किञ्छन्दः । का देवता यस्म्मादिदुम्प्राणाद्द्रेतः सिच्च्यत ऽइत्यतिच्छन्दाश्च्छन्दः प्प्रजापतिर्द्देवता ॥ ७ ॥ किञ्छन्दः । का देवता योऽयमवाङ् प्प्राण ऽइति यज्ञायज्ञियञ्छन्दो वैश्श्वानरो देवता ॥ ८ ॥ किञ्छन्दः । का देवतोरूऽइत्त्य-नुष्टुप्प्छन्दो विश्श्वे देवा देवतोरू ॥ ९ ॥ किञ्छन्दः । का देवताष्ठीवन्ताविति पङ्क्तिश्छन्दो मरुतो देवताष्ठी-वन्तौ (A) ॥ १० ॥ किञ्छन्दः । का देवता प्प्रतिष्ठेऽइति द्विपदा च्छन्दो विष्णुर्द्देवता प्प्रतिष्ठे ॥ ११ ॥ किञ्छन्दः । का देवता प्प्राणा ऽइति विच्छन्दाश्छन्दो वायुर्द्देवता प्प्राणाः ॥ १२ ॥ किञ्छन्दः । का देवतोनातिरिक्तानीति न्न्यूनाक्षरा च्छन्द ऽआपो देवतोनातिरिक्तानि सैषात्म-

---

* अनूकशब्दस्य पक्षयोर्मध्यदेहस्य सन्धिः ।
पुच्छमध्ययोश्च सन्धिरित्यर्थः ॥

( A ) ष्ठीवन्तौ जानुप्रदेशावित्यर्थः । सा० भा० ॥

विद्यैवैतन्मयो हैवैता देवता ऽएतमात्मानमभिसम्भवति न हात्रान्न्या लोकश्युतायाऽआशीरस्ति ॥ १३ ॥ (B)

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ धीरमहाशालनाम्नोर्महर्ष्योः प्रश्नप्रतिवचनाभ्यामग्नेः सर्वदेवतासमष्टिरूपप्राणवाय्वात्मकत्वप्रतिपादनम् ]

धीरो ह शातपर्ण्णेयः । महाशालञ्जाबालमुपोत्ससाद तꣳ होवाच किम्मा विद्द्वानुपोदसद ऽइत्यग्निं वेदेति * कमग्निं वेत्थेति वाचमिति यस्तमग्निं वेद किꣳ स भवतीति वाग्ग्मी भवतीति होवाच नैनं वाग्ग्जहातीति ॥ १ ॥ वेत्थाग्निमिति होवाच । किमेव मा विद्द्वानुपोदसद ऽइत्यग्निं वेदेति कमग्निं वेत्थेति चक्षुरिति यस्तमग्निं वेद किꣳ स भवतीति चक्षुष्म्मान्भवतीति होवाच नैनञ्चक्षुर्ज्जहातीति ॥ २ ॥ वेत्थाग्निमिति होवाच । किमेव मा विद्द्वानुपोदसद ऽइत्यग्निं वेदेति कमग्निं वेत्थेति मन ऽइति यस्तमग्निं वेद किꣳ स भवतीति मनस्वी भवतीति होवाच नैनम्मनो जहातीति ॥ ३ ॥ वेत्थाग्निमिति होवाच । किमेव मा विद्द्वानुपोदसद ऽइत्यग्निं वेदेति कमग्निं वेत्थेति श्श्रोत्रमिति यस्तमग्निं वेद किꣳ स भवतीति श्श्रोत्रवान्भवतीति होवाच नैनꣳ श्श्रोत्रञ्जहातीति ॥४॥ वेत्थाग्निमिति होवाच । किमेव मा विद्द्वानुपोदसद

---

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ३. २ ।

* सर्वत्र प्रश्नप्रतिवचनसमाप्तिद्योतका इतिशब्दाः ।

ऽइत्यग्निं वेदेति कमग्निं वेत्थेति य ऽएतत्सर्वमग्निस्तं वेदेति तस्मिन्न्होक्तऽउपावरुरोहाधीहि भोस्तमग्निमिति ॥ ५ ॥ स होवाच । प्प्राणो वाव सोऽग्निर्यदा वै पुरुषः स्वपिति प्प्राणन्तर्हि व्वागप्प्येति प्प्राणश्चक्षुः प्प्राणम्मनः प्प्राणꣳ श्रोत्रं यदा प्प्रबुद्ध्यते प्प्राणादेवाधि पुनर्जायन्त-ऽइत्यद्ध्यात्मम् ॥ ६ ॥ अथाधिदेवतम् । या वै सा व्वागग्निरेव स यत्तच्चक्षुरसौ स ऽआदित्यो यत्तन्मन ऽएष स चन्द्रमा यत्तच्छ्रोत्रन्दिश ऽएव तदथ यः स प्प्राणो-ऽयमेव स वायुर्योऽयम्पवते ॥ ७ ॥ यदा वा ऽअग्निर-नुगच्छति । व्वायुन्तर्ह्यनूद्द्राति तस्म्मादेनमुदवासीदि-त्याहुर्वायुꣳ ह्यनूद्द्राति यदादित्योऽस्तमेति व्वायुन्तर्हि प्प्रविशति वायुश्चन्द्रमा व्वायौ दिशः प्प्रतिष्ठिता व्वायो-रेवाधि पुनर्जायन्ते स यदेवं व्विदस्म्माल्लोकात्प्रैति व्वाचैवा-ग्निमप्प्येति चक्षुषादित्यम्मनसा चन्द्रꣳश्रोत्रेण दिशः प्प्राणेन व्वायुꣳ स ऽएतन्मय ऽएव भूत्वैतासान्देवतानां-यांय्यांकामयते सा भूत्वेलयति ॥ ८ ॥ (M)

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ अनेकैः प्रश्नप्रतिवचनैः पुरुषस्यार्करूपत्वेन स्तुतिः ]

श्वेतकेतुर्हारुणेयः । यक्ष्यमाण ऽआस तꣳ ह पितो-वाच कानृत्विजोऽवृथा ऽइति स होवाचायन्न्वेव मे व्वैश्वा-

---

(१) "अग्निर्वाग्भूत्वा मुखं प्राविशद्" इति श्रुतेः । ऐ० उ० २ । ४ ।

(M) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. ३, ३ ।

वसव्यो होतेति तꣳ ह पप्रच्छ वेत्थ ब्राह्मण वैश्वाव-सव्य ॥ १ ॥ चत्वारि महान्ती३ ऽइति । वेद भो३ ऽइति होवाच वेत्थ चत्वारि महताम्महान्ती३ ऽइति वेद भो३ ऽइति होवाच वेत्थ चत्वारि व्रतानी३ ऽइति वेद भो३ ऽइति होवाच वेत्थ चत्वारि व्रतानां व्रतानी३ ऽइति वेद भो३ ऽइति होवाच वेत्थ चत्वारि क्क्यानी३ ऽइति वेद भो३ ऽइति होवाच वेत्थ चत्वारि क्क्याना-ङ्क्क्यानी३ इति वेद भो३ इति होवाच वेत्थ चतुरोऽर्क्का३निति वेद भो३ ऽइति होवाच वेत्थ चतुरोऽर्क्काणामर्क्का३निति-वेद भो३ ऽइति होवाच ॥ २ ॥ वेत्थार्क्कमिति । अथ वै नो भवान्वक्ष्यतीति वेत्थार्क्कपर्ण्णे ऽइत्यथ वै नो भवान्व-क्ष्यतीति वेत्थार्क्कपुष्पे ऽइत्यथ वै नो भवान्वक्ष्यतीति वेत्थार्क्ककोश्याविंत्यथ वै नो भवान्वक्ष्यतीति वेत्थार्क्कस-मुद्गावित्यथ वै नो भवान्वक्ष्यतीति वेत्थार्क्कधाना ऽइत्यथ वै नो भवान्वक्ष्यतीति वेत्थार्क्काष्ठीलामित्यथ वै नो भवा-न्वक्ष्यतीति वेत्थार्क्कमूलमित्यथ वै नो भवान्वक्ष्यतीति ॥ ३ ॥ स ह वै यत्तदुवाच । वेत्थ चत्वारि महान्ति वेत्थ चत्वारि महताम्महान्तीत्यग्निर्म्महाँस्तस्य महतो महदोषधयश्च वनस्पतयश्च तद्धस्यान्नं वायुर्म्महाँस्तस्य महतो महदापस्तद्धस्यान्नमादित्यो महाँस्तस्य महतो महच्चन्द्रमास्तद्धस्यान्नम्पुरुषो महाँस्तस्य महतो मह-त्पशवस्तद्धस्यान्नमेतान्येव चत्वारि महान्त्येतानि चत्वारि

(१) कः प्रजापतिः, तस्मै हितानि क्यानि ।

महतामहान्त्येव चत्वारि व्रतान्न्येतानि चत्वारि व्रतानां व्रतान्न्येतान्न्येव चत्वारि क्ष्यान्न्येतानि चत्वारि क्ष्यानां क्ष्यान्न्येत ऽएव चत्वारोऽर्क्का ऽएते चत्वारोऽर्क्काणामर्क्काः ॥ ४ ॥ अथ ह वै षत्तदुवाच वेत्थार्क्कमिति पुरुषः हैव तदुवाच । वेत्थार्क्कपर्णे ऽइति कर्णौ हैव तदुवाच वेत्थार्क्कपुष्पे इत्यऽक्षिणी हैव तदुवाच वेत्थार्क्ककोश्याविति नासिके हैव तदुवाच वेत्थार्क्कसमुद्गावित्योष्ठौ हैव तदुवाच वेत्थार्क्कधाना ऽइति दन्तान्हैव तदुवाच वेत्थार्क्काष्ठीलामिति जिह्वाꣳ हैव तदुवाच वेत्थार्क्कमूलमित्यन्नꣳ हैव तदुवाच स ऽएषोऽग्निरर्क्को यत्पुरुषः स यो हैतमेवमग्निमर्क्कम्पुरुषमुपास्तेऽयमहमग्निरर्क्कोऽस्मीति विद्यया हैवास्यैष ऽआत्मन्नग्निरर्क्कश्चितो भवति ॥ ५ ॥ (A)

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ यजुषो विधायकब्राह्मणयोर्निर्वचनम् ]

( तत्राधिदैवाध्यात्मभेदेनार्थप्रतिपादनम्, उपनिषदः स्तुतिः, तत्स्वरूपनिर्वचनादि, उपांश्वनुष्ठानप्रतिपादनं च )

अयं वाव यजुर्योऽयम्पवते । एष हि यन्नेवेदꣳ सर्वञ्जनयत्येतं यन्तमिदमनु प्रजायते तस्माद्वायुरेव यजुः ॥ १ ॥ अयमेवाकाशो जूः । यदिदमन्तरिक्षमेतꣳ ह्याकाशमनु जवते तदेतद्यजुर्वायुश्चान्तरिक्षञ्च यच्च जूश्च तस्माद्यजुरेष ऽएव यदेष ह्येति तदेतद्यजुरृक्सामयोः

---

( A ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. ४. ४ ।

प्प्रतिष्ठितमृक्क्सामे व्वहतस्तस्म्मात्त्समानैरेवाद्ध्वर्य्युर्ग्ग्रहैः कर्म्म करोत्यन्न्यान्न्यन्न्यानि स्तुतशस्त्राणि भवन्ति यथा पूर्व्वाभ्याꣳ स्यत्त्वापराभ्यान्धावयेत्तादृक्तत् ॥ २ ॥ अग्निरेव पुरः । अग्निꣳ हि पुरस्कृत्त्येमाः प्रजा ऽउपासत ऽआदित्य ऽएव चरणं यदा ह्येवैष ऽउदेत्त्यथेदꣳ सर्व्वञ्चरति तदेतद्यजुः सपुरश्चरणमधिदेवतम् ॥ ३ ॥ अथाद्ध्यात्मम् । प्प्राण ऽएव यजुः प्प्राणो हि यन्नेवेदꣳ सर्व्वञ्जनयति प्प्राणं यन्तमिदमनु प्प्रजायते तस्म्मात्प्राण ऽएव यजुः ॥ ४ ॥ अयमेवाकाशो जूः । योऽयमन्तरात्मन्नाकाश ऽएतꣳ ह्याकाशमनु जवते तदेतद्यजुः प्प्राणश्चाकाशश्च यच्च जूश्च तस्म्माद्यजुः प्प्राण ऽएव यत्प्राणो ह्येति ॥ ५ ॥* अन्नमेव यजुः । अन्नेन हि जायतेऽन्नेन जवते तदेतद्यजुरन्ने प्प्रतिष्ठितमन्नँ व्वहति तस्म्मात्त्समान ऽएव प्प्राणेऽन्न्यदन्न्यदन्नन्धीयते ॥ ६ ॥ मन ऽएव पुरः । मनो हि प्प्रथमम्प्राणानाञ्चक्षुरेव चरणञ्चक्षुषा ह्ययमात्त्मा चरति तदेतद्यजुः सपुरश्चरणमधिदेवतञ्चाद्ध्यात्मञ्च प्प्रतिष्ठितꣳ स यो हैतदेवं यजुः सपुरश्चरणमधिदेवतञ्चाद्ध्यात्मञ्च प्प्रतिष्ठितं व्वेद ॥ ७ ॥ अरिष्टो हैवानार्त्तः । स्वस्ति यज्ञस्योदृचमश्नुतेऽथो स्वानाꣳ श्रेष्ठः पुर ऽएता भवत्त्यन्नादोऽधिपतिर्य्य ऽएवं व्वेद ॥ ८ ॥ स ऽउ हैवंविदꣳ स्वेषु प्प्रतिप्प्रति-

(१) 'ज' पुस्तके 'स्यत्वा' इत्यत्र 'स्यन्त्वा' इति पाठो दृश्यते । स तु न समीचीनः, 'स्यन्दू' प्रस्रवणे इत्यस्मात्, क्त्वा प्रत्यये, उदित्वादिड्भावपक्षे 'क्त्वि स्कन्दिस्यन्दोः' ( पा० ६।४।३१ ) इति नकारलोपात् ।

* अत्र शतम् ५३०८ ।

(२) 'ज' पुस्तके 'ऽथो' नास्ति ।

र्ब्बुभूषति न हैवालम्भार्य्येभ्यो भवत्त्यथ य ऽएवैतमनु भवति यो वै तमनु भार्य्यान्बुभूर्षति स हैवालम्भार्य्येभ्यो भवति ॥ ९ ॥ तदेतज्ज्येष्ठम्ब्रह्म । न ह्येतस्म्मात्किञ्चन ज्यायोऽस्ति ज्ज्येष्ठो ह वै श्रेष्ठः स्वानाम्भवति य ऽएवं वेद ॥ १० ॥ तदेतद्ब्रह्मापूर्व्वमपरवत् । स यो हैतदेवम्ब्रह्मापूर्व्वमपरवद्वेद न हास्म्मात्कश्चन श्रेयान्त्समानेषु भवति · श्रेयाꣳसः श्रेयाꣳसो हैवास्म्मादपरपुरुषा जायन्ते तस्म्माद्योऽस्म्माज्ज्यायान्त्स्याद्दिशोऽस्म्मात्पूर्व्वा ऽइत्त्युपासीत तथो हैनन्न हिनस्ति ॥ ११ ॥ तस्य वा ऽएतस्य यजुषः । रस ऽएवोपनिषत्तस्म्माद्यावन्मात्रेण यजुषाद्ध्वर्य्युर्ग्ग्रहङ्गृह्णाति स ऽउभे स्तुतशस्त्रे ऽअनुविभवत्युभे स्तुतशस्त्रे ऽअनुव्व्यश्नुते तस्म्माद्यावन्मात्रऽइवान्नस्य रसः सर्व्वमन्नमवति सर्व्वमन्नमनुव्व्येति ॥ १२ ॥ तृप्तिरेवास्य गतिः । तस्म्माद्यदान्नस्य तृप्यत्त्यथ स गत ऽइव मन्न्यत ऽआनन्द ऽएवास्य विज्ञानमात्मानन्दात्मानो हैव सर्व्वे देवाः सा हैषैव देवानामद्धाविद्या स ह स न मनुष्ष्यो य ऽएवंव्विद्देवानाꣳ हैव स एकः ॥ १३ ॥ एतद्ध स्म वै तद्विद्वान्प्रियव्रतो रौहिणाधन ऽआह । यथुं ब्रान्तमानन्दुस्त ऽआत्मेतो वा ब्राहीतो वेति स ह स्म तथैव ब्राति तस्म्माद्यान्देवेष्व्वाशिषमिच्छेदेतेनैवोपतिष्ठेतानन्दो व ऽआत्मासौ मे कामः स मे समृद्ध्यतामिति सद्ध हैवास्म्मै स काम ऽऋद्ध्यते यत्कामो भवत्त्येताꣳ ह वै तृप्तिमेताङ्गतिमेतमानन्दमेतमात्मानमभिसम्भवति य ऽएवं वेद

॥ १४ ॥ तदेतद्यजुरुपाꣳश्वनिरुक्तम् । प्राणो वै यजुरुपाꣳश्वायतनो वै प्राणस्तद्य ऽएनन्निर्ब्रुवन्तम्ब्रूयादनिरुक्तान्देवतान्निरवोचत्प्राण ऽएनꣳ हास्यतीति तथा हैव स्यात् ॥ १५ ॥ तस्य ह यो निरुक्तमाविर्भावं वेद । आविर्भवति कीर्त्या यशसोपाꣳशु यजुषाꣳह्युर्ग्रहङ्गृह्णाति गृहीतꣳ सन्न ऽआविर्भवत्युपाꣳशु यजुषाग्निश्चिनोति चितꣳ सञ्चित ऽआविर्भवत्युपाꣳशु यजुषा हविर्न्निर्वपति श्रृतन्निष्ट्ठितमाविर्भवत्येवं ख्वल्किञ्चोपाꣳशु करोति कृतन्निष्ट्ठितमाविर्भवति तस्य ह य ऽएतमेवन्निरुक्तमाविर्भावं वेदाविर्भवति कीर्त्या यशसा ब्रह्मवर्चसेन क्षिप्रꣳ ऽउ हैवाविदङ्गच्छति स ह यजुरेव भवति यजुषैनमाचक्षते ॥१६॥(B.

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ प्रजापतेर्भोक्तृत्वमाहवनीयरूपत्वम्, रुक्मपुरुषयोरिन्द्राग्न्यात्मना स्तुत्यादिकञ्च ]

प्रजापतिं विस्रस्तम् । यत्र देवाꣳ समस्कुर्वꣳस्तमुखायां योनौ रेतो भूतमसिञ्चन्योनिर्वा ऽउखा तस्मा ऽएतꣳ संवत्सरे ऽन्नꣳ समस्कुर्वन्योऽयमग्निश्चितस्तदात्मना पर्य्यदधुस्तदात्मना परिहितमात्मैवाभवत्तस्मादुन्नमात्मना परिहितमात्मैव भवति ॥ १ ॥ तथैवैतद्यजमानꣳ । आत्मा

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ३. ५ ।

नमुखायां रुषोनौ रेतो भूतꣳ सिञ्चति योनिर्वा ऽउखा तस्म्मा ऽएतत्त्सँव्वत्सरे ऽन्नꣳ संस्करोति योऽयमग्निश्चित-स्तदात्मना परिदधाति तदात्मना परिहितमात्मैव भवति तस्म्मादुन्नमात्मना परिहितमात्मैव भवति ॥ २ ॥ तन्नि-दधाति । व्वौषडिति व्वौगिति वा ऽएष षडितीदꣳ षट्चिति-कमन्नङ्कृत्त्वास्म्मा ऽअपिदधात्यात्मसम्मितं रुयदु वा ऽआत्मसम्मितमन्नन्तदवति तन्न हिनस्ति यद्भूयो हिनस्ति यद्यत्कनीयो न तदवति ॥ ३ ॥ स ऽएष ऽएवार्कꣳ । यमे-तमत्राग्निमाहरन्ति तस्यैतदन्नङ्क्यं रुषोऽयमग्निश्चित-स्तदुक्थ्यं रुयजुष्ट्र ऽएष ऽएव महाँस्तस्यैतदन्नं व्रतन्तन्म-हाव्रतꣳ सामत ऽएष ऽउ ऽएवोक्तस्यैतदन्नन्थन्तदुक्थ-मृक्तस्तदेतदेकꣳ स त्रेधा क्ल्यायते ॥ ४ ॥ अथेन्द्राग्नी वा ऽअसृज्ज्येताम् । ब्रह्म च क्षत्रञ्चाग्निरेव ब्रह्मेन्द्रꣳ क्षत्रन्तौ सृष्टौ नानैवास्तान्तावब्रूतान्न वा ऽइत्थꣳ सन्तौ शक्ष्यावꣳ प्रजाꣳ प्रजनयितुमेकꣳ रूपमुभावसावेति तावेकꣳ रूपमुभावभवताम् ॥ ५ ॥ तौ यौ ताविन्द्राग्नी । एतौ तौ रुक्ममश्च पुरुषश्च रुक्मम ऽएवेन्द्रꣳ पुरुषोऽग्निस्तौ हिरण्मयौ भवतो ज्ज्योतिर्वै हिरण्यञ्ज्योतिरिन्द्राग्नी ऽअमृतꣳ हिरण्यममृतमिन्द्राग्नी ॥ ६ ॥ तावेताविन्द्राग्नी ऽएव चिन्वन्ति । यद्धि किञ्चेष्टकमग्निरेव तत्तस्म्मात्त-दग्निना पचन्ति यद्धि किञ्चाग्निना पचन्त्यग्निरेव तदुथ यत्पुरीषꣳ स ऽइन्द्रस्तस्म्मात्तदग्निना न पचन्ति नेदग्नि-रेवासन्नेन्द्र ऽइति तस्म्मादेताविन्द्राग्नी ऽएव चितौ ॥ ७ ॥

अथ यश्चिते ऽग्निर्न्निधीयते । तदेकꣳ रूपमुभौ भवतस्त-स्मात्तावेतेनैव रूपेणेमाः प्रजाः प्रजनयतः सैषैकैवेष्ट-काग्निरेव तामेष सर्व्वो ऽग्निरभिसम्पद्यते सैवेष्टकासम्पत्त-देतदेकमेवाक्षरं वौगिति तदेष सर्व्वो ऽग्निरभिसम्पद्यते सैवाक्षरसम्पत् ॥ ८ ॥ तद्धैतत्पश्यन्नृषिरभ्यनूवाद । भूत-म्भविष्यत्प्रस्तौमि महद्ब्रह्मैकमक्षरम्बहु ब्रह्मैकमक्षरमित्ये-तद्ध्येवाक्षरꣳ सर्व्वे देवाः सर्व्वाणि भूतान्यभिसम्पद्यन्ते तदेतद्ब्रह्म च क्षत्रञ्चाग्निरेव ब्रह्मेन्द्रः क्षत्रमिन्द्राग्नी वै विश्वे देवा विड् विश्वे देवास्तदेतद्ब्रह्म क्षत्रं विट् ॥ ९ ॥ एतद्ध स्म वै तद्विद्वाञ्छ्यापर्ण्णः सायका-यन ऽआह । यद्वै म ऽइदङ्कर्म्म समाप्स्यत ममैव प्रजा सल्वानाꣳ राजानो ऽभविष्यन्मम ब्राह्मणा मम वैश्या यत्तु म ऽएतावत्कर्म्मणः समापि तेन म ऽउभयथा सल्वान्प्रजातिरेक्ष्यत ऽइति स ऽएष ऽएव श्रीरेष यश ऽएषो ऽन्नादः ॥ १० ॥ एतद्ध वै तच्छा-ण्डिल्यः । वामकक्षायणाय प्रोच्योवाच श्रीमान्यशस्व्य-न्नादो भविष्यसीति श्रीमान्ह वै यशस्व्यन्नादो भवति य ऽएवं वेद ॥ ११ ॥ स ऽएषो ऽग्निः प्रजापतिरेव । ते देवा ऽएतमग्निम्प्रजापतिꣳ सँस्कृत्याथास्मा ऽएतत्संव-त्सरे ऽन्नꣳसमस्कुर्वन्य ऽएष महाव्रतीयो ग्रहः B ॥ १२ ॥ तमर्कर्युग्र्ग्रहेण गृह्णाति । यद्गृह्णाति तस्माद् ग्रहस्त-

B कात्यायनमहर्षिणाऽपि महाव्रतैकनियतग्रहणं सूत्रितम्, 'महाव्रतमग्निष्टोमः' 'प्राजापत्य उपालम्भ्यः' 'ग्रहं गृह्णाति "विन ऽइन्द्र" वाचस्पतिं विश्वकर्मन्निति' वा', का० श्रौ० सू० अ० १३ । कं० २ सू० २१, २२, २३ ।

स्मिन्नुद्गाता महाव्रतेन रसन्दधाति सर्वाणि हैतानि सामानि यन्महाव्रतन्तदस्मिन्त्सर्वैः सामभी रसन्दधाति तस्मिन्होता महतोक्थेन रसन्दधाति सर्वा हैता ऽऋचो यन्महदुक्थन्तदस्मिन्त्सर्वाभिर्ऋग्भी रसन्दधाति ॥ १३ ॥ ते यदा स्तुवते यदानुशꣳसति । अथास्मिन्नेतं व्वषट्कृते जुहोति व्वौगिति वा ऽएष षडितीदꣳ षड्विधमन्न-ङ्कृत्वास्मा ऽअपिदधात्यात्मसम्मितं यदु वा ऽआत्मसम्मि-तमन्नन्तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ १४ ॥ स ऽएष ऽएवार्क्कः । योऽयमग्नि-श्चितस्तस्यैतदन्नङ्क्यमेष महाव्रतीयो ग्रहस्तदुक्थं यजुष्ट ऽएष ऽएव महाँस्तस्यैतदन्नं व्रतन्तन्महाव्रतꣳ सामत ऽएष ऽउ ऽएवोक्तस्यैतदन्नं* थन्तदुक्थमृक्तस्तदेतदेकꣳ स त्रेधा व्याख्यायते ॥ १५ ॥ स ऽएष संवत्सरः प्रजापति-रग्निः । तस्यार्द्धमेव सावित्राण्यर्द्धं वैश्वकर्म्मणान्यष्टा-वेवास्य कलाः सावित्राण्यष्टौ वैश्वकर्म्मणान्यथ यदेत-दन्तरेण कर्म्म क्रियते स ऽएव सप्तदशः प्रजापतिर्षों वै कला मनुष्याणामक्षरन्तद्देवानाम् ॥ १६ ॥ तद्द्वै लोमेति द्वे ऽअक्षरे । त्वगिति द्वे ऽअसृगिति द्वे मेद ऽइति द्वे माꣳसमिति द्वे स्नावेति द्वे ऽअस्थीति द्वे मज्जेति द्वे ताः षोडश कला ऽअथ य ऽएतदन्तरेण प्राणः सञ्चरति स ऽएव सप्तदशः प्रजापतिः ॥ १७ ॥ तस्मा ऽएतस्मै प्राणाय । एताः षोडश कला ऽअन्नमभिह-

---

* 'ग-ज' पुस्तकयोः 'एवोक्तदन्नं' इति पाठः समुपलभ्यते ।

रन्ति ता यदुानभिहर्त्तुन्ध्रियन्तेऽथैता ऽएव जग्धृवोत्क्रामति तस्मादु हैतदुशिशिषतस्तृप्रमिव भवति प्प्राणैरद्यमानस्य तस्मादु हैतदुपतापी कृश ऽइव भवति प्प्राणैर्हि जग्धो भवति ॥ १८ ॥ तस्मा ऽएतस्मै सप्तदशाय प्रजापतये । एतत्सप्तदशमन्नꣳ समस्कुर्वंन्य ऽएष सौम्योऽध्वरोऽथ या ऽअस्य ताः षोडश कला ऽएते ते षोडशऽर्त्विजस्त-स्मान्न सप्तदशमृत्विजङ्कुर्वीत नेदतिरेचयानीत्यथ य ऽएवात्र रसो या ऽआहुतयो हूयन्ते तदेव सप्तदशमन्नम् ॥ १९ ॥ ते यदा स्तुवते यदानुशꣳसति । अथास्मिन्नेतं वषट्कृते जुहोति वौगिति वा ऽएष षडितीदꣳ षड्विध-मन्नङ्कृत्वास्मा ऽअपिदधात्यात्मसम्मितं यद्वु वा ऽआत्म-सम्मितमन्नन्तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्य-त्कनीयो न तदवति ॥ २० ॥ स ऽएष ऽएवार्कः । योऽय-मग्निश्चितस्तस्यैतदन्नङ्क्यमेष सौम्योऽध्वरस्तदुक्क्यं यजुष्ट ऽएष ऽएव महाँस्तस्यैतदन्नं व्रतन्तन्महाव्रतꣳ सामत ऽएष ऽउ ऽएवोक्थस्तस्यैतदन्नन्थन्तदुक्थमृक्तस्तदेत-दुक्थ स त्रेधा व्यायते स ऽएतेनान्नेन सहोर्द्ध ऽउदक्रामत्स यः स ऽउदक्रामदसौ स ऽआदित्योऽथ येन तेनान्नेन सहोद-क्रामदेष स चन्द्रमाः ॥ २१ ॥ स ऽएष ऽएवार्को य ऽएष तपति । तस्यैतदन्नङ्क्यमेष चन्द्रमास्तदुक्क्यं यजुष्ट ऽएष ऽएव महाँस्तस्यैतदन्नं व्रतन्तन्महाव्रतꣳ सामत ऽएष

---

(१) "षोडशर्त्विजो ब्रह्मोद्गातृ-होत्रध्वर्यु-ब्राह्मणाच्छꣳसि-प्रस्तोतृ-मैत्रावरुण-प्रतिप्रस्थातृ-पोतृ-प्रतिहर्त्रच्छावाक-नेष्टग्नीत्-सुब्रह्मण्य-ग्रावस्तदुन्नेतॄन् वृणीते" का० श्रौ० सू० ७. १. ५।

ऽउ ऽएवोक्कतस्यैतदुन्नन्थन्तदुक्क्थमृक्कस्तदेतदेकꣳ स त्रेधा ख्यायत ऽइत्यधिदेवतम् ॥ २२ ॥ अथाध्यात्मम् । प्प्राणो वा ऽअर्क्कस्तस्यान्नमेव क्कयन्तदुक्कर्यं य्यजुष्टꣳ प्प्राण ऽएव महाँस्तस्यान्नमेव व्रतन्तन्महाव्रतꣳ सामतꣳ प्प्राण ऽउ ऽएवोक्कतस्यान्नमेव थन्तदुक्क्थमृक्कस्तदेतदेकꣳ स त्रेधा ख्यायते स ऽएष ऽएवैषोऽधिदेवतमयमध्यात्मम् ॥ २३ ॥ (B)

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ १०९ ॥



सँवत्सरो वै प्प्रजापतिरग्निꣳ । सोमो राजा चन्द्रमाꣳ स ह स्वयमेवात्मानम्प्रोचे यज्ञवचसे राजस्तम्बायनाय यावन्ति वाव मे ज्योतीꣳषि तावत्त्यो मऽइष्टका इति ॥ १ ॥ तस्य वा ऽएतस्य सँवत्सरस्य प्प्रजापतेꣳ । सप्त च शतानि विꣳशतिश्चाहोरात्राणि ज्योतीꣳषि ता ऽइष्टकाꣳ षष्टिश्च त्रीणि च शतानि परिश्रितꣳ षष्टिश्च त्रीणि च शतानि य्यजुष्मत्त्यꣳ सोऽयꣳ सँवत्सरꣳ प्प्रजापतिꣳ सर्वाणि भूतानि ससृजे यच्च प्प्राणि यच्चाप्प्राणमुभयान्देवमनुष्यान्त्स सर्वाणि भूतानि सृष्ट्वा रिरिचान ऽइव मेने स मृत्त्योर्ब्बिभयाञ्चकार ॥ २ ॥ स हेक्षाञ्चक्रे । कथ-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ८. १ ।

न्व्वहुमिमानि सर्वाणि भूतानि पुनरात्मन्नावपेय पुनरात्मन्दधीय कथन्व्वहुमेवैषाꣳ सर्वेषाम्भूतानाम्पुनरात्मा स्यामिति ॥ ३ ॥ स द्वेधात्मानं व्व्यौहत् । षष्टिश्च त्रीणि च शतान्न्यन्न्यतरस्येष्टका ऽअभवन्नेवमन्न्यतरस्य स न व्व्याप्नोत् ॥ ४ ॥ त्रीनात्मनोऽकुरुत । तिस्रस्तिस्रोऽशीतय ऽएकैकस्येष्टका ऽअभवन्त्स नैव व्व्याप्नोत् ॥ ५ ॥ चतुर ऽआत्मनोऽकुरुत । अशीतिशतेष्टकान्त्स नैव व्व्याप्नोत् ॥ ६ ॥ पञ्चात्मनोऽकुरुत । चतुश्चत्वारिꣳशꣳशतमेकैकस्येष्टका ऽअभवन्त्स नैव व्व्याप्नोत् ॥ ७ ॥ षडात्मनोऽकुरुत । विꣳशतिशतेष्टकान्त्स नैव व्व्याप्नोन्न सप्तधा व्व्यभवत् ॥ ८ ॥ अष्टावात्मनोऽकुरुत । नवतीष्टकान्त्स नैव व्व्याप्नोत् ॥ ९ ॥ नवात्मनोऽकुरुत । अशीतीष्टकान्त्स नैव व्व्याप्नोत् ॥ १० ॥ दशात्मनोऽकुरुत । द्वासप्ततीष्टकान्त्स नैव व्व्याप्नोन्नैकादशधा व्व्यभवत् ॥ ११ ॥ द्वादशात्मनोऽकुरुत । षष्टीष्टकान्त्स नैव व्व्याप्नोन्न त्रयोदशधा व्व्यभवन्न चतुर्दशधा ॥ १२ ॥ पञ्चदशात्मनोऽकुरुत । अष्टाचत्वारिꣳशदिष्टकान्त्स नैव व्व्याप्नोत् ॥ १३ ॥ षोडशात्मनोऽकुरुत । पञ्चचत्वारिꣳशदिष्टकान्त्स नैव व्व्याप्नोन्न सप्तदशधा व्व्यभवत् ॥ १४ ॥ अष्टादशात्मनोऽकुरुत । चत्वारिꣳशदिष्टकान्त्स नैव व्व्याप्नोन्नैकान्न विꣳशतिधा व्व्यभवत् ॥ १५ ॥ विꣳशतिमात्मनोऽकुरुत । षट्त्रिꣳशदिष्टकान्त्स नैव व्व्याप्नोन्नैक-

विꣳशतिधा व्व्यभवन्न द्वाविꣳशतिधा न त्रयोविꣳशतिधा ॥ १६ ॥ चतुर्विꣳशतिमात्मनोऽकुरुत । त्रिꣳशदिष्टकान्त्सोऽत्रातिष्ठत पञ्चदशे व्व्यूहे तद्यत्पञ्चदशे व्व्यूहेऽतिष्ठत तस्मात्पञ्चदशापूर्य्यमाणस्य रूपाणि पञ्चदशापक्षीयमाणस्य ॥ १७ ॥ अथ यच्चतुर्विꣳशतिमात्मनोऽकुरुत । तस्माच्चतुर्विꣳशत्यर्द्धमासꣳ सँव्वत्सरꣳ स ऽएतैश्चतुर्विꣳशत्या त्रिꣳशदिष्टकैरात्मभिर्न्न व्व्यभवत्स पञ्चदशाह्नो रूपाण्यपश्यदात्मनस्तन्वो मुहूर्त्ताँल्लोकम्पृणाꣳ पञ्चदशैव रात्रेस्तद्यन्मुहु त्रायन्ते तस्मान्मुहूर्त्ता ऽअथ यत्क्षुद्राꣳ सन्त ऽइमाँल्लोकानापूरयन्ति तस्माल्लोकम्पृणाꣳ ॥ १८ ॥ एष वा ऽइदꣳ सर्व्वम्पचति । अहोरात्रैरर्द्धमासैर्म्मासैरृतुभिꣳ सँव्वत्सरेण तदमुना पक्वमयम्पचति पक्वस्य पक्तेति ह स्माह भारद्वाजोऽग्निममुना हि पक्वमयम्पचतीति ॥ १९ ॥ तानि सँव्वत्सरे । दश च सहस्राण्यष्टौ च शतानि समपद्यन्त सोऽत्रातिष्ठत दशसु च सहस्रेष्वष्टासु च शतेषु ॥ २० ॥ अथ सर्व्वाणि भूतानि पर्य्यैक्षत् । स त्रय्यामेव विद्यायाꣳ सर्व्वाणि भूतान्यपश्यदत्र हि सर्व्वेषाञ्छन्दसामात्मा सर्व्वेषाꣳ स्तोमानाꣳ सर्व्वेषाम्प्राणानाꣳ सर्व्वेषान्देवानामेतद्वा ऽअस्त्येतद्ध्यमृतं यद्ध्यमृतन्तद्ध्यस्त्येतदु तद्यन्मर्त्यम् ॥ २१ ॥ स ऽऐक्षत प्रजापतिꣳ । त्रय्यां वाव विद्यायाꣳ सर्व्वाणि भूतानि हन्त त्रयीमेव विद्यामात्मानमभिसंस्करवा ऽइति ॥ २२ ॥ स ऽऋचो व्व्यौहत् । द्वादश बृहतीसहस्राण्येतावत्यो हऽर्चो

याः प्रजापतिसृष्टास्तास्त्रिꣳशत्तमे व्व्यूहे पङ्क्तिष्ष्वतिष्ठन्त ता यत्त्रिꣳशत्तमे व्व्यूहेऽतिष्ठन्त तस्मात्त्रिꣳशन्मासस्य रात्रयोऽथ यत्पङ्क्तिषु तस्मात्पाङ्क्तः* प्रजापतिस्ता ऽअष्टाशतꣳ शतानि पङ्क्तयोऽभवन् ॥ २३ ॥ अथेतरौ व्वेदौ व्व्यौहत् । द्वादशैव बृहतीसहस्राण्यष्टौ यजुषाञ्चत्वारि साम्नामेतावद्धैतयोर्व्वेदयोर्यत्प्रजापतिसृष्टन्तौ त्रिꣳशत्तमे व्व्यूहे पङ्क्तिष्ष्वतिष्ठेतान्तौ यत्त्रिꣳशत्तमे व्व्यूहेऽतिष्ठेतान्तस्मात्त्रिꣳशन्मासस्य रात्रयोऽथ यत्पङ्क्तिषु तस्मात्पाङ्क्तः प्रजापतिस्ता ऽअष्टाशतमेव शतानि पङ्क्तयोऽभवन् ॥ २४ ॥ ते सर्व्वे त्रयो व्वेदाः । दश च सहस्राण्यष्टौ च शतान्न्यशीतीनामभवन्त्स मुहूर्त्तेन-मुहूर्त्तेनैवाशीतिमाप्नोन्मुहूर्त्तेन-मुहूर्त्तेनाशीतिः समपद्यत ॥ २५ ॥ स ऽएषु त्रिषु लोकेषूखायाम् । योनौ रेतो भूतमात्मानमसिञ्च च्छन्दोमयꣳ स्तोममयम्प्राणमयन्देवतामयन्तस्यार्द्धमासे प्रथम ऽआत्मा समस्क्रियत दवीयसि परो दवीयसि परः सँव्वत्सर ऽएव सर्व्वः कृत्स्नः समस्क्रियत ॥ २६ ॥ तद्यत्परिश्रितमुपाधत्त । तद्रात्रिमुपाधत्त तदनु पञ्चदश मुहूर्त्तान्मुहूर्त्ताननु पञ्चदशाशीतीरथ यद्यजुष्मतीमुपाधत्त तदहरुपाधत्त तदनु पञ्चदश मुहूर्त्तान्मुहूर्त्ताननु पञ्चदशाशीतीरेवमेतान्त्रयीं व्विद्यामात्मन्नावपतात्मन्नकुरुत सोऽत्रैव सर्व्वेषाम्भूतानामात्माभवच्छन्दोमय स्तोममयः प्राणमयो देवतामयः स ऽएतन्मय ऽएव

* पाङ्क्तत्वं नाम पञ्चसंख्यावत्त्वम्, पञ्चपदा पङ्क्तिरिति संख्यासाम्यात्' प्रजापतेर्लोमत्वङ्मांसास्थिमज्जात्मानः पञ्चचितय इति षष्ठे प्रतिपादितम् । (१) 'ग' 'ज' पुस्तकयोः 'नाशी०'

भूत्वोर्द्ध्व ऽउदक्क्रामत्स यः स ऽउदक्क्रामदेष स चन्द्रमाः ॥ २७ ॥ तस्यैषा प्रतिष्ठा । य ऽएष तपत्येतस्मा-देवाद्ध्यचीयतैतस्मिन्नद्ध्यचीयतात्मन ऽएवैनन्तन्निरमि-मीतात्मनः प्राजनयत् ॥ २८ ॥ स यदग्निश्चेष्यमाणो दीक्षते । यथैव तत्प्रजापतिरेषु त्रिषु लोकेषूखायां रुयोनौ रेतो भूतमात्मानमसिञ्चदेवमेवैष ऽएतदात्मानमुखायां रुयोनौ रेतो भूतꣳ सिञ्चति च्छन्दोमयꣳ स्तोममयम्प्राण-मयन्देवतामयन्तस्यार्द्धमासे प्रथम ऽआत्मा संस्क्रियते दवी-यसि परो दवीयसि परः सँवत्सर ऽएव सर्वः कृत्स्नः संस्क्रि-यते ॥ २९ ॥ तद्यत्परिश्रितमुपधत्ते । तद्रात्रिमुपधत्ते तदनु पञ्चदश मुहूर्त्तान्मूहूर्त्तानन्नु पञ्चदशाशीतीरथ यद्यजुष्मती-मुपधत्ते तदहरुपधत्ते तदनु पञ्चदश मुहूर्त्तान्मुहूर्त्ताननु पञ्च-दशाशीतीरेवमेतान्त्रयीं विद्यामात्मन्नावपत ऽआत्मन्कुरुते सोऽत्रैव सर्वेषाम्भूतानामात्मा भवति च्छन्दोमय स्तोम-मयः प्राणमयो देवतामयः स ऽएतन्मय ऽएव भूत्वोर्द्ध्व ऽउत्क्रामति ॥ ३० ॥ तस्यैषा प्रतिष्ठा । य ऽएष तपत्ये-तस्मादेवाधिचीयत ऽएतस्मिन्नधिचीयत ऽआत्मन ऽएवै-नन्तन्निर्म्मितीत ऽआत्मनः प्रजनयति स यदैवंविदस्माल्लो-कात्प्रैत्यथैतमेवात्मानमभिसम्भवति च्छन्दोमयꣳ स्तोमम-यम्प्राणमयन्देवतामयꣳ स ऽएतन्मय ऽएव भूत्वोर्द्ध्व ऽउत्क्रा-मति य ऽएवं विद्वानेतत्कर्म्म कुरुते यो वैतदेवं वेद ॥३१॥(E)

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. ४. २ ।

[ संवत्सररूपप्रजापतेर्मृत्य्वन्तरूपत्वम् , तद्रूपोपासनस्य फलम् , अग्निचयनस्यामृतलक्षणं फलं, परिश्रिद्यजुष्मती-लोकम्पृणेष्टकानां संख्या च ]

एष वै मृत्युर्य्यत्सँवत्सरः । एष हि मर्त्यानामहोरात्राभ्यामायुः क्षिणोत्त्यथ म्म्रियन्ते तस्मादेष ऽएव मृत्युः स यो हैतम्मृत्युः सँवत्सरं व्वेद न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुः क्षिणोति सर्व्वँ हैवायुरेति ॥ १ ॥ एष ऽउ ऽएवान्तकः । एष हि मर्त्यानामहोरात्राभ्यामायुषोऽन्तङ्गच्छत्त्यथ म्म्रियन्ते तस्मादेष ऽएवान्तकः स यो हैतमन्तकम्मृत्युः सँवत्सरं व्वेद न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुषोऽन्तङ्गच्छति सर्व्वँ हैवायुरेति ॥ २ ॥ ते देवाः । एतस्मादन्तकान्मृत्योः सँवत्सरात्प्रजापतेर्ब्बिभयाञ्चक्रुर्य्यद्वै नोऽयमहोरात्राभ्यामायुषोन्तन्न गच्छेदिति ॥ ३ ॥ त ऽएतान्न्यज्ञक्रतूँस्तेनिरे । अग्निहोत्रन्दर्शपूर्ण्णमासौ चातुर्म्मास्यानि पशुबन्धः सौम्म्यमद्ध्वरन्त ऽएतैर्य्यज्ञक्रतुभिर्य्यजमानानामृतत्त्वमानशिरे ४ ते हाप्प्यग्निञ्चिक्क्यिरे । ते ऽपरिमिता ऽएव परिश्रित ऽउपदधुरपरिमिता यजुष्म्मतीरपरिमिता लोकम्पृणा यथेदमप्प्येतर्ह्येक ऽउपदधतीति देवा ऽअकुर्व्वन्निति ते ह नैवामृतत्त्वमानशिरे ॥ ५ ॥ तेऽर्च्चन्तः श्राम्म्यन्तश्चेरुः । अमृतत्त्वमवरुरुत्समानास्तान्ह प्प्रजापतिरुवाच न वै मे सर्व्वाणि रूपाणण्युपधत्त्थाति वैव रेचयथ न वाभ्यापयथ तस्मान्नामृता भवथेति ॥ ६ ॥ ते होचुः । तेभ्यो वै

(१) अवरोद्धुकामाः । (२) 'ग' 'ज' पुस्तकयोः 'धत्था' इति पाठः समुपलभ्यते ।

नस्त्वमेव तद् ब्रूहि यथा ते सर्वाणि रूपाण्युपदधामेति ॥७॥ स होवाच । षष्टिश्च त्रीणि च शतानि परिश्रित ऽउपदधत्त षष्टिश्च त्रीणि च शतानि यजुष्मतीरधि षट्त्रिᳬशतमथ लोकम्पृणा दश च सहस्राण्यष्टौ च शतान्न्युपधत्ताथ मे सर्वाणि रूपाण्युपधास्यथाथामृता भविष्यथेति ते ह तथा देवा ऽउपदधुस्ततो देवा ऽअमृता ऽआसुः ॥ ८ ॥ स मृत्युर्देवानब्रवीत् । इत्थमेव सर्वे मनुष्या ऽअमृता भविष्यन्त्यथ को मह्यम्भागो भविष्यतीति ते होचुर्नातोऽपरः कश्चन सह शरीरेणामृतोऽसद्यदैवत्त्वमेतम्भागᳬ हरासा ऽअथ व्यावृत्य शरीरेणामृतोऽसद्योऽमृतोऽसद्विद्यया वा कर्म्मणा वेति यद्वै तदब्रुवन्विद्यया वा कर्म्मणा वेत्येषा हैव सा विद्या यदग्निरेतदु हैव तत्कर्म्म यदग्निः ॥ ९ ॥ ते य ऽएवमेतद्विदुः । ये वैतत्कर्म्म कुर्वते मृत्वा पुनः सम्भवन्ति ते सम्भवन्त ऽएवामृतत्वमभिसम्भवन्त्यथ य ऽएवन्न विदुर्ये वैतत्कर्म्म न कुर्वते मृत्वा पुनः सम्भवन्ति त ऽएतस्यैवान्नम्पुनः पुनर्भवन्ति ॥ १० ॥ स यदग्निञ्चिनुते । एतमेव तदन्तकम्मृत्युᳬ सँवत्सरम्प्रजापतिमग्निमाप्नोति यन्देवा ऽआप्नुवन्नेतमुपधत्ते यथैवैनमदो देवा ऽउपादधत ॥ ११ ॥ परिश्रिद्भिरेवास्य रात्रीराप्नोति । यजुष्मतीभिरहान्न्यर्द्धमासान्मासानृतूँल्लोकम्पृणाभिर्म्मुहूर्त्तान् ॥ १२ ॥ तद्याः परिश्रितः । रात्रिलोकास्ता रात्रीणामेव साप्तिः क्रियते रात्रीणाम्प्रतिमा ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै

त्रीणि च शतानि सँवत्सरस्य रात्रयस्तासामेकविꣳशतिङ्गार्हपत्ये परिश्रयति द्वाभ्यान्नाशीतिन्धिष्ण्येषु द्वे ऽएकषष्टे शते ऽआहवनीये ॥ १३ ॥ अथ यजुष्मत्यः दर्भस्तम्बो लोगेष्टकाः पुष्करपर्णꣳ रुक्मपुरुषौ स्रुचौ स्वयमातृण्णा दूर्वेष्टका द्वियजू रेतः सिचौ विश्वज्ज्योतिर्ऋतव्ये ऽअषाढा कूर्म्म ऽउलूखलमुसले ऽउखा पञ्च पशुशीर्षाणि पञ्चदशापस्याः पञ्च छन्दस्याः पञ्चाशत्प्राणभृतस्ता द्वाभ्यान्न शतम्प्रथमा चितिः ॥ १४ ॥ [अर्धप्रपाठः ४५] अथ द्वितीया । पञ्चाश्विन्यो द्वे ऽऋतव्ये पञ्च वैश्वदेव्यः पञ्च प्प्राणभृतः पञ्चापस्या ऽएकया न विꣳशतिर्वयस्यास्ता ऽएकचत्त्वारिꣳशद्द्वितीया चितिः ॥ १५ ॥ अथ तृतीया । स्वयमातृण्णा पञ्च दिश्या विश्वज्ज्योतिश्चतस्र ऽऋतव्या दश प्प्राणभृतः षट्त्रिꣳशच्छन्दस्याश्चतुर्द्दश वालखिल्ल्यास्ता ऽएकसप्ततिस्तृतीया चितिः ॥ १६ ॥ अथ चतुर्थी । अष्टादश प्प्रथमा ऽअथ द्वादशाऽथ सप्तदश ताः सप्तचत्त्वारिꣳशच्चतुर्थी चितिः ॥ १७ ॥ अथ पञ्चमी । पञ्चासपत्नाश्चत्त्वारिꣳशद्विराज ऽएकया न त्रिꣳशत्स्तोमभागाः पञ्च नाकसदः पञ्च पञ्चचूडा ऽएकत्रिꣳशच्छन्दस्या ऽअष्टौ गार्हपत्या चितिरष्टौ पुनश्चितिर्ऋतव्ये विश्वज्ज्योतिर्विमर्ण्णी च स्वयमातृण्णा चाश्मा पृश्निरुर्ध्वश्चिच्चतेऽग्निर्न्निधीयते ता ऽअष्टात्रिꣳशꣳ शतम्पञ्चमी चितिः ॥ १८ ॥ ताः सर्वाः पञ्चभिर्न्न चत्त्वारि शतानि । ततो याः षष्टिश्च त्रीणि च शतान्न्यहर्ल्लोकास्ता

ऽअहन्नामेव साप्तिः क्रियतेऽहन्नाम्प्रतिमा ताः षष्टिश्च च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि सँवत्सरस्याहान्यथ याः षट्त्रिंशत्पुरीषन्तासाᳬं षट्त्रिंशी ततो याश्चतुर्विंशतिरर्द्धमासलोकास्ता ऽअर्द्धमासानामेव साप्तिः क्रियतेऽर्द्धमासानाम्प्रतिमाथ या द्वादश मासलोकास्ता मासानामेव साप्तिः क्रियते मासानाम्प्रतिमा ता ऽउ द्वे-द्वे सहर्त्तुलोका ऽऋतूनामशून्यतायै ॥ १९ ॥ अथ या लोकम्पृणाः । मुहूर्त्तलोकास्ता मुहूर्तानामेव साप्तिः क्रियते मुहूर्त्तानाम्प्रतिमा ता दश च सहस्राण्यष्टौ च शतानि भवन्त्येतावन्तो हि सँवत्सरस्य मुहूर्त्तास्तासामेकविंशतिङ्गार्हपत्य ऽउपदधाति द्वाभ्यान्नाशीतिन्धिष्ण्येष्वाहवनीय ऽइतरा ऽएतावन्ति वै सँवत्सरस्य रूपाणि तान्यस्यात्राप्तान्युपहितानि भवन्ति ॥ २० ॥ तद्धैके । आहवनीय ऽएवैताᳬं सम्पदमापिपयिषन्त्यन्ये वा ऽएतेऽग्नयश्चिताः किमन्यत्रोपहिता ऽइह सम्पदश्येमेति न तथा कुर्य्याद्दश वा ऽएतानग्नीश्चिनुतेऽष्टौ धिष्ण्यानाहवनीयञ्च गार्हपत्यञ्च तस्मादाहुर्विराडग्निरिति दशाक्षरा हि विराट् तानु सर्वानेकमिवैवाचक्षतेऽग्निरित्येतस्य ह्येवैतानि सर्वाणि रूपाणि यथा सँवत्सरस्याहोरात्राण्यर्द्धमासा मासा ऽऋतव ऽएवमस्यैतानि सर्वाणि रूपाणि ॥ २१ ॥ ते ये ह तथा कुर्वन्ति एतानि हास्य ते रूपाणि बहिर्द्धा कुर्वन्त्यथो पापवस्यसं कुर्वन्ति क्षत्राय विशम्प्रतिप्रतिनीम्प्रत्युद्यामिनीमाग्नी-

म्पितरमब्रवीत् । कामप्रं वा ऽअहं यज्ञमदर्शन्तेन त्वा याजयानीति तथेति तमयाजयत्स ऽइष्ट्वाकामयताहमेवेदꣳ सर्वꣳ स्यामिति स प्राणोऽभवत्प्राणो वा ऽइदꣳ सर्वमयं वै प्राणो योऽयम्पवते स प्रजापतिस्तस्य दृष्टिर्यद्देव वेदेत्थाद्वातीति यद्वै किञ्च प्राणि स प्रजापतिः स यो हैवमेताम्प्रजापतेर्दृष्टिं वेदाविरिव हैव भवति ॥ १७ ॥

स प्रजापतिरिन्द्रम्पुत्रमब्रवीत् । अनेन त्वा कामप्रेण यज्ञेन याजयानि येन मामिदम्परमेष्ठ्ययीयजदिति तथेति तमयाजयत्स ऽइष्ट्वाकामयताहमेवेदꣳ सर्वꣳ स्यामिति स वागभवद्वाग्वा ऽइदꣳ सर्वन्तस्मादाहुरिन्द्रो वागिति ॥ १८ ॥ [ अर्धप्रपाठकः ] स ऽइन्द्रोऽग्नीषोमौ भ्रातरावब्रवीत् । अनेन वाङ्कामप्रेण यज्ञेन याजयानि येन मामिदम्पिता प्रजापतिरयीयजदिति तथेति तावयाजयत्ताविष्ट्वाकामयेतामावमेवेदꣳ सर्वꣳ स्यावेति तयोरन्नाद ऽएवान्यतरोऽभवदन्नमन्यतरोऽन्नाद ऽएवाग्निरभवदन्नꣳ सोमोन्नादश्च वा ऽइदꣳ सर्वमन्नञ्च ॥ १९ ॥ ता वा ऽएताः । पञ्च देवता ऽएतेन कामप्रेण यज्ञेनायजन्त ता यत्कामा ऽअयजन्त स ऽआभ्यः कामः समार्ध्यत यत्कामो ह वा ऽएतेन यज्ञेन यजते सोऽस्मै कामः समृध्यते ॥ २० ॥ त ऽइष्ट्वा प्राचीन्दिशमपश्यन् । ताम्प्राचीमेवाकुर्वत सेयम्प्राच्येव दिक्तस्मादिमाः प्रजाः प्राच्यः सर्पन्ति प्राचीꣳ ह्येतामकुर्वतोपैनामितः कुर्वीमहीति तामूर्जमकुर्वतेमाञ्चलूर्जम्पश्येमेति सासौ द्यौरभवत्

॥ २१ ॥ अथ दक्षिणान्दिशमपश्यन् । तान्दक्षिणामेवाकुर्वत सेयन्दक्षिणैव दिक्तस्मादु दक्षिणत ऽएव दक्षिणा ऽउपतिष्ठन्ते दक्षिणतोऽभ्यवाजन्ति दक्षिणाᳬं ह्येतामकुर्वतोपैनामितः कुर्वीमहीति तँल्लोकमकुर्वतेमङ्खल्लु लोकम्पश्येमेति तदिदमन्तरिक्षमभवदेष वै लोकः सा यथा हैवेयम्प्रतिष्ठाविरस्मिँल्लोके पृथिव्येवमु हैवैषा प्प्रतिष्ठाविरमुष्मिँल्लोक ऽइदमन्तरिक्षः स यदिह सन्नमुँल्लोकन्न पश्यति तस्मादाहुः परोऽक्षमसौ लोक ऽइति ॥ २२ ॥ अथ प्प्रतीचीन्दिशमपश्यन् । तामाशामकुर्वत तस्माद्यत्प्राङ् सृत्वा विन्दत ऽएतामेव तेन दिशमेत्याशाᳬं ह्येतामकुर्वतोपैनामितः कुर्वीमहीति ताᳬं श्रियमकुर्वतेमाङ्खल्लु श्रियम्पश्येमेति सेयम्पृथिव्यभवच्छ्रीर्वा ऽइयन्तस्माद्योऽस्यै भूयिष्ठं विन्दते स ऽएव श्रेष्ठो भवति ॥ २३ ॥ अथोदीचीन्दिशमपश्यन् । तामपोऽकुर्वतोपैनामितः कुर्वीमहीति तन्धर्म्ममकुर्वत धर्म्मो वा ऽआपस्तस्माद्यदेमँल्लोकमाप ऽआगछन्ति सर्वमेवेदं यथा धर्म्मम्भवत्यथ यदा वृष्टिर्भवति बलीयानेव तर्ह्यबलीयस ऽआदत्ते धर्म्मो ह्यापः ॥ २४ ॥ ता वा ऽएताः । एकादश देवताः पञ्च प्रयाजा द्वावाज्यभागौ स्विष्टकृत्तृयोऽनुयाजाः ॥ २५ ॥ ता ऽएकादशाहुतयः । एताभिर्वा ऽआहुतिभिर्देवा ऽइमाँल्लोकानजयन्नेता दिशस्तथो ऽएवैष ऽएताभिराहुतिभिरिमाँल्लोकाञ्जयत्येता दिशः ॥ २६ ॥ चतस्रोऽवान्तरदिशः । त ऽएव चत्वारः पत्नीसंयाजा ऽअवान्तरदिशो वै

देवाश्चतुर्भिः पत्नीसंयाजैरजयन्नवान्तरदिश ऽउ ऽएवैष एतैर्जयति ॥ २७ ॥ अथेडा । अन्नाद्यमेवैतया देवा ऽअजयँस्तथो ऽएवैष ऽएतयान्नाद्यमेव जयत्येषा नु देवत्रा दर्शपूर्णमासयोः सम्पत् ॥ २८ ॥ अथाध्यात्मम् । पञ्चेमे पुरुषे प्राणा ऽऋते चक्षुर्भ्यान्त ऽएव पञ्च प्रयाजा चक्षुषी ऽआज्यभागौ ॥ २९ ॥ अयमेवावाङ् प्राणः स्विष्टकृत् । स यत्तमभ्यर्द्ध ऽइवेतराभ्य ऽआहुतिभ्यो जुहोति तस्मादेतस्मात्प्राणात्सर्वे प्राणा बीभत्सन्तेऽथ यत्स्विष्टकृते सर्वेषाᳪं हविषाᳪं समवद्यति तस्माद्यत्किञ्चे-मान्प्राणानापद्यत ऽएतमेव तत्सर्वᳪं समवैति ॥३०॥ त्रीणि शिश्नानि । त ऽएव त्रयोऽनुयाजाः स योऽयं वर्षिष्ठो-ऽनुयाजस्तदिदं वर्षिष्ठमिव शिश्नन्तं वा ऽअनवानन्यजे-दित्याहुस्तथो हास्यैतदमृद्धम्भवतीति ॥ ३१ ॥ स वै सकृदु-वान्यात् । एकᳪं ह्येतस्य पर्वाथ यदपर्वकᳪं स्यात्प्रतृण्णं वैव तिष्ठेल्लम्बेत वा तस्मादेतदुच्च तिष्ठति पद्यते च तस्मात्सकृदुवान्यात् ॥ ३२ ॥ द्वौ बाहू द्वा ऽऊरू । त ऽएव चत्वारः पत्नीसंयाजाः प्रतिष्ठायमेव प्राण ऽइडा यत्तान्नाग्नौ जुहोति यत्सा प्रदग्धेव तस्मादयमनवतृण्णः प्राणः ॥ ३३ ॥ अस्थ्येव याज्यानुवाक्याः । माᳪंसᳪं हविस्तद्विमितञ्छन्दो यद्याज्यानुवाक्यास्तस्मात् समावन्त्ये-वास्थीनि मेद्यतश्च कृश्यतश्च भवन्त्यथ यद्भूय ऽइव च हविर्गृह्णाति कनीय ऽइव च तस्मादु माᳪंसान्येव मेद्यतो मेद्यन्ति माᳪंसानि कृश्यतः कृश्यन्ति तेनैतेन

—

यज्ञेन यांङ्कामयते देवतान्तां ऽयजति यस्यै हविर्भवति ॥ ३४ ॥ ता वा ऽएताः । अनपोद्धार्य्या ऽआहुतयो भवन्ति स यद्धैतासामपोद्धरेद्यथैकमङ्गः शृणीयात्प्राणं वा निर्हण्यादेवन्तदन्याऽन्येव हवींᳩंष्युप चाह्रियन्तेऽप च ह्रियन्ते ॥ ३५ ॥ ता वा ऽएताः । षोडशाहुतयो भवन्ति षोडशकलो वै पुरुषः पुरुषो यज्ञस्तस्मात्षोडशाहुतयो भवन्ति ॥ ३६ ॥

प्रथमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

[ व्रतोपायनमीमांसा ]

तद्वा ऽअदो व्रतोपायन ऽउच्यते । यदि नाश्नाति पितृदेवत्यो भवति यद्यु ऽअश्नाति देवानत्यश्नातीति तदारण्यमश्नीयादिति तत्र स्थापयन्ति ॥ १ ॥ स यदि ग्राम्या ऽओषधीरश्नाति । पुरोडाशस्य मेधमश्नाति यद्यारण्या ऽओषधीरश्नाति बर्हिषो मेधमश्नाति यदि वानस्पत्यमश्नातीध्मस्य मेधमश्नाति यदि पयः पिबति सानाय्यस्य चाज्यस्य च मेधमश्नाति यद्यपः पिबति प्रणीतानाम्मेधमश्नाति यदि नाश्नाति पितृदेवत्यो भवति ॥ २ ॥ तदाहुः । किमयनमिति स्वयᳩं हैवैते रात्री ऽअग्निहोत्रञ्जुहुयात्स यद्धुत्वा प्राश्नाति तेनापितृदेवत्यो भवत्याहुतिर्वा ऽएषा स यदेवैतामात्मन्नाहुतिञ्जुहोति तेनो ऽएतेषाम्मेधानान्नाश्नाति ॥ ३ ॥ एते ह वै रात्री । सर्वा रात्रयः समवयन्ति या ऽआपूर्य्यमाणपक्षस्य रात्रयस्ताः सर्वाः पौर्णमासीᳩं समवयन्ति या ऽअपक्षीयमाणपक्षस्य

रात्र॑यस्ताः॒ सर्वा॑ ऽअमावा॒स्याᳪं सम॒वयन्ति स यो॒ हैवं॒ विद्वान्स्व॑यमु॒पवसथे॒ जुहोति सर्वदा॒ हैवास्य स्वयु॒हु॑ हुत॒म्भवति ॥ ५ ॥

प्रथमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

[ आख्यायिकया यज्ञोत्पत्तिकथनम् ]

दे॒वाश्च वा ऽअ॒सुराश्च । उभ॒ये प्राजाप॒त्याः पस्पृधिरे त॒तो॑ऽसुरा अतिमाने॒नैव क॒स्मिन्नु॒ व॒यञ्जुहुया॒मेति स्वे॒ष्वे॒वास्येषु जु॒ह्वतश्चेरु॒स्तेऽतिमाने॒नैव परा॑बभूवु॒स्तस्मा॒न्नातिमन्येत पराभवस्य हैतन्मुखं य॒दतिमानः ॥ १ ॥

अथ॑ दे॒वाः । अ॒न्यो॒ऽन्य॒स्मिन्नेव जु॒ह्वतश्चेरु॒स्ते॒भ्यः प्रजा॒पतिरा॒त्मा॒नम्प्र॒ददौ य॒ज्ञो हैषा॑मास य॒ज्ञो हि॒ देवा॒नाम॒न्नम् ॥ २ ॥ स॒ दे॒वेभ्य ऽआ॒त्मा॒नम्प्र॒दाय । अथै॒तमात्मा॒नः प्रति॒मामसृजत य॒द्यज्ञ॒न्त॒स्मादाहुः प्र॒जा॒पति॒र्यज्ञ ऽइत्यात्म॒नो ह्येत॒म्प्रतिमाम॒सृजत ॥ ३ ॥ स॒ ऽए॒तेन य॒ज्ञेन । दे॒वे॒भ्य ऽआ॒त्मा॒नन्निर॒क्रीणीत स य॒द्व्र॒तमु॒पैति य॒थैव त॒त्प्रजापति॒र्देवे॒भ्य ऽआ॒त्मा॒नम्प्रा॒यच्छदे॒वमे॒वैष ऽए॒तद्दे॒वे॒भ्य ऽआ॒त्मा॒नम्प्र॒यच्छति त॒स्मादु सं॒स्थत ऽएवैताᳪं रात्रि॒ञ्चिचरिषे॒द्यथा हवि॒षा च॒रेदे॒वᳪं॒ ह॒वि॒र्ह्येष दे॒वानाम्भवति ॥ ४ ॥ अथ॒ य॒द्यज्ञ॒न्तनु॒ते । य॒ज्ञेनै॒वैत॒द्दे॒वे॒भ्य ऽआ॒त्मा॒नन्नि॒ष्क्रीणीते य॒थैव त॒त्प्रजा॒पति॒र्निर॒क्रीणीतैवम॒थ य॒द्धवि॒र्निर्व॒पति ह॒वि॒षैवैत॒द्यज्ञ॒न्नि॒ष्क्रीणाति ह॒वि॒रनु॒वाक्य-

* व्रीहिपिष्टैर्यवपिष्टैर्वा निर्मितः पक्वः पिण्डविशेषः पुरोडाशः ।

यानुवाक्यामवदानेनावदानं याज्यया याज्यां वषट्कारेण वषट्कारमाहुत्या तस्याहुतिरेवानिष्क्रीता भवति ॥ ५ ॥ स यथाग्रप्रशीर्ण्णो वृक्षः । एवमस्यैष यज्ञो भवत्याहुतिमेवान्वाहार्य्येण निष्क्रीणाति तद्यदेतद्धीनं यज्ञस्यान्वाहरति तस्मादन्वाहार्य्यो नामैवमु हास्यैष सर्व्व ऽएव यज्ञो निष्क्रीतो भवत्येष ह वै यजमानस्यामुष्मिँल्लोक ऽआत्मा भवति यद्यज्ञ स ह सर्व्वतनूरेव यजमानोऽमुष्मिँल्लोके सम्भवति य ऽएवं विद्वान्निष्क्रीत्या यजते ॥ ६ ॥

प्रथमाध्याये अष्टमं ब्राह्मणम् ॥ ८ ॥

इति प्रथमोऽध्यायः ॥१॥



[ पुरुषजन्मत्रयप्रतिपादनम्, सामिधेनीप्रशंसाच ]

त्रिर्ह वै पुरुषो जायते । एतन्न्वेव मातुश्चाधि पितुश्चाग्रे जायतेऽथ यं यज्ञ ऽउपनमति स यद्यजते तद्द्वितीयञ्जायतेऽथ यत्र म्म्रियते यत्रैनमग्नावभ्यादधति स यत्ततः सम्भवति तत्तृतीयञ्जायते तस्मात्त्रिः पुरुषो जायत ऽइत्याहुः ॥ १ ॥ ता वा ऽएताः । एकादश सामिधेनीरन्वाह दश वा ऽइमे पुरुषे प्प्राणा ऽआत्मैकादशो यस्मिन्नेते प्प्राणाः प्प्रतिष्ठिता ऽएतावान्वै पुरुषस्तदेनङ्कृत्स्नञ्जनयत्यथ यदूर्द्ध्वं सामिधेनीभ्यः सा प्प्रतिष्ठा तदेनञ्जनयित्वा प्प्रतिष्ठापयति ॥ २ ॥ नव प्प्रसवस्य

( १ ) सम्यगिध्यते ज्वाल्यतेऽग्निर्याभिर्ऋग्भिस्ताः सामिधेन्यः 'प्र वो वाजा अभिद्यवं, ( तै० ब्रा० ३।५।२।१ ) इत्याद्या एकादश ।

व्व्याहृतयः । नवेमे पुरुषे प्प्राणास्तदेनन्द्वितीयञ्जनयत्याश्श्रावणम्प्रत्याश्श्रावणः सा प्प्रतिष्ठाथ यद्देवादः सृष्टौ जन्मोद्यते तदेनन्तृतीयञ्जनयति पत्नीसंख्याजा ऽएव तत्र प्प्रतिष्ठा ॥ ३ ॥ त्रिर्हि वै पुरुषो जायते । एवमेवैनमेतद्यज्ञात्त्रिर्जनयति तासामेकादशानान्त्रिः प्प्रथमामन्वाह त्रिरुत्तमाम् ॥ ४ ॥ ताः पञ्चदश सामिधेन्न्यः । द्वावाघारौ पञ्च प्प्रयाजा ऽइडा त्रयोऽनुयाजाः सूक्तवाकश्च शम्म्योर्वाकश्च तास्त्रयोदशाहुतयोऽथ यद्देवादः पत्नीसंख्याजेषु सम्प्रगृह्णाति समिष्टयजुश्च ॥ ५ ॥ ताः पञ्चदशाहुतयः । तासाम्पञ्चदशानामाहुतीनामेता ऽअनुवाक्क्या ऽएताः पञ्चदश सामिधेन्न्य ऽएतासामनुवाक्क्यानामेता याज्ज्या य ऽएवात्र मन्त्रो यो निगदस्तद्याज्यारूपमेतेनो हास्यैता ऽआहुतयोऽनुवाक्क्यवत्त्यो भवन्त्येताभिः सामिधेनीभिरेताभिराहुतिभिरेता ऽअनुवाक्क्या याज्ज्यवत्त्यश्चाहुतिमत्त्यश्च भवन्ति ॥ ६ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



---

( १ ) वह्नेः कश्चिद्देशमारभ्य देशान्तरपर्यन्तं समन्त्रकमाज्यधारया आहरणमाघारः ।

( २ ) प्रकर्षेण इज्यन्ते देवता एभिस्ते प्रयाजाः "समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहा यजति" ( तै० सं० २।६।१ ) इति प्रयाजाः ।

( ३ ) इज्यते अनयेति व्युत्पत्त्या 'ये यजामहे' इति पूर्विका वषट्कारान्ता हविःप्रदानार्था ऋक् याज्याशब्देनोच्यते ।

( ४ ) पुरः यागात्पूर्वं देवतामनुकलयितुं या ऋक् अनूच्यते सा पुरोऽनुवाक्या अनुवाक्या इति चोच्यते ।

( ५ ) 'वत्त्य०' इति 'ज' पुस्तके ।

[ याज्यानुवाक्ययोश्छन्दोविशेषत्वविधानपूर्वकं स्तवनम् ]

गायत्रीमनुवाक्यामन्वाह । त्रिपदा वै गायत्री त्रय ऽइमे लोका ऽइमानेवैतल्लोकान्देवाः प्प्रत्यष्ठापयन् ॥ १ ॥ अथ त्रिष्टुभा यजति । चतुष्पदा वै त्रिष्टुप्चतुष्पादाः पशवस्तत्पशूनेवैतदेषु लोकेषु प्प्रतिष्ठितेषु देवाः प्प्रत्यष्ठापयन् ॥ २ ॥ द्व्यक्षरो वषट्कारः । द्विपाद्वै पुरुषस्तत्पुरुषमेवैतद्द्विपादमेषु पशुषु प्प्रतिष्ठितेषु देवाः प्प्रत्यष्ठापयन् ॥३॥ सोऽयन्द्विपात्पुरुषः । पशुषु प्प्रतिष्ठित ऽएवमेवैष ऽएतल्लोकान्प्रतिष्ठापयति लोकेषु प्प्रतिष्ठितेषु पशून्प्रतिष्ठापयति पशुषु प्प्रतिष्ठितेष्वात्मानम्प्रतिष्ठापयत्त्येवमेष पुरुषः पशुषु प्प्रतिष्ठितो य ऽएवं विद्वान्य्यजते ॥ ४ ॥ अथ यद्वषट्कृते जुहोति । एष वै वषट्कारो य ऽएष तपति स ऽएष मृत्युस्तदेनमुपरिष्टान्मृत्योः संस्करोति तदेनमतो जनयति स ऽएतम्मृत्युमतिमुच्यते यज्ञो वा ऽअस्यात्मा भवति तद्यज्ञ ऽएव भूत्वैतन्मृत्युमतिमुच्यत ऽएतेनो हास्य सर्व्वे यज्ञक्रतव ऽएतम्मृत्युमतिमुक्ताः ॥ ५ ॥ * अथ यामेतामाहुतिञ्जुहोति । एषा ह वा ऽअस्याहुतिरमुष्मिँल्लोक ऽआत्मा भवति स यदैवंविदस्माल्लोकात्प्रैत्यथैनमेषाहुतिरेतस्य पृष्ठे सत्याह्वयत्त्येह्यहं वै त ऽइहात्मास्मीति तद्यदाह्वयति तस्मादाहुतिर्न्नाम ॥ ६ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ आधारौ स्तोतुमाख्यायिकया तत्स्तुतिप्रतिपादनम् ]

ब्रह्म वा ऽइदमग्र ऽआसीत् । तद्देवानसृजत तद्देवा
न्त्सृष्ट्वैषु लोकेषु व्यारोहयदस्मिन्नेव लोकेऽग्निं वायुमन्तरिक्षे
दिव्येव सूर्यम् ॥ १ ॥ अथ येऽत ऽऊर्द्ध्वा लोकाः । तद्या
ऽअत ऽऊर्द्ध्वा देवतास्तेषु ता देवता व्यारोहयत्स यथा
हैवेम ऽआविर्लोका ऽइमाश्च देवता ऽएवमु हैव त ऽआवि-
र्लोकास्ताश्च देवता येषु ता देवता व्यारोहयत् ॥ २ ॥
अथ ब्रह्मैव परार्द्धमगच्छत् । तत्परार्द्धङ्गत्वैक्षत कथ-
न्न्विमाँल्लोकान्प्रत्यवेयामिति तद्‌द्वाभ्यामेव प्रत्यवैद्रूपेण
चैव नाम्ना च स यस्य कस्य च नामास्ति तन्नाम यस्यो
ऽअपि नाम नास्ति यद्वेद रूपेणेदꣳ रूपमिति तद्रूपमेता-
वद्वा ऽइदं यावद्रूपञ्चैव नाम च ॥ ३ ॥ ते हैते ब्रह्मणो
महती ऽअभ्वे । स यो हैते ब्रह्मणो महती ऽअभ्वे
वेद महद्धैवाभ्वम्भवति ॥ ४ ॥ ते हैते ब्रह्मणो
महती यक्षे । स यो हैते ब्रह्मणो महती यक्षे
वेद महद्धैव यक्षम्भवति तयोरन्यतरज्ज्यायो रूपमेव
यद्ध्यपि नाम रूपमेव तत्स यो हैतयोर्ज्यायो वेद ज्या-
यान्ह तस्माद्भवति यस्माज्ज्यायान्बुभूषति ॥ ५ ॥
मर्त्या ह वा ऽअग्रे देवा ऽआसुः । स यदैव ते ब्रह्मणा-
पुरथामृता ऽआसुः स यम्मनस ऽआधारयति मनो
वै रूपम्मनसा हि वेदेदꣳ रूपमिति तेन रूपमाप्नोत्यथ
यं वाच ऽआधारयति वाग्वै नाम वाचा हि नाम
गृह्णाति तेनो नामाप्नोत्येतावद्वा ऽइदꣳ सर्वं यावद्रूपञ्चैव

नाम च तत्सर्वमाप्नोति सर्वं वा ऽअक्षय्यमेतेनो हास्याक्षय्यꣳ सुकृतम्भवत्यक्षय्यो लोकः ॥ ६ ॥ तद्वा ऽअद ऽआग्नेय्यामिष्ट्वा ऽउच्यते । यथा तदृषिभ्यो यज्ञः प्रारोचत तं ययथातन्वत तद्यज्ञन्तन्वानानृषीन्गन्धर्वा ऽउपनिषेदुस्ते ह स्म सन्निदधतीदं वा ऽअत्यरीरिचन्निदमूनमक्रन्निति स यदेषां यज्ञः सन्ततस्थेऽथैनाँस्तद्दर्शयाञ्चक्रुरिदं वा ऽअत्यरीरिचतेदमूनमकर्त्तेति ॥ ७ ॥ स यदतिरेचयाञ्चक्रुः । यथा गिरिरेवन्तदास यदूनञ्चक्रुर्यथा श्वभ्राः प्रदरा एवन्तदास ॥ ८ ॥ स यत्र शंय्योराह । तदभिमृशति 'यज्ञ नमश्च त ऽउप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्वे'ति स यदतिरेचयति तन्नमस्कारेण शमयत्यथ यदूनङ्करोत्युप चेति तेन तदूनन्न भवति यज्ञस्य शिवे सन्तिष्ठस्वेति यद्वै यज्ञस्यान्न्यूनातिरिक्तन्तच्छिवन्तेन तदुभयꣳ शमयति स्विष्टे मे सन्तिष्ठस्वेति यद्वै यज्ञस्यान्न्यूनातिरिक्तन्तत्स्विष्टन्तेनो तदुभयꣳ शमयत्येवमु हास्यैतेन यज्ञेनान्न्यूनातिरिक्तेनैवेष्टम्भवति य ऽएवं विद्वानेवमभिमृशति तस्मादेवमेवाभिमृशेत्ते ह ते गन्धर्वा ऽआसुः शूर्प्प ययवमान्कक्षिरुद्दालवान्धानान्तर्वान् ॥ ९ ॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



(१) शु० य० सं० अ० २ क० १९ ।

[ दर्शपूर्णमासनामात्मना आघारस्तुतिः, अधिदैवमध्यात्मभेदेन दर्शपूर्णमासप्रतिपादनञ्च ]

एष वै पूर्ण्णमाः । य ऽएष तपत्यहरहर्ह्येवैष पूर्ण्णोऽथैष ऽएव दर्शो यच्चन्द्रमा ददृश ऽइव ह्येषः ॥ १ ॥ अथो ऽइतरथाहुः । एष ऽएव पूर्ण्णमा यच्चन्द्रमा ऽएतस्य ह्यनु पूरणम्पौर्ण्णमासीत्याचक्षतेऽथैष ऽएव दर्शो य एष तपति ददृश ऽइव ह्येषः ॥ २ ॥ इयमेव पूर्ण्णमाः । पूर्ण्णेव हीयमसावेव द्यौर्द्दर्शो ददृश ऽइव ह्यसौ द्यौः ॥ ३ ॥ रात्रिरेव पूर्ण्णमाः । पूर्ण्णेव हीयꣳ रात्रिरहरेव दर्शो ददृश ऽइव हीदमहरेषा नु देवत्रा दर्शपूर्ण्णमासयोर्म्मीमाꣳसा ॥ ४ ॥ अथाध्यात्मम् । उदान ऽएव पूर्ण्णमा ऽउदानेन ह्ययम्पुरुषः पूर्य्यत ऽइव प्राण ऽएव दर्शो ददृश ऽइव ह्ययम्प्राणस्तदेतावन्नादश्चान्नप्रदश्च दर्शपूर्ण्णमासौ ॥ ५ ॥ प्राण ऽएवान्नादः । प्राणेन हीदमन्नमद्यत ऽउदान ऽएवान्नप्रद ऽउदानेन हीदमन्नम्प्रदीयते स यो हैतावन्नादश्चान्नप्रदश्च दर्शपूर्ण्णमासौ वेदान्नादो हैव भवति प्र हास्मा ऽअन्नाद्यन्दीयते ॥ ६ ॥ मन ऽएव पूर्ण्णमाः । पूर्ण्णमिव हीदम्मनो वागेव दर्शो ददृश ऽइव हीयं वाक्तदेतावध्यात्मम्प्रत्यक्षन्दर्शपूर्ण्णमासौ स यदुपवसथे व्रतोपायनीयमश्नाति तेनैतावध्यात्मम्प्रत्यक्षन्दर्शपूर्ण्णमासौ प्रीणाति यज्ञेन प्रातर्द्देवौ ॥७॥ तदाहुः । यन्न पूर्ण्णमासायेति हविर्ग्गृह्यते न दर्शायेति हविर्ग्गृह्यते न पूर्ण्णमासायानुब्रूहि न दर्शायानुब्रूहि न पूर्ण्णमासं यज न दर्शं

सृजेत्यथ केनास्य दर्शपूर्णमासाविष्टौ भवत ऽइति स यन्मनस ऽआघारयति मनो वै पूर्णमास्तेन पूर्णमासं सृजत्यथ यं वाच ऽआघारयति वाग्वै दर्शस्तेनो दर्शं सृजत्येतेनो हास्य दर्शपूर्णमासाविष्टौ भवतः ॥ ८ ॥

तद्धैके । चरू निर्वपन्ति पौर्णमास्यांॅ सरस्वतेऽमावास्यायांॅ सरस्वत्या ऽएतत्प्रत्यक्षन्दर्शपूर्णमासौ यजामह ऽइति वदन्तस्तदु तथा न कुर्य्यान्मनो वै सरस्वान्वाक्सरस्वती स यदेवैतावाघारावाघारयति तदेवास्य दर्शपूर्णमासाविष्टौ भवतस्तस्मादेतौ चरू न निर्वपेत् ॥ ९ ॥ तदाहुः । आगूर्त्ती वा ऽएष भवति यो दर्शपूर्णमासाभ्यां यजते पौर्णमासेन हीष्ट्वा वेदामावास्येन यक्ष्य ऽइत्यामावास्येनेष्ट्वा वेद पुनः पौर्णमासेन यक्ष्य ऽइति स ऽआगूर्त्त्येवामुँल्लोकमेति यदामुँल्लोकमेति कथमनागूर्त्ती भवतीति स यदेवैता ऽउभयत्राघारावाघारयति तदेवास्य दर्शपूर्णमासौ सन्तिष्ठेते स सॅंस्थितयोरेव दर्शपूर्णमासयोरथामुँल्लोकमेति तथानागूर्त्ती भवति ॥ १० ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥
कण्डिकासंख्या ॥ ११९ ॥

[ दर्शपूर्णमासयोरश्वमेधात्मना स्तुतिः ]

अपि ह वा ऽएतर्हि । देवेभ्योऽश्वमेधमालभन्ते तदाहुः प्राक्तोऽश्वमेध ऽइतीतर ऽइन्नूनः स तद्वा ऽएष

ऽएवाश्वमेधो यच्चन्द्रमाः ॥ १ ॥ तदाहुः । पदे पदेऽश्वस्य मेध्यस्याहुतिञ्जुहतीति स यत्सायम्प्रातरग्निहोत्रञ्जुहोति द्वे सायमाहुती जुहोती द्वे प्रातस्ताश्चतस्र ऽआहुतयश्चतुष्पाद्वा ऽअश्वस्तदस्य पदे पद ऽएवाहुतिर्हुता भवति ॥ २ ॥ तदाहुः । विवृत्तेऽश्वस्येष्टिन्निर्वपतीत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष ऽएताᳬं रात्रिन्न पुरस्तान्न पश्चाद्ददृशे तदिमँल्लोकमागच्छति सोऽस्मिँल्लोके विवर्त्तते ॥ ३ ॥ स यदामावास्येन यजते । विवृत्त ऽएवास्यैतदिष्टिन्निर्वपत्यथ यत्पौर्णमासेन यजतेऽश्वमेधमेवैतदालभते तमालभ्य देवेभ्यः प्रयच्छति सँवत्सरे वा ऽइतरमश्वमेधमालभन्त ऽएष वै मासः परिप्लवमानः सँवत्सरङ्करोति तदस्य सँवत्सरे सँवत्सर ऽएवाश्वमेध ऽआलब्धो भवति ॥ ४ ॥ तं वा ऽएतम् । मासि मास्येवाश्वमेधमालभन्ते स यो हैवं विद्वानग्निहोत्रञ्च जुहोति दर्शपूर्णमासाभ्याञ्च यजते मासि मासि हैवास्याश्वमेधेनेष्टम्भवत्येतदु हास्याग्निहोत्रञ्च दर्शपूर्णमासौ चाश्वमेधमभिसम्पद्येते ॥ ५ ॥

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ प्रणीतादीनां यज्ञशरीरावयवत्वेन सम्पत्तिकथनम् ]

शिरो ह वा ऽएतद्यज्ञस्य यत्प्रणीताः । स यत्प्रणीताः प्रणयति शिर ऽएवैतद्यज्ञस्य संस्करोति स

विद्याच्छिर ऽएव म ऽएतत्संस्क्रियत ऽइति ॥ १ ॥ प्राण ऽएवास्येद्ध्मः । प्प्राणेन हीदꣳ सर्वमिद्धं य्यत्प्राणभृन्नि-मिषद्यदेजति स विद्यादहमेवैध ऽइद्ध्म ऽइति ॥ २ ॥ अनूकमेवास्य सामिधेन्यः । तस्मात्ता ब्ब्रूयात्सन्तन्वन्निव मेऽनुब्ब्रूहीति सन्ततमिव हीदमनूकम्मनश्चैवास्य व्वाक्चा-घारौ सरस्वाँश्च सरस्वती च स विद्यान्मनश्चैव मे व्वाक्चाघारौ सरस्वाँश्च सरस्वती चेति ॥ ३ ॥ पञ्च प्प्रयाजाः । इम ऽएवास्य ते शीर्षण्ण्याः पञ्च प्प्राणा मुखमेवास्य प्प्रथमः प्प्रयाजो दक्षिणा नासिका द्वितीयः सव्व्या नासिका तृतीयो दक्षिणः कर्ण्णश्चतुर्थः सव्व्यः कर्ण्णः पञ्चमोऽथ यच्चतुर्थे प्प्रयाजे समानयति तस्मा-दिदꣳ श्रोत्रमन्तरतः सन्तृण्णञ्चक्षुषी ऽआज्यभागौ स विद्याच्चक्षुषी ऽएव म ऽएताविति ॥ ४ ॥ अथ य ऽआग्नेयः पुरोडाशः । अयमेवास्य स दक्षि-णोऽर्द्धो हृदयमेवास्योपाꣳशुयाजः स यत्तेनोपा-ꣳशु चरन्ति तस्मादिदङ्गुहेव हृदयम् ॥ ५ ॥ अथ योऽग्नीषोमीयः पुरोडाशः । अयमेवास्य स ऽउत्त-रोऽर्द्ध ऽऐन्द्रं व्वा सान्नाय्यमन्तराꣳ सम्मेवास्य स्विष्टकृद्विपृष्ट्याशित्रम् ॥ ६ ॥ स यत्प्राशित्रमवद्यति । यथैव तत्प्रजापतेराविद्धन्निरकृन्तन्नेवमेवैतस्यैतद्यद्वेष्ठितं यद्ग्रथितं य्यद्रुण्ण्यन्तन्निष्कृन्तन्ति स विद्याद्यथैव तत्प्र-जापतेराविद्धन्निरकृन्तन्नेवमेव म ऽइदं य्यद्वेष्ठितं य्यद्ग्रथितं य्यद्रुण्ण्यन्तन्निष्कृन्तन्तीति ॥ ७ ॥ उदरमेवास्येडा ।

तद्यथैवाद ऽइडायाᳪं समवद्यन्त्येवमेवेदं विश्वरूपमन्न-मुदरे समवधीयते ॥ ८ ॥ त्रयोऽनुयाजाः । इम ऽएवास्य तेऽवाञ्चस्त्रयः प्राणा बाहू ऽएवास्य सूक्तवाकश्च शंय्योर्वाकश्च चत्वारः पत्नीसंयाजाश्चतस्रो वै प्रतिष्ठा ऽऊरू द्वावष्ठीवन्तौ द्वौ पादावेवास्य समिष्टयजुः ॥ ९ ॥ ता ऽएकविᳪंशतिराहुतयः । द्वावाघारौ पञ्च प्रयाजा द्वावाज्यभागावाग्नेयः पुरोडाशस्तद्दशाग्नीषोमीय ऽउपाᳪंशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदिडा त्रयोऽनुयाजाः सूक्तवाकश्च शंय्योर्वाकश्चाथ यद्देवादः पत्नीसंयाजेषु सम्प्रगृह्णाति समिष्टयजुश्च ॥ १० ॥ ता ऽएकविᳪंशतिराहुतयः । द्वादश वै मासाः सँवत्सरस्य पञ्चऽर्त्तवस्त्रयो लोकास्तद्विᳪंशतिरेष ऽएवैकविᳪंशो य ऽएष तपति सैषा गतिरेषा प्रतिष्ठा तदेताङ्गतिमेताम्प्रतिष्ठाङ्गच्छति ॥ ११ ॥ तद्ध स्मैतदारुणिराह । अर्द्धमासशो वा ऽअहममुनादित्येन स लोको भवामि तामहन्दर्शपूर्णमासयोः सम्पदं वेदेति ॥ ११ ॥ तदाहुः । आत्मयाजी श्श्रेया३न्देवयाजी३ इत्यात्मयाजीति ह ब्रूयात्स ह वा ऽआत्मयाजी यो वेदेदम्मेऽनेनाङ्गᳪं संस्क्रियत ऽइदम्मेऽनेनाङ्गमुपधीयत ऽइति स यथाहिस्त्वचो निर्मुच्येतैवमस्मान्मर्त्याच्छरीरात्पाप्मनो निर्मुच्यते स ऽऋङ्मयो यजुर्मयः साममय ऽआहुतिमयः स्वर्गँल्लोकमभिसम्भवति ॥ १३ ॥ अथ ह स देवयाजी यो वेद । देवानेवाहमिदं यजे देवान्त्सपर्य्यामीति स यथा श्श्रेयसे

पापीयान्बलिꣳ हरेद्वैश्यो वा राज्ञे बलिꣳ हरेदेवꣳ स स ह न तावन्तँल्लोकञ्जयति यावन्तमितरः ॥ १४ ॥

द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥



[ दर्शपूर्णमासयागस्य विशिष्टफलसाधनताप्रतिपादनम् ]

सँवत्सरो यज्ञः । स यो ह वै सँवत्सरो यज्ञ ऽइति वेदान्ते हैवास्य सँवत्सरस्येष्टम्भवत्यथो यत्किञ्च सँवत्सरे क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ १ ॥ ऋतव ऽऋत्विजः । स यो ह वा ऽऋतव ऽऋत्विज ऽइति वेदान्ते हैवास्यऽर्त्तूनामिष्टम्भवत्यथो यत्किञ्चऽर्त्तुषु क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ २ ॥ मासा हवीꣳषि । स यो ह वै मासा हवीꣳषीति वेदान्ते हैवास्य मासानामिष्टम्भवत्यथो यत्किञ्च मासेषु क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ ३ ॥ अर्द्धमासा हविष्पात्राणि । स यो ह वा ऽअर्द्धमासा हविष्पात्राणीति वेदान्ते हैवास्यार्द्धमासानामिष्टम्भवत्यथो यत्किञ्चार्द्धमासेषु क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ ४ ॥ अहोरात्रे परिवेष्ट्री । स यो ह वा ऽअहोरात्रे परिवेष्ट्री ऽइति वेदान्ते हैवास्याहोरात्रयोरिष्टम्भवत्यथो यत्किञ्चाहोरात्रयोः क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ ५ ॥ इयमेव प्रथमा सामिधेनी । अग्निर्द्वितीया वायु-

स्तृतीयान्तरिक्षञ्चतुर्थी द्यौष्पञ्चम्यादित्यः षष्ठी चन्द्रमाः सप्तमी मनोऽष्टमी वाङ्नवमी तपो दशमी ब्रह्मैकादश्येता हि वा ऽइदꣳ सर्वꣳ समिन्धत ऽएताभिरिदꣳ सर्वꣳ समिद्धन्तस्मात्सामिधेन्यो नाम ॥ ६ ॥ स वै त्रिः प्रथमामन्वाह । स यत्प्रथममन्वाह प्राचीन्तेन दिशञ्जयति यद्द्वितीयन्दक्षिणान्तेन दिशञ्जयति यत्तृतीयमूर्द्ध्वामेव तेन दिशञ्जयति ॥ ७ ॥ त्रिर्वैवोत्तमामन्वाह । स यत्प्रथममन्वाह प्रतीचीन्तेन दिशञ्जयति यद्द्वितीयमुदीचीन्तेन दिशञ्जयति यत्तृतीयमिमामेव तेन प्रतिष्ठाञ्जयत्येवमु हाभिरिमाँल्लोकाञ्जयत्येता दिशः ॥ ८ ॥ ऋतमेव पूर्व्व ऽआघारः । सत्यमुत्तरोऽव ह वा ऽऋतसत्ये रुन्द्धेऽथो यत्किञ्चऽर्त्तसत्याभ्याञ्जय्यꣳ सर्वꣳ हैव तज्जयति ॥ ९ ॥ त्विषिरेव प्रथमः प्रयाजः । अपचितिर्द्वितीयो यशस्तृतीयो ब्रह्मवर्चसञ्चतुर्थोऽन्नाद्यम्पञ्चमः ॥ १० ॥ स प्रथमम्प्रयाजमनुमन्त्रयेत । त्विषिमान्भूयासमित्यपचितिमान्भूयासमिति द्वितीयं यशस्वी भूयासमिति तृतीयम्ब्रह्मवर्चसी भूयासमिति चतुर्थमन्नादो भूयासमिति पञ्चमन्त्विषिमान्ह वा ऽअपचितिमान्यशस्वी ब्रह्मवर्चस्यन्नादो भवति य ऽएवमेतद्वेद ॥ ११ ॥ एतद्ध स्म वै तद्विद्वानाह । श्वेतकेतुरारुणेयः कꣳ स्विद्देवापरीषु महनागमिवाभिसꣳसारन्दिदृक्षितारो य ऽएवमेतत्प्रयाजानां यशो वेदितेति ॥ १२ ॥ भूतमेव पूर्व्व ऽआज्यभागः । भविष्यदुत्तरोऽव ह वै भूतञ्च भविष्यच्च

रुन्द्धेऽथो यत्किञ्च भूतेन च भविष्यता च जय्यꣳ सर्वꣳ हैव तज्जयति ॥ १३ ॥ ब्रह्माग्नेयः पुरोडाशः । स यो ह वै ब्रह्माग्नेयः पुरोडाश इति वेदाव ह ब्रह्म रुन्द्धेऽथो यत्किञ्च ब्रह्मणा जय्यꣳ सर्वꣳ हैव तज्जयति ॥ १४ ॥ क्षत्रमुपाꣳशुयाजः । स यो ह वै क्षत्रमुपाꣳशुयाज इति वेदाव ह क्षत्रꣳ रुन्द्धेऽथो यत्किञ्च क्षत्रेण जय्यꣳ सर्वꣳ हैव तज्जयति तद्यदुपाꣳशुयाजं कुर्वन्त्येके नैके तस्मादुच्चैश्चोपाꣳशु च क्षत्रायाचक्षते ॥ १५ ॥ विडुत्तरः पुरोडाशः । स यो ह वै विडुत्तरः पुरोडाश इति वेदाव ह विशꣳ रुन्द्धेऽथो यत्किञ्च विशा जय्यꣳ सर्वꣳ हैव तज्जयति तद्यदाग्नेयश्च पुरोडाश उपाꣳशुयाजश्च पूर्वौ भवतस्तस्मादुभे ब्रह्म च क्षत्रञ्च विशि प्रतिष्ठिते ॥ १६ ॥ राष्ट्रꣳ सान्नाय्यम् । स यो ह वै राष्ट्रꣳ सान्नाय्यमिति वेदाव ह राष्ट्रꣳ रुन्द्धेऽथो यत्किञ्च राष्ट्रेण जय्यꣳ सर्वꣳ हैव तज्जयति तद्यत्सन्नयन्त्येके नैके तस्माद्राष्ट्रꣳ सञ्चैति वि च ॥ १७ ॥ तपः स्विष्टकृत् । स यो ह वै तपः स्विष्टकृदिति वेदाव ह तपो रुन्द्धेऽथो यत्किञ्च तपसा जय्यꣳ सर्वꣳ हैव तज्जयति ॥ १८ ॥ लोकः प्राशित्रम् । स यो ह वै लोकः प्राशित्रमिति वेदाव ह लोकꣳ रुन्द्धेऽथो यत्किञ्च लोकेन जय्यꣳ सर्वꣳ हैव तज्जयति नो ह लवेन लोकाद्व्यथते लवेन ह वा अमुष्मिँल्लोके लोकाद्व्यथन्तेऽथ य एवं वेद न ह बहु चन पापङ्कृत्वा लोकाद्व्यथते ॥ १९ ॥ अद्भिरेडा ।

न्न षो ह वै इश्रद्धेडेति वेद्राव ह इश्रद्धाꣳ रुन्द्धेऽथो यत्किञ्च इश्रद्धया जरुयहः सर्वꣳ हैव तज्जयति ॥ २० ॥ अशनिरेव प्प्रथमोऽनुयाजः । ह्रादुनिर्द्वितीय ऽउल्कुषी तृतीयः ॥२१॥ स प्प्रथममनुयाजमनुमन्त्रयेत् । अशन्न्यमुञ्जहीति यद्द्विष्यात्ह्रादुन्न्यमुञ्जहीति द्वितीयमुल्कुष्ष्यमुञ्जहीति तृतीयम् । २२ ॥ स य ऽएष क्षिप्प्रम्म्रियते । अशनिर्ह तमनुयाजो हन्त्यथ यो विस्रवन्न्मिश्श्र ऽइव ह्रादुनिर्ह तमनुयाजो हन्त्यथ योऽभ्युष्टमिश्श्र ऽइवोल्ककुषी ह तमनुयाजो हन्ति ॥ २३ ॥ सैषा यज्ञमेनिः । एतया वै मेन्न्या देवा ऽअसुरान्पराभावयाञ्चक्रुस्तथो ऽएवैवंविद्यजमानः पाप्प्मानन्द्विषन्तम्भ्रातृव्व्यम्पराभावयति ॥ २४ ॥ स यदनुयाजान्तो यज्ञः स्यात् । अशन्न्यन्तः स्याद्ध्रादुन्न्यन्त ऽउल्कुष्ष्यन्तस्तस्माद्वै देवानां यज्ञ ऽइडान्तो वैव शंय्ववन्तो वा ॥ २५ ॥ प्रयाजैर्वै देवाः । स्वर्गँल्लोकमायँस्तानसुरा ऽअन्वाजिगाꣳसँस्ताननुयाजैः प्प्रत्यौहँस्तद्यदनुयाजा ऽइज्ज्यन्ते पाप्प्मानमेव तद्द्विषन्तम्भ्रातृव्व्यं यजमानः प्प्रत्यूहति ॥ २६ ॥ प्राणा वै प्प्रयाजाः । अपाना ऽअनुयाजास्तस्मात्प्रयाजाः प्प्राञ्चो हूयन्ते तद्धि प्प्राणरूपम्प्रत्यञ्चोऽनुयाजास्तदपानरूपमेता ह वै दर्शपूर्णमासयोरुपसदो यदनुयाजास्तस्मात्त ऽउपसद्रूपेण प्प्रत्यञ्चो हूयन्ते ॥ २७ ॥ सꣳस्था सूक्तवाकः । स यो ह वै सꣳस्था सूक्तवाक ऽइति वेद्राव ह सꣳस्थाꣳ रुन्द्धेऽथो यत्किञ्च सꣳस्थया जरुयहः सर्वꣳ हैव तज्जयति गच्छति वयसः सꣳस्थाम् ॥ २८ ॥

प्रतिष्ठा शँय्योर्वाकः । स यो ह वै प्प्रतिष्ठा शँय्योर्वाक ऽइति वेदाव ह प्प्रतिष्ठाᳯ रुन्द्धेऽथो यत्किञ्च प्प्रतिष्ठया जय्यᳯ सर्वᳯ हैव तज्जयति गच्छति प्प्रतिष्ठाम् ॥ २९ ॥ ते देवाः । एतान्पत्नीसँय्याजान्पश्चात्प्प्रय्यौहन्त मिथुनमेवैतदुपरिष्टाददधत प्प्रजात्यै तद्यत्पत्नीसंय्याजा ऽइज्ज्यन्ते मिथुनमेवैतदुपरिष्टाद्धत्ते प्प्रजात्यै देवानाᳯ ह वै प्प्रजातिमनु प्प्रजायते मिथुनेन मिथुनेन ह प्प्रजायते य ऽएवमेतद्वेद ॥ ३० ॥ अन्नᳯ समिष्टयजुः । स यो ह वा ऽअन्नᳯ समिष्टयजुरिति वेदाव हान्नᳯ रुन्द्धेऽथो यत्किञ्चान्नेन जय्यᳯ सर्वᳯ हैव तज्जयति ॥ ३१ ॥ सँवत्सरो यजमानः । तमृतवो याजयन्ति वसन्त ऽआग्नीद्ध्रस्तस्माद्वसन्ते दावाश्चरन्ति तद्ध्यग्निरूपङ्ग्रीष्म्मोऽद्ध्वर्य्युस्तप्त ऽइव वै ग्ग्रीष्म्मस्तप्तमिवाद्ध्वर्य्युर्न्निष्क्रामति वर्षा ऽउद्गाता तस्माद्यदा बलवद्वर्षति साम्म्न ऽइवोपब्दिः क्रियते शरद्ब्रह्मा तस्माद्यदा सस्यम्पच्च्यते ब्रह्मण्यवत्यः प्प्रजा ऽइत्याहुर्हेमन्तो होता तस्माद्धेमन्न्वषट्कृताः पशवः सीदन्त्येता ह वा ऽएनन्देवता याजयन्ति स यद्येनमेषावीरा याजयेयुरेता ऽएव देवता मनसा ध्यायेदेता हैवैनन्देवता याजयन्ति ॥ ३२ ॥ अथ हैषैव तुला । यद्दक्षिणो वेद्यन्तः स यत्साधु करोति तदन्तर्वेद्द्यथ यदसाधु तद्बहिर्वेदि तस्म्माद्दक्षिणं वेद्यन्तमधिस्पृश्श्येवासीत तुलायाᳯ ह वा ऽअमुष्मिँल्लोक ऽआदधति यतरद्यᳯस्यति तदन्वेष्ष्यति यदि साधु वासाधु वेत्यथ य ऽएवं वेदास्मिन्हैव लोके

तुलामारोहत्त्यत्त्यमुष्मिमँल्लोके तुलाधानम्मुच्यते साधुकृत्त्या हैवास्य यच्छति न पापकृत्त्या ॥ २३ ॥ [ अर्थ प्रपाठकः ५२ ]

द्वितीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ अग्निहोत्रावयवोपासनाप्रकारः ]

व्वाग्घ वा ऽएतस्याग्निहोत्रस्याग्निहोत्री *। मन ऽएव व्वत्सस्तदिदम्मनश्च व्वाक्च समानमेव सन्नानेव तस्म्मात्त्समान्न्या रज्ज्वा व्वत्सञ्च मातरञ्चाभिदधति तेज ऽएव श्रद्धा सत्त्यमाज्ज्यम् ॥ १ ॥ तद्धैतज्जनको व्वैदेहः । याज्ञवल्क्यम्पप्रच्छ व्वेत्थाग्निहोत्रं याज्ञवल्क्या३ ऽइति व्वेद सम्म्राडिति किमिति पय ऽएवेति ॥ २ ॥ यत्पयो न स्यात् । केन जुहुया ऽइति व्रीहियवाभ्भ्यामिति यद्व्रीहियवौ न स्याताङ्केन जुहुया ऽइति या ऽअन्न्या ऽओषधय ऽइति यदन्न्या ऽओषधयो न स्युः केन जुहुया ऽइति या ऽआरण्ण्या ऽओषधय ऽइति यदारण्ण्या ऽओषधयो न स्युः केन जुहुया ऽइति व्वानस्पत्त्येनेति यद्वानस्पत्त्यन्न स्यात्केन जुहुया ऽइत्त्यद्भिरिति यदापो न स्युः केन जुहुया ऽइति ॥ ३ ॥ स होवाच । न वा ऽइह तर्हि किञ्चनासीदथैतदहूयतैव सत्त्यꣳ श्रद्धायामिति व्वेत्थाग्निहोत्रं याज्ञवल्क्य धेनुशतन्ददामीति होवाच ॥ ४ ॥ तदप्प्येते श्लोकाः । किꣳ

* अग्निहोत्रमिति कर्मनामधेयम् । अग्नये होत्रं होमोऽस्मिन्निति तद्व्युत्पत्तिः । उपचारात् तदर्थं पयोऽप्यग्निहोत्रम्, तस्य दोग्ध्री धेनुरप्यग्निहोत्रीत्युच्यते ।

स्विद्विद्वान्प्रवसत्त्यग्निहोत्त्री गृहेब्भ्यः कथꣳ स्विदस्य काव्व्यङ्कथꣳ सन्ततो ऽअग्निभिरिति कथꣳ स्विदस्यानपप्प्रोषितम्भवतीत्त्येवैतदाह ॥ ५ ॥ यो जविष्ठो भुवनेषु । स विद्वान्प्रवसन्विदे तथा तदस्य काव्यन्तथा सन्ततो ऽअग्निभिरिति मन ऽएवैतदाह मनसैवास्यानपप्प्रोषितम्भवतीति ॥ ६ ॥ यत्त्र दूरम्परेत्त्य । अथ तत्र प्प्रमाद्यति कस्म्मिन्त्सास्य हुताहुतिर्गृहे यामस्य जुह्वतीति यत्त्र दूरम्परेत्त्याथ तत्र प्प्रमाद्यति कस्म्मिन्नस्य साहुतिर्हुता भवतीत्त्येवैतदाह ॥ ७ ॥ यो जागार भुवनेषु । विश्श्वा जातानि योऽविभः तस्म्मिन्त्सास्य हुताहुतिर्गृहे यामस्य जुह्वतीति प्प्राणमेवैतदाह तस्म्मादाहुः प्प्राण ऽएवाग्निहोत्रमिति ॥ ८ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अग्निहोत्रे मिथुनत्वदर्शनम् ]

यो ह वा ऽअग्निहोत्रे । षण्मिथुनानि वेद मिथुनेन मिथुनेन ह प्प्रजायते सर्वाभिः प्प्रजातिभिर्य्यजमानश्च पत्त्नी च तदेकम्मिथुनन्तस्म्मादस्य पत्त्नीवदग्निहोत्रꣳ स्यादेतन्मिथुनमुपाप्नवानीति वत्सश्चाग्निहोत्री च तदेकम्मिथुनन्तस्म्मादस्य पुंवत्साग्निहोत्री स्यादेतन्मिथुनमुपाप्नवानीति स्थाली चाङ्गाराश्च तदेकम्मिथुनꣳ स्रुक्च स्रुवश्च तदेकम्मिथुनमाहवनीयश्च समिच्च तदेकम्मिथुनमाहुतिश्च स्वाहाकारश्च तदेकम्मिथुनमेतानि ह वा

ऽअग्निहोत्रे षण्मिथुनानि तानि य ऽएवं वेद मिथुनेन मिथुनेन ह प्रजायते सर्वाभिः प्रजातिभिः ॥ १ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ प्रसङ्गतः आख्यायिकया ब्रह्मचारिधर्मप्रतिपादनम् ]

ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत् । तस्मै ब्रह्मचारिणमेव न प्रायच्छत्सोऽब्रवीदस्तु मह्यमप्येतस्मिन्भाग ऽइति यामेव रात्रिꣳ समिधन्नाहराता ऽइति तस्माद्याꣳ रात्रिम्ब्रह्मचारी समिधन्नाहरत्यायुष ऽएव तामवदाय वसति तस्माद्ब्रह्मचारी समिधमाहरेन्नेदायुषोऽवदाय वसानीति ॥ १ ॥ दीर्घसत्रं वा ऽएष ऽउपैति । यो ब्रह्मचर्यमुपैति स यामुपयन्त्समिधमादधाति सा प्रायणीया याꣳ स्नास्यन्त्सोदयनीयाथ या ऽअन्तरेण सत्र्या ऽएवास्य ता ब्राह्मणो ब्रह्मचर्यमुपयन् ॥ २ ॥ चतुर्धा भूतानि प्रविशति । अग्निम्पदा मृत्युम्पदाचार्यम्पदात्मन्येवास्य चतुर्थः पादः परिशिष्यते ॥ ३ ॥ स यदग्नये समिधमाहरति । य ऽएवास्याग्नौ पादस्तमेव तेन परिक्रीणाति तꣳ संस्कृत्यात्मन्धत्ते स ऽएनमाविशति ॥ ४ ॥ अथ यदात्मानन्दरिद्रीकृत्येव । अह्रीर्भूत्वा भिक्षते य ऽएवास्य मृत्यौ पादस्तमेव तेन परिक्रीणाति तꣳ संस्कृत्यात्मन्धत्ते स ऽएनमाविशति ॥ ५ ॥ अथ यदाचार्यवचः करोति । यदाचार्याय कर्म्म करोति य ऽएवास्याचार्ये पादस्तमेव तेन परिक्रीणाति तꣳ संस्कृत्यात्मन्धत्ते

स ऽएनमाविशति ॥ ६ ॥ न ह वै स्नात्वा भिक्षेत। अप ह वै स्नात्वा भिक्षाञ्जयत्यप ज्ञातीनामशनायामप पितॄणाᳩं स ऽएवं विद्वान्यस्या ऽएव भूयिष्ठᳩं श्लाघेत ताम्भिक्षेतेत्याहुस्तल्लोक्क्यमिति स यद्यन्याम्भिक्षितव्यान्न विन्देदपि स्वामेवाचार्य्यजायाम्भिक्षेताथो स्वाम्मातरन्नैनᳪं सप्तम्म्यभिक्षितातीयात्तमेवं विद्वाᳩंसमेवञ्चरन्तᳪं सर्वे वेदा ऽआविशन्ति यथा ह वा ऽअग्निᳪं समिद्धो रोचत ऽएवᳪं ह वै स स्नात्वा रोचते य ऽएवं विद्वान्ब्रह्म-चर्य्यञ्चरति ॥ ७ ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ आख्यायिकया दर्शपूर्णमासयोः सर्वोत्पत्तिहेतुत्वकथनम् ]

उद्दालको हारुणिᳪं। उदीच्च्यान्वृतो धावयाञ्चकार तस्य निष्क ऽउपाहित ऽआसैतद्ध स्म वै तत्पूर्वेषां व्वृता-नान्धावयतामेकधनमुपाहितम्भवत्युपवल्हाय बिभ्यतान्ता-न्होदीच्च्यानाम्ब्राह्मणान्भीर्विवेद ॥ १ ॥ कौरुपाञ्चालो वा ऽअयम्ब्रह्मा ब्ब्रह्मपुत्रᳪं। यद्वै नोऽयमर्द्धन्न पर्य्यादुदीत हन्तैनम्ब्रह्मोद्यमाह्वयामहा ऽइति केन वीरेणेति स्वैदायनेनेति शौनको ह स्वैदायन ऽआस ॥ २ ॥ ते होचुᳪं। स्वैदायन त्वया वीरेणेमम्प्रतिसंयतामहा ऽइति स होवाचोपात्र खलु रमताहन्न्वेनं व्वेदानीति तᳪं हाभिप्प्रपेदे तᳪं हाभि-प्प्रपन्नमभ्युवाद स्वैदायना३ ऽइति हो३ गौतमस्य पुत्त्रे-

तीत्तरः प्प्रतिशुश्श्राव तꣳह ह तत ऽएव प्प्रष्टुन्दध्रे ॥ ३ ॥
स वै गौतमस्य पुत्त्र व्वृतो जनन्धानयेत् । यो दर्शपूर्ण्ण-
मासयोरष्टौ पुरस्तादाज्यभागान्विद्यात्पञ्च मद्ध्यतो हवि-
र्भागान्षट् प्राजापत्यानष्टा ऽउपरिष्टादाज्यभागान् ॥ ४ ॥
स वै गौतमस्य पुत्त्र व्वृतो जनन्धावयेत् । यस्तद्दर्शपूर्ण्ण-
मासयोर्विद्याद्यस्म्मादिमाः प्प्रजा ऽअदुन्तका जायन्ते
यस्म्मादासाञ्जायन्ते यस्म्मादासाम्प्रभिद्यन्ते यस्म्मादासाꣳ
सन्तिष्ठन्ते यस्म्मादासाम्पुनरुत्तमे व्वयसि सर्व्वं ऽएव
प्प्रभिद्यन्ते यस्म्मादधर ऽएवाग्ग्रे जायन्तेऽथोत्तरे यस्म्मादु-
णीयाꣳस ऽएवाधरे प्प्रथीयाꣳस ऽउत्तरे यस्म्माद्दꣳष्ट्रा
व्वर्षीयाꣳसो यस्म्मात्समा ऽएव जम्भ्याः ॥ ५ ॥ स वै
गौतमस्य पुत्त्र व्वृतो जनन्धावयेत् । यस्तद्दर्शपूर्ण्णमासयो-
र्विद्याद्यस्म्मादिमाः प्प्रजा लोमशा जायन्ते यस्म्मादासा-
म्पुनरिव श्म्मश्रूण्ण्यौपपक्ष्याणि दुर्व्वीरिणानि जायन्ते
यस्म्माच्छीर्षण्ण्येवाग्ग्रे पलितो भवत्यथ पुनरुत्तमे व्वयसि
सर्व्वं ऽएव पलितो भवति ॥ ६ ॥ स वै गौतमस्य पुत्त्र
व्वृतो जनन्धावयेत् । यस्तद्दर्शपूर्ण्णमासयोर्विद्याद्यस्म्मा-
त्कुमारस्य रेतः सिक्तन्न सम्भवति यस्म्मादस्य मद्ध्यमे
व्वयसि सम्भवति यस्म्मादस्य पुनरुत्तमे व्वयसि न सम्भ-
वति ॥ ७ ॥ यो गायत्त्रीꣳ हरिणीम् । ज्योतिष्पक्षां
य्यजमानꣳ स्वर्ग्गँल्लोकमभिवहन्तीं व्विद्यादिति तस्म्मै ह
निष्कम्प्रददावनूचानः स्वैदायनासि सुवर्ण्णं व्वाव सुवर्ण्ण-
विदे ददतीति तꣳह होपगुह्य निश्चक्राम तꣳह ह पप्प्रच्छुः

किमिवैष गौतमस्य पुत्रोऽभूदिति ॥ ८ ॥ स होवाच । यथा ब्रह्मा ब्रह्मपुत्रो मूर्द्धास्य विपतेद्य ऽएनमुपवल्हेतेति ते ह तत ऽएव विप्प्रेयुस्तꣳ ह तत ऽएव समित्पाणिः प्प्रतिचक्रम ऽउप त्वायानीति किमद्ध्येष्ष्यमाण ऽइति यानेव मा प्प्रश्नाननप्प्राक्षीस्तानेव मे विब्ब्रूहीति स होवाचानुपेतायैव त ऽएनान्ब्रवाणीति ॥ ९ ॥ तस्म्मा ऽउ हैतदुवाच । द्वावाघारौ पञ्च प्प्रयाजा ऽआग्नेय ऽआज्यभागोऽष्टम ऽएतेऽष्टौ पुरस्तदाज्यभागाः सौम्म्य ऽआज्यभागो हविर्ब्भागाणाम्प्रथमो हविर्हि सोम ऽआग्नेयः पुरोडाशोऽग्नीषोमीय ऽउपाꣳशुयाजो[1]ऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदेते पञ्च मद्ध्यतो हविर्ब्भागाः ॥१०॥ प्राशित्रं[2] श्वेडा च । यच्चाग्नीध ऽआदधाति ब्रह्मभागो यजमानभागोऽन्वाहार्य्य ऽएते षट् प्राजापत्यास्त्रयोऽनुयाजाश्चत्वारः पत्नीसꣳयाजाः† समिष्टयजुरष्टममेतेऽष्टा ऽउपरिष्टादाज्यभागाः ॥ ११ ॥ अथ यदपुरोऽनुवाक्क्यकाः प्प्रयाजा भवन्ति । तस्म्मादिमाः प्प्रजा ऽअदन्तका जायन्तेऽथ यत्पुरोऽनुवाक्क्यवन्ति हवीꣳषि भवन्ति तस्म्माद्दासाजायन्तेऽथ यदपुरोऽनुवाक्क्यका ऽअनुयाजा भवन्ति तस्म्मादासाम्प्रभिद्यन्तेऽथ यत्पुरोऽनुवाक्क्यवन्तः पत्नीसꣳयाजा भवन्ति तस्म्माद्दासाꣳ सन्तिष्ठन्तेऽथ यदपुरोऽनुवाक्क्यकः

---

(१) उपांशु इज्यते इति उपांशुयाजः । एवमुपांशुजपश्च "जिह्वोष्ठौ चालयेत् किञ्चिद् देवतागतमानसः । निजश्रवणयोग्यः स्यादुपांशु स जपः स्मृतः ॥" इति स्मृत्युक्तः

(२) प्राशित्रं ब्रह्मणो भागः ।

† पत्नीदेवताका दर्शपूर्णमासाङ्गभूताश्चत्वारो यागविशेषाः पत्नीसंयाजाः ।

समिष्टयजुर्भवति तस्मादासाम्पुनरुत्तमे व्वयसि सर्व्व ऽएव प्प्रभिद्यन्ते ॥ १२ ॥ * अथ यदनुवाक्क्यामनूच्च्य । याज्ज्यया यजति तस्मादधर ऽएवाग्ग्रे जायन्तेऽथोत्तरेऽथ यद्गायत्त्रीमनूच्च्य त्रिष्टुभा यजति तस्मादणीयाꣳस ऽएवाधरे प्प्रथीयाꣳस ऽउत्तरेऽथ यत्प्प्राञ्चावाघारावाघारयति तस्माद्दꣳष्ट्रा व्वर्षीयाꣳसोऽथ यत्समच्छन्दसावेव संयाज्ज्ये भवतस्तस्मात्समा ऽएव जम्भ्याः ॥ १३ ॥ अथ यद्बर्हिस्तृणाति । तस्मादिमाः प्प्रजा लोमशा जायन्तेऽथ यत्पुनरिव प्प्रस्तरꣳ[A] स्तृणाति तस्मादासाम्पुनरिव श्श्मश्रूण्ण्यौपपक्ष्याणि दुर्ब्बीरिणानि जायन्तेऽथ यत्केवलमेवाग्ग्रे प्प्रस्तरमनुप्प्रहरति तस्माच्छीर्षण्ण्येवाग्ग्रे पलितो भवत्त्यथ यत्सर्व्वमेव बर्हिरनुप्प्रहरति तस्मात्पुनरुत्तमे व्वयसि सर्व्व ऽएव पलितो भवति ॥ १४ ॥ अथ यदाज्ज्यहविषः प्प्रयाजा भवन्ति । तस्मात्कुमारस्य रेतः सिक्तन्न सम्भवत्त्युदकमिवैव भवत्त्युदकमिव ह्याज्ज्यमथ यन्मद्ध्ये यज्ञस्य दद्ध्ना पुरोडाशेनेति चरन्ति तस्मादस्य मद्ध्यमे व्वयसि सम्भवति द्रप्प्सीवैव भवति द्रप्प्सीव हि रेतोऽथ यदाज्ज्यहविष ऽएवानुयाजा भवन्ति तस्मादस्य पुनरुत्तमे व्वयसि न सम्भवत्त्युदकमिवैव भवत्त्युदकमिव ह्याज्ज्यम् ॥ १५ ॥ व्वेदिरेव गायत्त्री । तस्यै येऽष्टौ पुरस्तादाज्ज्यभागाः स दक्षिणः पक्षो येऽष्टा ऽउपरिष्टादाज्ज्यभागाः स

---

* शतम् ५७०० ।

(A) प्रस्तरः कुशमुष्टिः ।

ऽउत्तरः पक्षः सैषा गायत्री हरिणी ज्योतिष्पक्षा यजमानꣳ स्वर्गँल्लोकमभिवहति य ऽएवमेतद्वेद ॥ १६ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ स्रुगादानप्रकारः ]

अथातः स्रुचोरादानस्य । तद्धैतदेके कुशला मन्यमाना दक्षिणेनैव जुहूमाददते सव्येनोपभृतन्न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयात्प्रतिप्रतिन्न्वा ऽअयमध्वर्युर्यजमानस्य द्विषन्तम्भ्रातृव्यमकत्प्रत्युद्यामिनमितीश्वरो ह तथैव स्यात् ॥ १ ॥ इत्थमेव कुर्य्यात् । उभाभ्यामेव पाणिभ्याञ्जुहूम्परिगृह्योपभृत्यधिनिदध्यात्तस्य नोपमीमाꣳसास्ति तत्पशव्यमायुष्यन्ते ऽअसꣳशिञ्जयन्नाददीत ते * यत्सꣳशिञ्जयेदयोगक्षेमो यजमानमृच्छेत्तस्मादसꣳशिञ्जयन्नाददीत ॥ २ ॥ अथातोऽतिक्रमणस्य । वज्रेण ह वा ऽअन्योऽध्वर्युर्यजमानस्य पशून्विधमति वज्रेण हास्मा ऽअन्य ऽउपसमूहत्येष ह वा ऽअध्वर्युर्वज्रेण यजमानस्य पशून्विधमति य ऽआश्रावयिष्यन्दक्षिणेनातिक्रामति सव्येनाश्राव्याथ हास्मा ऽएष ऽउपसमूहति य ऽआश्रावयिष्यन्त्सव्येनातिक्रामति दक्षिणेनाश्राव्यैष हास्मा ऽउपसमूहति ॥ ३ ॥ अथातो धारणस्य । तद्धैतदेके कुशला मन्यमानाः प्रगृह्य बाहू स्रुचौ धारयन्ति न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयाच्छूलौ न्न्वा ऽअयमध्व-

* 'ग' 'ज' पुस्तकयोः 'ते' इति नास्ति ।

र्ध्वबाहू ऽअकृत शूलबाहुर्भविष्यतीतीश्वरो ह तथैव स्यादथ हैष मद्ध्यमः प्प्राणस्तस्मादु तमुपन्न्यच्च्येवैव धारयेत् * ॥ ४ ॥ अथात ऽआश्श्रावणस्य । षड्ढ वा ऽआश्श्रावितानि न्न्यक्तिर्य्यगूर्द्ध्वङ्कृपणम्बहिःश्श्रयन्तःश्रि ॥ ५ ॥ एतद्ध वै न्न्यक् । सोऽयमुच्चैरादाय शनैर्न्निदधाति स यमिच्छेत्पापीयान्त्स्यादिति तस्योच्चैरादाय शनैर्न्निदद्ध्यात्तेन स पापीयान्भवति ॥ ६ ॥ अथ हैतत्तिर्य्यक् । सोऽयं यावतैवादत्ते तावता निदधाति स यमिच्छेन्नैव श्श्रेयान्त्स्यान्न पापीयानिति तस्य यावतैवाददीत तावता निदद्ध्यात्तेन स नैव श्श्रेयान्न पापीयान्भवति ॥ ७ ॥ अथ हैतदूर्द्ध्वम् । सोऽयꣳ शनैरादायोच्चैर्न्निदधाति स यमिच्छेच्छ्रेयान्त्स्यादिति तस्य शनैरादायोच्चैर्न्निदद्ध्यात्तेन स श्श्रेयान्भवति ॥ ८ ॥ अथ हैतत्कृपणम् । सोऽयमणु दीर्घमस्वरमाश्श्रावयति यो हैनन्तत्र ब्ब्रूयात्कृपणन्न्वा ऽअयमद्ध्वर्य्युर्य्यजमानमकर्द्विषतो ब्भ्रातृव्व्यस्योपावसायिनमितीश्वरो ह तथैव स्यात् ॥ ९ ॥ अथ हैतद्बहिःश्रि । सोऽयमपव्व्यादायौष्ठा ऽउच्चैरस्वरमाश्श्रावयति श्श्रीर्वै स्वरो बाह्यत ऽएव तच्छ्रियन्धत्तेऽशनायुको भवति ॥ १० ॥ अथ हैतदन्तःश्रि । सोऽयꣳ सन्धायौष्ठा ऽउच्चैः स्वरवदाश्श्रावयति श्श्रीर्वै स्वरोऽन्तरत ऽएव तच्छ्रियन्धत्तेऽन्नादो भवति ॥ ११ ॥ स वै मन्द्रमिवोरसि । परास्तब्भ्योभयतो बार्हतमुच्चैरन्ततो निदद्ध्यात्तस्य नोपमीमाꣳ-

* तथा चोक्तं सूत्रकृता "नाभिदेशे धारणम्" ( का० श्रौ० सू० ३. २. १ )।

सास्ति तत्पशव्व्यमायुष्ष्यम् ॥ १२ ॥ अथातो होमस्य । तद्धैतदेके कुशला मन्न्यमानाः प्प्राचीᳬ स्रुचमुपावहृत्त्य हुत्त्वा पर्य्याहृत्त्योपभृत्त्यधिनिदधति न तथा कुर्य्याद्यो हैनन्तत्र ब्ब्रूयादनुयुवन्न्वा ऽअयमद्ध्वर्य्युर्य्यजमानमकदि-षतो भ्भ्रातृव्व्यस्यान्ववसायिनमितीश्श्वरो ह तथैव स्यात् ॥ १३ ॥ पार्श्वत ऽउ हैके । स्रुचमुपावहृत्त्य हुत्त्वा पर्य्याहृत्त्योपभृत्त्यधिनिदधति न तथा कुर्य्याद्यो हैनन्तत्र ब्ब्रूयादुतीर्त्थेन न्न्वा ऽअयमद्ध्वर्य्युराहुतीः प्प्रारौत्सीरसं वा शरिष्ष्यते घुणिर्वा भविष्ष्यतीतीश्श्वरो ह तथैव स्यात् ॥ १४ ॥ इत्थमेव कुर्य्यात् । प्राचीमेव स्रुचमुपावहृत्त्य हुत्त्वा तेनैवाधिहृत्त्योपभृत्त्यधिनिदध्ध्यात्तस्य नोपमीमाᳬ-सास्ति तत्पशव्व्यमायुष्ष्यम् ॥ १५ ॥ प्रदग्ग्धाहुतिर्ह वा ऽअन्न्योऽद्ध्वर्य्युः । आहुतीर्हान्न्यः सन्तर्प्पयत्त्येष ह वै प्प्रदग्ग्धाहुतिरद्ध्वर्य्युर्य्योऽयमाज्ज्यः हुत्त्वावदानानि जुहो-त्त्येतः ह वै तदुदृश्श्यमाना व्वागभ्भ्युवाद प्प्रदग्ग्धाहुतिर्न्वा ऽअयमद्ध्वर्य्युरित्त्यथ हैना ऽएष सन्तर्प्पयति सोऽयमाज्ज्यः हुत्त्वावदानानि जुहोत्त्यथ पुनरन्तत ऽआज्ज्येनाभिजुहोत्त्येष हैनाः सन्तर्प्पयति तासाᳬ सन्तृप्प्तानान्देवा हिरण्मयाँश्च-मसान्पूरयन्ते ॥ १६ ॥ तदु होवाच याज्ञवल्क्यः । यद्वा ऽउपस्तीर्य्यावदायाभिघारयति तदेवैनाः सन्तर्प्पयति तासाᳬ सन्तृप्प्तानान्देवा हिरण्मयाँश्चमसान्पूरयन्तेऽय-स्स्थूणगृहपतीनाᳬ ह वै शौल्बायनोऽद्ध्वर्य्युरास ॥ १७ ॥ स

---

(१) "नां वै" इति 'ग' 'ज' पुस्तकयोः पाठः ।

होवाच । इदमुहेदुꣳ सत्रङ्कुशपश्श्वल्प्पाज्यमथायङ्ग्गृहपतिरस्म्मीति मन्न्यत ऽइति ॥ १८ ॥ स होवाच । अद्ध्वर्य्युर्वा वै नोऽकुक्ष ऽएते वै ते स्रुचौ ये त्वꣳ सँवत्सरन्नाशक ऽआदातुं ᳕ य्यद्वै त्वाहुमेतयोरनुशिष्ष्यास्प्र प्प्रजया पशुभिर्ज्जायेथा ऽअभि स्वर्ग्गँल्लोकं व्वहेरिति ॥ १९ ॥ स होवाच । उप त्वयानीति स होवाचात्र वाव खल्ल्वर्हसि यो नꣳ सँवत्सरेऽद्ध्वर्य्युरभूरनुपेतायैव त ऽएनद्ब्रवाणीति तस्म्मा ऽउ हैतदेव स्रुचोरादानमुवाच यदेतद्व्याख्याम तस्म्मादेवंव्विदमेवाद्ध्वर्य्युङ्कुर्वीत नानेवंव्विदम् ॥ २० ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या १०४ ॥



[ मित्रविन्देष्टिः ]

प्रजापतिर्व्वै प्प्रजाः सृजमानोऽतप्प्यत । तस्म्माच्छ्रान्तात्तेपानाच्छ्रीरुदक्क्रामत्सा दीप्प्यमाना भ्भ्राजमाना लेलायन्त्यतिष्ठत्तान्दीप्प्यमानाम्भ्राजमानाँल्लेलायन्तीन्देवा ऽअभ्भ्यद्ध्यायन् ॥ १ ॥ ते प्प्रजापतिमब्ब्रुवन् । हनामेमामेदमस्या ददामहा ऽइति स होवाच स्त्री वा ऽएषा यच्छ्रीर्न्न वै स्त्रियङ्घ्नन्त्युत त्वा ऽअस्या जीवन्त्या ऽएवाददत ऽइति ॥ २ ॥ तस्या ऽअग्निरन्नाद्यमादत्त । सोमो राज्यं व्वरुणः साम्म्राज्यम्मित्रः क्षत्रमिन्द्रो बलम्बृहस्पति

(१) 'ग' 'ज' पुस्तकयोः 'एतद्व०' इति पाठ उपलभ्यते ।

ब्ब्रह्मवर्च्चसꣳ सविता राष्ट्रम्पूषा भगꣳ सरस्वती पुष्टिन्त्वष्टा रूपाणि ॥ ३ ॥ सा प्प्रजापतिमब्रवीत् । आ वै म ऽइदमदिषतेति स होवाच यज्ञेनैनान्पुनर्य्याचस्वेति ॥ ४ ॥ सैतान्दशहविषमिष्टिमपश्श्यत् । आग्नेयमष्टाकपालम्पुरोडाशꣳ सौम्म्यञ्चरुं व्वारुणन्दशकपालम्पुरोडाशम्मैत्रञ्चरुमैन्द्रमेकादशकपालम्पुरोडाशम्बार्हस्पत्यञ्चरुꣳ सावित्रन्द्वादशकपालं व्वाष्टाकपालं व्वा पुरोडाशम्पौष्णञ्चरुꣳ सारस्वतञ्चरुन्त्वाष्ट्रन्दशकपालम्पुरोडाशम् * ॥ ५ ॥ तानेतयानुवाक्क्ययान्ववदत् । अग्निः सोमो व्वरुणो मित्र ऽइन्द्रो बृहस्पतिः सविता यः सहस्री ॥ पूषा नो गोभिरवसा सरस्वती त्त्वष्टा रूपाणि समनक्तु यज्ञैरिति ते प्प्रत्युपातिष्ठन्त ॥ ६ ॥ तानेतया याज्ज्यया । परस्तात्प्रतिलोमम्प्रत्यैत्त्वष्टा रूपाणि ददती सरस्वती पूषा भगꣳ सविता मे ददातु ॥ बृहस्पतिर्द्दददिन्द्रो व्वलम्मे मित्रः क्षत्रं व्वरुणः सोमो ऽअग्निरिति ते पुनर्द्दानायाद्भ्रियन्त ॥ ७ ॥ सैतानुपहोमानपश्श्यत् । अग्निरन्नादो ऽन्नपतिरन्नाद्यमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादायाग्निरुदक्क्रामत्पुनरस्या ऽअन्नाद्यमददात् ॥ ८ ॥ सोमो राजा राजपतिः । राज्ज्यमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सोम ऽउदक्क्रामत्पुनरस्यै राज्ज्यमददात् ॥ ९ ॥ व्वरुणः सम्म्राट् सम्म्राट्पतिः साम्म्राज्ज्यमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय व्वरुण ऽउदक्क्रामत्पुनरस्यै साम्म्रा-

* का० श्रौ० सू० अ० ५ कं० १२ सू०

ज्ज्यमददात् ॥ १० ॥ मित्रः क्षत्त्रं क्षत्त्रपतिः । क्षत्त्रमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय मित्र ऽउदक्क्रामत्पुनरस्यै क्षत्त्रमददात् ॥ ११ ॥ इन्द्रो बलम्बलपतिः । बलमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादायेन्द्र ऽउदक्क्रामत्पुनरस्यै बलमददात् ॥ १२ ॥ बृहस्पतिर्ब्रह्म ब्रह्मपतिः । ब्रह्मवर्चसमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय बृहस्पतिरुदक्क्रामत्पुनरस्यै ब्रह्मवर्चसमददात् ॥ १३ ॥ सविता राष्ट्रं राष्ट्रपतिः । राष्ट्रमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय सवितोदक्क्रामत्पुनरस्यै राष्ट्रमददात् ॥ १४ ॥ पूषा भगम्भगपतिः । भगमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय पूषोदक्क्रामत्पुनरस्यै भगमददात् ॥ १५ ॥ सरस्वती पुष्टिम्पुष्टिपतिः । पुष्टिमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय सरस्वत्युदक्क्रामत्पुनरस्यै पुष्टिमददात् ॥ १६ ॥ त्वष्टा रूपाणाꣳ रूपकृद्रूपपतिः । रूपेण पशूनस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय त्वष्टोदक्क्रामत्पुनरस्यै रूपेण पशूनददात् ॥ १७ ॥ ता वा ऽएताः । दश देवता दश हवीꣳषि दशाहुतयो दश दक्षिणा दशन्दशिनी विराट् श्रीर्विराट् श्रियाꣳ हैतद्विराज्ज्यन्नाद्ये प्रतितिष्ठति ॥ १८ ॥ तस्यै पञ्चदश सामिधेन्न्यो भवन्ति । उपाꣳशु देवता यजति पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजा ऽएकः समि-

(१) का० श्रौ० सू० ५. १२. १ । (२) का० श्रौ० सू० ५. १३. १ । (३) का० श्रौ० सू० ५. १३. ४ ।

ष्टयजुः * पुष्टिमन्तावाज्यभागा'वग्निना रयिमश्नवत्पोषमेव दिवे दिवे। यशसं वीरवत्तमम्' ॥ 'गयस्फानो ऽअमीवहा वसुवित्पुष्टिवर्द्धनः। सुमित्रः सोम नो भवे'ति सहस्रवत्यौ सँय्याज्ये 'नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम्' ॥ 'उत नो ब्रह्मन्नविष ऽउक्थेषु देवहूतमः। शन्नः शोचा मरुद्वृधोऽग्ने सहस्रसातम' ऽइति ॥ १९ ॥ ताँ हैताङ्गोतमो राहूगणः। विदाञ्चकार सा ह जनकं वैदेहम्प्रत्युत्ससाद ताँ हाङ्गजिद्ब्राह्मणेष्वन्विियेष तामु ह याज्ञवल्क्ये विवेद स होवाच सहस्रम्भो याज्ञवल्क्य दद्मो यस्मिन्न्वयन्त्वयि मित्रविन्दामन्वविदामेति विन्दते मित्रं राष्ट्रमस्य भवत्यप पुनर्म्मृत्युञ्जयति सर्वमायुरेति य ऽएवं विद्वानेतयेष्ट्या यजते यो वै तदेवं वेद ॥ २० ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ २ ॥

[ हविषः समृद्धिः ]

अथातो हविषः समृद्धिः। षड्ढ वै ब्रह्मणो द्वारोऽग्निर्वायुरापश्चन्द्रमा विद्युदादित्यः ॥ १ ॥ स य ऽउपदग्धेन हविषा यजते। अग्निना ह स ब्रह्मणो द्वारेण प्रतिपद्यते सोऽग्निना ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यं सलोकताञ्जयति ॥ २ ॥ अथ यो

---

* प्रधानयागादौ सम्यग् इष्टा देवता इज्यन्ते अनेन स होमः मन्त्रश्च समिष्टयजुः।

(१) ऋ० सं० १. १. १। (२) ऋ० सं० १. ६. २१। (३) ऋ० सं० ३. १. १३। (४) ऋ० सं० ३. १. १३।

विपतितेन हविषा यजते । वायुना ह स ब्ब्रह्मणो द्वारेण प्प्रतिपद्यते स वायुना ब्रह्मणो द्वारेण प्प्रतिपद्य ब्ब्रह्मणः सायुज्ज्यꣳ सलोकताञ्जयति ॥ ३ ॥ अथ योऽशृतेन हविषा यजते । अग्निर्ह स ब्ब्रह्मणो द्वारेण प्प्रतिपद्यते सोऽग्निर्ब्ब्रह्मणो द्वारेण प्प्रतिपद्य ब्ब्रह्मणः सायुज्ज्यꣳ सलोकताञ्जयति ॥ ४ ॥ अथ य ऽउपरक्तेन हविषा यजते । चन्द्रमसा ह स ब्ब्रह्मणो द्वारेण प्प्रतिपद्यते स चन्द्रमसा ब्ब्रह्मणो द्वारेण प्प्रतिपद्य ब्ब्रह्मणः सायुज्ज्यꣳ सलोकता-ञ्जयति ॥ ५ ॥ अथ यो लोहितेन हविषा यजते । विद्युता ह स ब्ब्रह्मणो द्वारेण प्प्रतिपद्यते स विद्युता ब्ब्रह्मणो द्वारेण प्प्रतिपद्य ब्ब्रह्मणः सायुज्ज्यꣳ सलोकताञ्जयति ॥ ६ ॥ अथ यः सुशृतेन हविषा यजते । आदित्येन ह स ब्ब्रह्मणो द्वारेण प्प्रतिपद्यते स ऽआदित्येन ब्ब्रह्मणो द्वारेण प्प्रतिपद्य ब्ब्रह्मणः सायुज्ज्यꣳ सलोकताञ्जयति सैषा हविषः समृद्धिः स यो हैवमेताꣳ हविषः समृद्धिं व्वेद सर्व्वसमृद्धेन हैवास्य हविषेष्टम्भवति ॥ ७ ॥ अथातो यज्ञस्य समृद्धिः । यद्वै यज्ञस्य न्न्यूनम्प्रजननमस्य तदुथ यदतिरिक्तम्पशव्व्यमस्य तदुथ यत्सङ्कसुकꣳ श्श्रिया ऽअस्य तदुथ यत्सम्पन्नꣳ स्वर्ग्ग्यमस्य तत् ॥ ८ ॥ स यदि मन्न्येत । न्न्यूनम्मे यज्ञेऽभूदिति प्प्रजननम्म ऽएतत्प्रजनिष्ष्य ऽइत्त्येव तदुपासीत ॥ ९ ॥ अथ यदि मन्न्येत । अतिरि-क्तम्मे यज्ञेऽभूदिति पशव्व्यमम ऽएतत्पशुमान्भविष्ष्यामी-त्त्येव तदुपासीत ॥१०॥ अथ यदि मन्न्येत । सङ्कसुकम्मे यज्ञेऽ-

भूदिति श्रियै म ऽएतद्दा मा श्रीस्तेजसा यशसा ब्रह्म-वर्च्चसेन परिवृता गमिष्यतीत्येव तदुपासीत ॥ ११ ॥ अथ यदि मन्येत। सम्पन्नम्मे यज्ञेऽभूदिति स्वर्ग्यम्म ऽएतत्स्वर्ग्गलोको भविष्यामीत्येव तदुपासीत सैषा यज्ञस्य समृद्धिः स यो हैवमेतां यज्ञस्य समृद्धिं वेद सर्व्वसमृद्धेन हैवास्य यज्ञेनेष्टम्भवति ॥ १२ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

[ अरण्योरश्वत्थविकृतित्वविधानमाख्यायिकया ]

उर्व्वशी हाप्सराः। पुरूरवसमैडञ्चकमे तꣳ ह विन्दमानोवाच त्रिः स्म माह्नो वैतसेन * दण्डेन हतादकामाꣳ स्म मा निपद्यासै मो स्म त्वा नग्नन्दर्शमेष वै न स्त्रीणामुपचार ऽइति ॥ १ ॥ सा हास्मिञ्ज्योगुवास। अपि हास्माद्गर्भिण्यास तावञ्ज्योग्घास्मिन्नुवास ततो ह गन्धर्वाः समूदिरे ज्योग्वा ऽइयमुर्व्वशी मनुष्येष्ववात्सीदुपजानीत यथेयम्पुनरागच्छेदिति तस्यै हाविद्वयुरणा शयन ऽउपबद्धास ततो ह गन्धर्व्वा ऽअन्यतरमुरणम्प्रमेथुः ॥ २ ॥ सा होवाच। अवीर ऽइव बत मेऽजन ऽइव पुत्रꣳ हरन्तीति द्वितीयम्प्रमेथुः सा ह तथैवोवाच ॥ ३ ॥ अथ हायमीक्षाञ्चक्रे। कथन्नु तद-

* वैतस इति पुंस्प्रजननस्य नाम। तथाहि "शेपो वैतस इति पुंस्प्रजननस्य" वैतसो वितस्तं भवति, ( निरु० अ० ३ पा० ४ ख० २१ )।

वीरङ्कथमजनुꣳ स्याद्यत्राहꣳ स्यामिति स नग्न ऽएवानूत्पपात चिरन्तन्मेने यद्वासः पर्य्यधास्यत ततो ह गन्धर्व्वा विद्युतञ्जनयाञ्चक्रुस्तं यथा दिवैवं नग्नन्ददर्श ततो हैवेयन्तिरोबभूव पुनरैमीत्येत्तिरोभूताꣳ स ऽआध्या जल्पन्कुरुक्षेत्रꣳ समया चचारान्यतः प्लक्षेति बिसवती तस्यै हाध्यन्तेन वव्राज तद्ध ता ऽअप्सरस ऽआतयो भूत्वा परिपुप्लुविरे ॥ ४ ॥ तꣳ हेयं ज्ञात्वोवाच । अयं वै स मनुष्यो यस्मिन्नहमवात्समिति ता होचुस्तस्मै वा ऽआविरसामेति तथेति तस्मै हाविरासुः ॥ ५ ॥ ताꣳ हायं ज्ञात्वाभिपरोवाद । 'हये[१] जाये मनसा तिष्ठ घोरे वचाꣳसि मिश्रा कृणवावहै नु ॥ न नौ मन्त्रा ऽअनुदितास ऽएते मयस्करन्परतरे चनाहन्नि'त्युप नु रम सन्नु वदावहा ऽइति हैवैनान्तदुवाच ॥ ६ ॥ तꣳ हेतरा प्रत्युवाच । 'किमेता[२] वाचा कृणवा तवाहम्प्राक्रमिषमुषसामग्रियेव ॥ पुरूरवः पुनरस्तम्परेहि दुरापना वात ऽइवाहमस्मी'ति न वै त्वन्तदकरोर्यदहमब्रवन्दुरापा वा ऽअहन्त्वयैतर्ह्यस्मि पुनर्गृहानिहीति हैवैनन्तदुवाच ॥ ७ ॥ अथ हायम्परिद्यून ऽउवाच । 'सुदेवो[३] ऽअद्य प्रपतेदनावृत्परावतम्परमाङ्गन्तवा ऽउ ॥ अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो ऽअद्यु'रिति सुदेवोऽद्योद्वा वद्ध्नीत प्रवा पतेत्तदेनं वृका वा श्वानो वाद्युरिति हैव तदुवाच ॥ ८ ॥ तꣳ हेतरा प्रत्युवाच । 'पुरूरवो[४]

(१) ऋ० सं० अष्ट० ८ अ० ५ व० १। (२) ऋ० सं० अष्ट० ८ अ० ५ व० १। (३) ऋ० सं० अष्ट० ८ अ० ५ वर्ग ३। (४) ऋ० सं० अष्ट० ८ अ० ५ वर्ग ३।

मा मृथा मा प्रपप्तो मा त्वा वृकासो ऽअशिवास ऽउक्षन् ॥ न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणाᳩं हृदयान्येते'ति मैतदादृथा न वै स्त्रैणᳲ सख्यमस्ति पुनर्गृहानिहीति हैवैनन्तदुवाच ॥ ९ ॥ 'यद्विरूपाचरम् । मर्त्येष्ववसᳲ रात्रीᳲ शरदश्चतस्रᳲ ॥ घृतस्य स्तोकᳲ सकृदह्न ऽआश्नान्तादेवेदन्तातृपाणा चरामी'ति तदेतदुक्तप्रत्युक्तम्पञ्चदशर्चं बह्वृचाᳲ प्राहुस्तस्यै ह हृदयमाव्यथाञ्चकार ॥ १० ॥ सा होवाच । सँवत्सरतमीᳩं रात्रिमागच्छतात्तन्म ऽएकाᳩं रात्रिमन्ते शयितासे जात ऽउ ते ऽयन्तर्हि पुत्रो भवितेति स ह सँवत्सरतमीᳩं रात्रिमाजगामेद्धिरण्यविमितानि ततो हैनमेकमूचुरेतत्प्रपद्यस्वेति तद्धास्मै तामुपप्रजिघ्युᳲ ॥ ११ ॥ सा होवाच । गन्धर्वा वै ते प्रातर्वरन्दातारस्तं वृणास' ऽइति तं वै मे त्वमेव वृणीष्वेति युष्माकमेवैकोऽसानीति ब्रूतादिति तस्मै ह प्रातर्गन्धर्वा वरन्ददुᳲ स होवाच युष्माकमेवैकोऽसानीति ॥ १२ ॥ ते होचुᳲ । न वै सा मनुष्येष्वग्नेर्यज्ञिया तनूरस्ति ययेष्ट्वास्माकमेकᳲ स्यादिति तस्मै ह स्थाल्यामोप्याग्निम्प्रददुरनेनेष्ट्वास्माकमेको भविष्यसीति तञ्च ह कुमारञ्चादायावव्राज सोऽरण्य ऽएवाग्निन्निधाय कुमारेणैव ग्राममेयाय पुनरैमीत्येत्तिरोभूतं य्योऽग्निरश्वत्थन्तं या स्थाली शमीन्ताᳩं स ह पुनर्गन्धर्वानेयाय ॥ १३ ॥ ते होचुᳲ । सँवत्सरञ्चातुष्प्राश्यम्

(१) ऋ० सं० अष्ट० ८ अ० ५ वर्ग ४।

मोदनम्पच स एतस्यैवाश्वत्थस्य तिस्रस्तिस्रः समिधो घृतेनाभ्यज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्याधत्तात्स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥ १४ ॥ ते होचुः । परोऽक्षमिव वा ऽएतदाश्वत्थीमेवोत्तरारणिङ्कुरुष्व शमीमयीमधरारणिं स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥ १५ ॥ ते होचुः । परोऽक्षमिव वा ऽएतदाश्वत्थीमेवोत्तरारणिङ्कुरुष्वाश्वत्थीमधरारणिं स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥१६॥ स ऽआश्वत्थीमेवोत्तरारणिञ्चक्रे । आश्वत्थीमधरारणिं स यस्ततोऽग्निर्जज्ञे स ऽएव स ऽआस तेनेष्ट्वा गन्धर्वाणामेक ऽआस तस्मादाश्वत्थीमेवोत्तरारणिङ्कुर्वीताश्वत्थीमधरारणिं स यस्ततोऽग्निर्जायते स ऽएव स भवति तेनेष्ट्वा गन्धर्वाणामेको भवति ॥ १७ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ चातुर्मास्ययाजिनो द्वैविध्यं दर्शयितुं तत्रत्यैर्यागैः शरीरावयवकल्पनम् ]

प्रजापतिर्ह चातुर्मास्यैरात्मानं विदधे । स ऽइममेव दक्षिणम्बाहुं वैश्वदेवं हविरकुरुत तस्यायमेवाङ्गुष्ठ ऽआग्नेयं हविरिदं सौम्यमिदं सावित्रम् ॥ १ ॥ स ऽ वर्षिष्ठः पुरोडाशो भवति । तस्मादियमासां वर्षिष्ठेदं सारस्वतमिदम्पौष्णमथ य ऽएष ऽउपरिष्टाद्धस्तस्य सन्धिस्तन्मारुतमिदं वैश्वदेवन्द्यावापृथिवीयन्तद्य

"अश्वत्थशमीगर्भारणी प्रयच्छति" ( का० श्रौ० सू० ४. ५. २० )

ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ २ ॥ अयमेव दक्षिण ऽऊरुर्वरुणप्रघासाः । तस्य यानि पञ्च हवीꣳषि समायीनि * ता ऽइमाः पञ्चाङ्गुलयः कुल्फावेवैन्द्राग्नꣳ हविस्तद्वै द्विदेवत्यम्भवति तस्मादिमौ द्वौ कुल्फाविदं वारुणमिदम्मारुतमनूकङ्कायस्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ ३ ॥ मुखमेवास्यानीकवतीष्टिः । मुखꣳ हि प्राणानामनीकमुरः सान्तपनीयोरसा हि सममिव तप्यत ऽउदरङ्गृहमेधीया प्रतिष्ठा वा ऽउदरम्प्रतिष्ठित्या ऽएव शिश्नान्येवास्य क्रैडिनꣳ हविः शिश्नैर्हि क्रीडतीवायमेवावाङ् प्राण ऽआदित्येष्टिः ॥ ४ ॥ अयमेवोत्तर ऽऊरुर्महाहविः तस्य यानि पञ्च हवीꣳषि समायीनि ता ऽइमाः पञ्चाङ्गुलयः कुल्फावेवैन्द्राग्नꣳ हविस्तद्वै द्विदेवत्यम्भवति तस्मादिमौ द्वौ कुल्फाविदम्माहेन्द्रमिदं वैश्वकर्म्मणन्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तमथ यदिदमन्तरूरुरे तत्पितृयज्ञस्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ ५ ॥ अयमेवोत्तरो बाहुः शुनासीरीयम् । तस्य यानि पञ्च हवीꣳषि समायीनि ता ऽइमाः पञ्चाङ्गुलयोऽथ य ऽएष ऽउपरिष्टाद्बाहुस्तस्य सन्धिस्तच्छुनासीरीयमिदं वायव्यन्दोः सौर्यन्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ ६ ॥ तानि वा ऽएतानि । चातुर्मास्यानि † त्रिसन्धीनि ‡ द्विसमस्तानि तस्मादि-

* पर्वचतुष्टयसञ्चारीणि ।

† चतुर्षु चतुर्षु मासेषु क्रियमाणानि चातुर्मास्यानि वैश्वदेव-वरुणप्रघास-साकमेध-शुनासीरीयाख्यानि चत्वारि पर्वाणि ।

‡ त्रयः सन्धयोऽन्तरालकालाश्चत्वारो मासा येषु तानि त्रिसन्धीनि ।

ग्रानि पुरुषस्याङ्गानि त्रिषन्धीनि द्विसमस्तानि तेषां वै चतुर्णान्द्वयोस्त्रीणि त्रीणि हवीᳬंष्यनिरुक्तानि भवन्ति द्वे द्वे द्वयोः ॥७॥ [अर्धः प्रपाठकः ॥५६॥] तेषां वै चतुर्ष्वग्निम्मन्थन्ति। तस्माच्चतुर्भिरङ्गैरायुते द्वयोः प्प्रणयन्ति तस्माद्द्वाभ्यामेत्येवम्मु ह प्प्रजापतिश्चातुर्म्मास्यैरात्मानं विदधे तथो ऽएवैवंविद्यजमानश्चातुर्म्मास्यैरात्मानं विधत्ते ॥८॥ तदाहुः सर्व्वङ्गायत्रं वैश्वदेवᳬं हविः स्यात्सर्व्वन्त्रैष्टुभं वरुणप्प्रघासाः सर्व्वञ्जागतम्महाहविः सर्व्वानुष्टुभᳬं शुनासीरीयच्चतुष्टोमस्याप्त्या ऽइति तदु तथा न कुर्य्याद्यत्वा ऽएतान्यभिसम्पद्यन्ते तेनैवास्य स काम ऽउपाप्तो भवति ॥ ९ ॥ तानि वा ऽएतानि । चातुर्म्मास्यानि द्वाषष्टानि त्रीणि शतानि बृहत्यः सम्पद्यन्ते तदेभिः सँवत्सरञ्च महाव्रतञ्चाप्नोत्यथो द्विप्प्रतिष्ठो वा ऽअयं यजमानो यजमानमेवैतत्स्वर्गे लोक ऽआयातयति प्प्रतिष्ठापयति ॥ १० ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ प्रश्नप्रतिवचनैरग्निहोत्रहोमस्य सर्वदेवतृप्तिकरत्वप्रतिपादनम् ]

शौचेयो ह प्प्राचीनयोग्यः । उद्दालकमारुणिमाजगाम ब्रह्मोद्यमग्निहोत्रं विविदिषिष्यामीति ॥ १ ॥ स होवाच । गौतम का तेऽग्निहोत्री को वत्सः किमुपसृष्टा किᳬं सᳬंयोजनङ्किन्दुह्यमानङ्किन्दुग्धङ्किमाह्रियमाणङ्किमधिश्रितङ्किमवज्योत्यमानङ्किमद्भिः प्रत्यानीतङ्किमुद्वास्यमानङ्किमुद्वा-

(१) 'ग' 'ज' पुस्तकयोः "विविदिषामीति" इति पाठो दृश्यते ।

सितङ्किमुन्नीयमानङ्किमुन्नीतङ्किमुद्यतङ्किꣳ ह्रियमाणङ्किन्नि-
गृहीतम् ॥ २ ॥ काꣳ समिधमादधासि का पूर्वाहुतिः
किमुपासीषदः किमपैक्षिष्ठाः कोत्तराहुतिः ॥ ३ ॥ किꣳ
हुत्वा प्प्रकम्पयसि । किꣳ स्रुचम्परिमृज्य कूर्चे न्न्यमार्ज्जीः
किन्द्वितीयम्परिमृज्य दक्षिणतो हस्तमुपासीषदः किम्पूर्व-
म्प्राशीः किन्द्वितीयङ्किमुरस्पृप्प्यापाः किꣳ स्रुच्च्यप ऽआनीय
निरौक्षीः किन्द्वितीयङ्किन्तृतीयमेतान्दिशमुदौक्षीः किञ्ज-
घनेनाहवनीयमपो न्न्यनैषीः किꣳ समतिष्ठिपो यदि वा
ऽएतद्विद्वानग्निहोत्रमहौषीरथ ते हुतं यद्यु वा ऽअविद्वा-
नहुतमेव त ऽइति ॥ ४ ॥ स होवाच । इडैव मे मानव्य-
ग्निहोत्री वायव्यो वत्सः सजूरुपसृष्टा विराट् संयो-
जनमाश्विनन्दुह्यमानं वैश्वदेवन्दुग्धं वायव्यमाह्रियमाण-
माग्नेयमधिश्रितमैन्द्राग्नमवज्ज्योत्यमानं वारुणमद्भिः
प्प्रत्यानीतं वायव्यमुद्वास्यमानन्द्यावापृथिव्यमुद्वासितमा-
श्विनमुन्नीयमानं वैश्वदेवमुन्नीतम्महादेवायोद्यतं वाय-
व्यꣳ ह्रियमाणं वैष्णवन्निगृहीतम् ॥ ५ ॥ अथ याꣳ
समिधमादधामि । आहुतीनाꣳ सा प्प्रतिष्ठा या
पूर्वाहुतिर्द्देवाँस्तयाप्प्रैषं यदुपासीषदम्पितॄँस्तयाप्प्रैषं यदपैक्षि-
षीमश्चामुश्च लोकौ तेन समिधां योत्तराहुतिर्म्मा-
न्तया स्वर्ग्गं लोकेऽधाम् ॥६॥ अथ यद्धुत्वा प्प्रकम्पयामि ।
वायव्यन्तद्यत्स्रुचम्परिमृज्य कूर्चे न्न्यमार्ज्जिषमोषधिवन-
स्पतीँस्तेनाप्प्रैषं यद्द्वितीयम्परिमृज्य दक्षिणतो हस्तमुपा-
सीषदम्पितॄँस्तेनाप्प्रैषं यत्पूर्वम्प्राशिषम्मान्तेनाप्प्रैषं यद्द्वि-

तीयम्प्रजान्तेनाथ यदुरस्तृप्प्यापाम्पशूँस्तेनाप्प्रैषं यद्यस्रुच्च्यप ऽआनीय निरौक्षिषद्धं सर्प्पदेवजनाँस्तेनाप्प्रैषं यद्द्वितीय-ङ्गन्धर्वाप्प्सरसस्तेनाथ यत्तृतीयमेतान्दिशमुदौक्षिषद्धं स्व-र्गस्य लोकस्य तेन द्वारं व्व्यवारिषं यज्जघनेनाहवनीय-मपो व्व्यनैषमस्म्मै लोकाय तेन व्वृष्टिमदां यत्समति-ष्टिपं यत्तृथिव्व्या ऽऊनन्तत्तेनापूपुरमित्त्येतन्नौ भगवन्त्स-हेति होवाच ॥ ७ ॥ शौचेयो ज्ञप्तुः । प्प्रक्ष्यामि त्त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यस्मिम-न्काल ऽउद्धृतास्तेऽग्नयः स्युरुपावहतानि पात्राणि होष्य-न्त्स्या ऽअथ त ऽआहवनीयोऽनुगच्छेद्वेरथ तद्भयं यदुत्र जुह्वतो भवतीति व्वेदेति होवाच पुरा चिरादस्य ज्येष्ठः पुत्रो म्म्रियेत यस्यैतदुविदितथ्ठं स्याद्विद्याभिस्त्वेवाहुमता-रिषमिति किं विदितङ्का प्प्रायश्चित्तिरिति प्प्राण ऽउदान-मप्प्यगादिति गार्हपत्त्य ऽआहुतिञ्जुहुयात्थ्ठ सैव प्प्राय-श्चित्तिर्न्न तदागः कुर्वीयेत्त्येतन्नौ भगवन्त्सहेति होवाच ॥ ८ ॥ शौचेयो ज्ञप्तुः । प्प्रक्ष्यामि त्त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले गार्हपत्योऽनुगच्छेद्वेरथ तद्भयं यदुत्र जुह्वतो भव-तीति व्वेदेति होवाच पुरा चिरादस्य गृहपतिर्म्म्रियेत यस्यैतदुविदितथ्ठं स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्प्रायश्चित्तिरित्त्युदानः प्प्राणमप्प्यगादित्त्याहव-नीय ऽआहुतिञ्जुहुयात्थ्ठ सैव प्प्रायश्चित्तिर्न्न तदागः कुर्वी-येत्त्येतन्नौ भगवन्त्सहेति होवाच ॥ ९ ॥ शौचेयो ज्ञप्तुः ।

प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्राचीनयोग्येति स होवाच यत्र त ऽएतस्मिन्नेव कालेऽन्वाहार्य्यपचनोऽनुगच्छेद्वेत्थ तद्भयं यदग्नि जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्य सर्वे पशवो म्म्रियेरन्न्यस्यैतदविदितᳬ स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्रायश्चित्तिरिति व्यान ऽउदानमप्ययगादिति गार्हपत्य ऽआहुतिञ्जुहुयात्स सैव प्रायश्चित्तिर्न्न तदागः कुर्वीयेत्येतन्नो भगवन्त्सहेति होवाच ॥ १० ॥ शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्राचीनयोग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले सर्वेऽग्नयोऽनुगच्छेयुर्वेत्थ तद्भयं यदग्नि जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्यादायादङ्कुलᳬ स्याद्यस्यैतदविदितᳬ स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्रायश्चित्तिरिति पुरा चिरादग्निम्मथित्वा यान्दिशं वातो वायात्तान्दिशमाहवनीयमुद्धृत्य वायव्यामाहुतिञ्जुहुयात्स स विद्यात्स समृद्धम्मेऽग्निहोत्रᳬ सर्वदेवत्यं वायुᳬ ह्येव सर्वाणि भूतान्यपियन्ति वायोः पुनर्विसृज्यन्ते सैव प्रायश्चित्तिर्न्न तदागः कुर्वीयेत्येतन्नो भगवन्त्सहेति होवाच ॥ ११ ॥ शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्राचीनयोग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले निवाते सर्वेऽग्नयोऽनुगच्छेयुर्वेत्थ तद्भयं यदग्नि जुह्वतो भवतीति वेदेति होवाचाप्रियमेवास्मिँल्लोके पश्येताप्रियममुष्मिन्न्यस्यैतदविदितᳬ स्याद्विद्या-

भिस्त्वेवाहमतारिषमिति किं विदितङ्का प्रायश्चित्तिरिति पुरा चिरादग्निम्मथित्वा प्राञ्चमाहवनीयमुद्धृत्य जघनेनाहवनीयमुपविश्याहमेवैनत्पिबेयं स विद्यात्थं समृद्धमेऽग्निहोत्रं सर्वदेवत्यम्ब्राह्मणथं ह्येव सर्वाणि भूतान्यपियन्ति ब्राह्मणात्पुनर्विसृज्यन्ते सैव प्रायश्चित्तिर्न्न तदागः कुर्वीयेत्यथ वा ऽअहमेतन्नावेदिषमिति होवाच ॥ १२ ॥ शौचेयो ऽप्तः । इमानि समित्काष्ठान्युपायानि भगवन्तमिति स होवाच यदेवन्नावक्ष्यो मूर्द्धा ते व्यपतिष्यदेह्युपेहीति तथेति तं होपनिन्ये तस्मै हैताथं शोकतरां व्याहृतिमुवाच यत्सत्यन्तस्मादु सत्यमेव वदेत् ॥ १३ ॥

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ उपनयनधर्मनिरूपणम् ]

ब्रह्मचर्य्यमागामित्याह । ब्रह्मण ऽएवैतदात्मानन्निवेदयति ब्रह्मचार्य्यसानीत्याह ब्रह्मण ऽएवैतदात्मानम्प्रदत्यथैनमाह को नामासीति प्रजापतिर्वै कः प्राजापत्यमेवैनन्तत्कृत्वोपनयते ॥ १ ॥ अथास्य हस्तङ्गृह्णाति । इन्द्रस्य ब्रह्मचार्य्यस्यग्निराचार्य्यस्तवाहमाचार्य्यस्तवासाविति । एते वै श्रेष्ठे वलिष्ठे देवते ऽएताभ्यामेवैनथं श्रेष्ठाभ्याम्बलिष्ठाभ्यान्देवताभ्याम्परिददाति तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥ २ ॥ अथैनम्भूतेभ्यः परिददाति । प्रजापतये त्वा परिददामि

देवाय त्वा सवित्रे परिददामीत्येते वै श्रेष्ठे वर्षिष्ठे देवते ऽएताभ्यामेवैनꣳ श्रेष्ठाभ्यां वर्षिष्ठाभ्यान्देवताभ्याम्परिददाति तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥ ३ ॥ अद्भ्यस्त्वौषधीभ्यः परिददामीति । तदेनमद्भ्यश्चौषधिभ्यश्च परिददाति द्यावापृथिवीभ्यान्त्वा परिददामीति तदेनमाभ्यान्द्यावापृथिवीभ्याम्परिददाति ययोरिदꣳ सर्वमधि विश्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्या ऽइति तदेनꣳ सर्वेभ्यो भूतेभ्यः परिददात्यरिष्ट्यै तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥४॥ * ब्रह्मचार्य्यसीत्याह । ब्रह्मण ऽएवैनन्तत्परिददात्यपोऽशानेत्यमृतं वा ऽआपोऽमृतमशानेत्येवैनन्तदाह कर्म्म कुर्विति वीर्य्यं वै कर्म्म वीर्य्यङ्कुर्वित्येवैनन्तदाह समिधमाधेहीति समित्स्वात्मानन्तेजसा ब्रह्मवर्चसेनेत्येवैनन्तदाह मा सुषुप्था ऽइति मा मृथा ऽइत्येवैनन्तदाहापोऽशानेत्यमृतं वा ऽआपोऽमृतमशानेत्येवैनन्तदाह तदेनमुभयतोऽमृतेन परिगृह्णाति तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥ ५ ॥ अथास्मै सावित्रीमन्वाह[†] । ताꣳ ह स्मैताम्पुरा सँवत्सरेऽन्वाहुः सँवत्सरसम्मिता वै गर्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ ६ ॥ अथ षट्सु मासेषु । षड्वा ऽऋतवः सँवत्सरस्य सँवत्सरसम्मिता वै गर्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वा-

* अत्रशतम् ५८०० ।
† पा० गृ० सू० २. ३. ३ ।

चन्दद्ध्म ऽइति ॥ ७ ॥ अथ चतुर्विंशत्त्यहे । चतुर्विंश-
शतिर्वै सँवत्सरस्यार्द्धमासाः सँवत्सरसम्मिता वै गर्भाः
प्प्रजायन्ते जात ऽएवास्म्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ ८ ॥
अथ द्वादशाहे । द्वादश वै मासा सँवत्सरस्य सँवत्सरस-
म्मिता वै गर्भाः प्प्रजायन्ते जात ऽएवास्म्मिँस्तद्वाच-
न्दद्ध्म ऽइति ॥ ९ ॥ अथ षडहे । षड्वा ऽऋतवः सँवत्स-
रस्य सँवत्सरसम्मिता वै गर्भाः प्प्रजायन्ते जात ऽएवा-
स्म्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ १० ॥ अथ त्र्यहे । त्रयो वा
ऽऋतवः सँवत्सरस्य सँवत्सरसम्मिता वै गर्भाः प्प्रजायन्ते
जात ऽएवास्म्मिँस्तद्वाचन्दद्ध्म ऽइति ॥११॥ तदपि श्श्लोक-
ङ्गायन्ति । आचार्य्यो गर्भी भवति हस्तमाधाय दक्षिण-
न्तृतीयस्याँ स जायते सावित्र्या सह ब्ब्राह्मण ऽइति
सद्यो ह त्वाव ब्ब्राह्मणायानुब्ब्रूयादाग्नेयो वै ब्ब्राह्मणः
सद्यो वा ऽअग्निर्ज्जायते तस्मात्सद्य ऽएव ब्ब्राह्मणायानु-
ब्ब्रूयात् ॥ १२ ॥ ताँ हैतामेके । सावित्रीमनुष्टुभमन्न्वा-
हुर्व्वाग्वा ऽअनुष्टुप्तदस्मिन्न्वाचन्दद्ध्म ऽइति न तथा
कुर्य्याद्यो हैनन्तत्र ब्ब्रूयादा न्न्वा ऽअयमस्य व्वाचमदित
मूको भविष्यतीतीश्श्वरो ह तथैव स्यात्तस्मादेताङ्गाय-
त्रीमेव सावित्रीमनुब्ब्रूयात् ॥ १३ ॥ अथ हैके दक्षिणतः ।
तिष्ठते वासीनाय वान्वाहुर्न्न तथा कुर्य्याद्यो हैनन्तत्र
ब्ब्रूयाद्बुल्बन्न्वा ऽअयमिममजीजनत बुल्बो भविष्यतीती-
श्श्वरो ह तथैव स्यात्तस्मात्पुरस्तादेव प्प्रतीचे समीक्ष-
माणायानुब्ब्रूयात् ॥ १४ ॥ तां वै पच्छोऽन्न्वाह । त्रयो वै

प्प्राणाः प्प्राण ऽउदानो व्व्यानस्तानेवास्मिँमस्तद्दधात्यथा-र्द्धशो द्वौ वा ऽइमौ प्प्राणौ प्प्राणोदानावेव प्प्राणोदानावे-वास्मिँमस्तद्दधात्यथ कृत्स्नामेको वा ऽअयम्प्राणः कृत्स्न ऽएव प्प्राणमेवास्मिँमस्तत्कृत्स्नन्दधाति ॥ १५ ॥ तदाहुः । न ब्ब्राह्मणम्ब्रह्मचर्य्यमुपनीय मिथुनञ्चरेद्गर्भो वा ऽएष भवति यो ब्ब्रह्मचर्य्यमुपैति नेदिमम्ब्राह्मणं व्विषिक्ताद्रेतसो जनया-नीति ॥ १६ ॥ तदु वा ऽआहुः । काममेव चरेद्द्वय्यो वा ऽइमाः प्प्रजा दैव्व्यश्चैव मानुष्ष्यश्च ता वा ऽइमा मानुष्ष्यः प्प्रजाः प्प्रजननात्प्रजायन्ते च्छन्दाᳬंसि वै दैव्व्यः प्प्रजास्तानि मुखतो जनयते तत ऽएतज्जनयते तस्स्मादु काममेव चरेत् ॥ १७ ॥ तदाहुः । न ब्ब्रह्मचारी सन्मद्ध्वश्नीयादोषधीनां व्वा ऽएष परमो रसो यन्मधु नेदन्नाद्यस्यान्तङ्गच्छानीत्यथ ह स्स्माह श्वेतकेतुरारुणेयो ब्ब्रह्मचारी सन्मद्ध्वश्नँस्त्रय्यै वा ऽएतद्विद्यायै शिष्टं य्यन्मधु स तु रसो यस्येदृक्छिशष्टमिति यथा ह वा ऽऋचं व्वा यजुर्वा साम वाभिव्व्याहरेत्तादृक्तन्न ऽएवं व्विद्वाश्ब्रह्मचारी सन्मद्ध्वश्नाति तस्स्मादु काममेवाश्नीयात् ॥ १८ ॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

[ शतातिरात्राख्यसत्रविधानमाख्यायिकया ]

देवाश्वा ऽऊर्द्ध्वान्स्वर्ग्गँल्लोकं य्यतः । असुरास्तमसा-न्तरदधुस्ते होचुर्न्न वा ऽअस्यान्य्येन सत्रादपघातोऽस्ति हन्त सत्रमासामहा ऽइति ॥ १ ॥ ते शताग्निष्टोमः

सत्रमुपेयुः । ते यावदासीनः परापश्श्येत्तावतस्तमोऽपाघ्नन्नेवमेव शतोक्थ्येन यावत्तिष्ठन्परापश्श्येत्तावतस्तमोऽपाघ्नत ॥ २ ॥ ते होचुः । अप वाव तमो हन्महे न त्वेव सर्वमिव हन्त प्रजापतिम्पितरम्प्रत्ययामेति ते प्रजापतिम्पितरम्प्रतीत्योचुरसुरा वै नो भगव ऊर्द्ध्वान्त्स्वर्गँल्लोकं यतस्तमसान्तरदधुः ॥ ३ ॥ ते शताग्निष्टोमः सत्रमुपैम । ते यावदासीनः परापश्श्येत्तावतस्तमोऽपाहन्मह्येवमेव शतोक्थ्येन यावत्तिष्ठन्परापश्श्येत्तावतस्तमोऽपाहन्महि प्र नो भगवञ्छाधि यथासुराँस्तमोऽपहत्य सर्वम्पाप्मानमपहत्य स्वर्गँल्लोकम्प्रज्ञास्याम ऽइति ॥ ४ ॥ स होवाच । असर्वक्रतुभ्यां वै यज्ञाभ्यामगन्त यदग्निष्टोमेन चोक्थ्येन च शतातिरात्रः सत्रमुपेत तेनासुराँस्तमोऽपहत्य सर्वम्पाप्मानमपहत्य स्वर्गँल्लोकम्प्रज्ञास्यथेति ॥ ५ ॥ ते शतातिरात्रः सत्रमुपेयुः । तेनासुराँस्तमोऽपहत्य सर्वम्पाप्मानमपहत्य स्वर्गँल्लोकम्प्रजज्ञुस्तेषामर्वाक्त्रपश्चाशोष्वेवाहः स्वहरभि रात्रिसामानि परीयू रात्रिमभ्यहःसामानि ॥ ६ ॥ ते होचुः । अमुहाम वै न प्रजानीमो हन्त प्रजापतिमेव पितरम्प्रत्ययामेति ते प्रजापतिमेव पितरम्प्रतीत्योचुरहन्नो रात्रिसामानि रात्र्यामहन्नो भवन्ति नः ॥ विपश्चिद्यज्ञान्मुग्धान्विद्वान्धीरोऽनुशाधि न ऽइति ॥ ७ ॥ तान्हैतदुपजगौ । महाहिमिव वै ह्रदाद्वलीयानन्ववेत्य ॥ [illegible]स्वादास्थानात्ततः सत्रन्न तायत ऽइति ॥ ८ ॥ [illegible]ञ्छिवनं वै वः शस्यमानम् । प्रातरनुवाकमास्थानादनुत्त

यमास्त्थानादनुद्धन्धीराः सन्तो ऽअधीरवत् ॥ प्रशास्त्रा तमुपेत
शनैरप्प्रतिशङ्क्सतेति ॥ ९ ॥ ते होचुः । कथन्नु भगवः
शस्तङ्कथमप्प्रतिशस्तमिति स होवाच यत्र होताश्विनᳪ
शङ्क्सन्नाग्नेयस्य क्रतोर्गायत्रस्य च्छन्दसः पारङ्गच्छात्त-
त्प्रतिप्प्रस्त्थाता वसतीवरीः परिहृत्त्य मैत्रावरुणस्य हवि-
र्द्धानयोः प्प्रातरनुवाकमुपाकुरुतादुच्चैर्होता शङ्क्सति शनै-
रितरो जञ्जप्प्यमान ऽइवान्न्वाह तन्न वाचा वाचम्प्रत्स्येति न
च्छन्दसा च्छन्दः ॥ १० ॥ परिहिते प्प्रातरनुवाके । यथा-
यतनमेवोपाᳪशवन्तर्य्यामौ हुत्त्वा द्रोणकलशे पवित्रम्प्र-
पीड्य निदधाति तिरोहर्य्यैश्चरित्त्वा प्प्रत्यञ्चः प्प्रतिपरेत्त्य
तिरोहर्य्यानेव भक्षयाद्धा ऽअथानुपूर्व्वं रुयज्ञपुच्छᳪ सᳪ-
स्थाप्प्य य ऽऊर्द्ध्वा ऽअन्तर्य्यामाद्ग्रहास्तान्न्गृहीत्त्वा वि-
प्प्रुषाᳪ होमैः हुत्त्वा सन्तनिश्च बहिष्प्पवमानेन स्तुत्त्वा-
हरेव प्प्रतिपद्याद्धा ऽइति ॥ ११ ॥ तदेतेऽभि श्श्लोकाः ।
चतुर्भिः सैन्धवैर्युक्तैर्द्धीरा व्व्यजहुस्तमः ॥ विद्वाᳪसो ये
शतक्रतुदेवाः सत्त्रमतन्न्वतेति ॥ १२ ॥ चत्त्वारो ह्यत्र
युक्ता भवन्ति । द्वौ होतारौ द्वावद्ध्वर्य्यू पवेर्न्नु शक्वेव हनूनि
कल्प्पयन्नहन्नोरन्तौ व्व्यतिषजन्त धीराः ॥ न दानवा यजि-
यन्तन्तुमेषां विजानीमो विततम्मोहयन्ति नः ॥ पूर्व्वस्याह्नः
परिशिङ्क्षन्ति कर्म्म तदुत्तरेणाभिवितन्न्वतेऽह्ना ॥ दुर्व्विज्ञान-

(१) "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" ॥ (कर्मप्र०)
"कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ" ( का० श्रौ० सू० २. ३. ३० )

(२) अभिषवे ग्रहणे च पतितानां सोमबिन्दूनां ग्रहणाशक्यत्वात् तत्प्रत्यवायपरिहाराय कृतहोमस्य विप्रुड्ढोम इति संज्ञा ।

ऽन्याव्यन्देवतानाᳫं सोमाः सोमैर्व्यतिषक्ताः प्प्लवन्ते ॥ समानान्त्सदमुक्षन्ति हृयान्काष्टभृतो यथा ॥ पूर्णान्परिस्रुतः कुम्भाञ्जनमेजयसादन ऽइत्यसुररक्षसान्युपेयुः ॥१३॥

पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

[ पञ्चमहायज्ञानां महासत्रत्वप्रतिपादनम् ]

पञ्चैव महायज्ञाः * । तान्येव महासत्त्राणि भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ ऽइति ॥ १ ॥ अहरहर्भूतेभ्यो बलिᳫं हरेत् । तथैतम्भूतयज्ञᳫं समाप्नोत्यहरहर्दद्यादोदपात्रात्तथैतम्मनुष्ययज्ञᳫं समाप्नोत्यहरहः स्वधाकुर्य्यादोदपात्रात्तथैतम्पितृयज्ञᳫं समाप्नोत्यहरहः † स्वाहाकुर्य्यादाकाष्ठात्तथैतन्देवयज्ञᳫं समाप्नोति ॥२॥ अथ ब्रह्मयज्ञः । स्वाध्यायो वै ब्रह्मयज्ञस्तस्य वा ऽएतस्य ब्रह्मयज्ञस्य वागेव जुहूर्म्मन ऽउपभृच्चक्षुर्ध्रुवा मेधा स्रुवः सत्यमवभृथः स्वर्गो लोक ऽउदयनं य्यावन्तᳫं ह वा ऽइमाम्पृथिवीं वित्तेन पूर्णान्ददँल्लोकञ्जयति त्रिस्तावन्तञ्जयति भूयाᳫंसञ्चाक्षय्यं य्य ऽएवं विद्वानहरहः स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥ ३ ॥ पय ऽआहुतयो ह वा ऽएता देवानाम् । यदृचः स य ऽएवं विद्वानृचोऽहरहः स्वाध्यायमधीते पय ऽआहुतिभिरेव तद्देवाँस्तर्प्पयति त

* "अथातः पञ्च महायज्ञाः" पा० गृ० सू० का० २ क० ९ सू० १ ।

† 'अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठाद्देवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात्" पा० गृ० सू० २. ९. १६ ।

ऽएनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वा-
त्मना सर्व्वाभिः पुण्ण्याभिः सम्पद्भिर्घृतकुल्ल्या मधु-
कुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ४ ॥ आज्याहुतयो
ह वा ऽएता देवानाम् । यद्यजूꣳषि स य ऽएवं विद्वा-
न्न्यजूꣳष्यहरहः स्वाद्ध्यायमधीत ऽआज्याहुतिभिरेव
तद्देवाँस्तर्प्पयति त ऽएनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण
प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्ण्याभिः सम्पद्भि-
र्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ५ ॥
सोमाहुतयो ह वा ऽएता देवानाम् । यत्सामानि स य
ऽएवं विद्वान्त्सामान्यहरहः स्वाद्ध्यायमधीते सोमाहुति-
भिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्तास्तर्प्पयन्ति योग-
क्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्ण्याभिः
सम्पद्भिर्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति
॥ ६ ॥ मेद ऽआहुतयो ह वा ऽएता देवानाम् । यदथर्व्वा-
ङ्गिरसः स य ऽएवं विद्वानथर्व्वाङ्गिरसोऽहरहः स्वाद्ध्याय-
मधीते मेद ऽआहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्ता-
स्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः
पुण्ण्याभिः सम्पद्भिर्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा
ऽअभिवहन्ति ॥७॥ मद्ध्वाहुतयो ह वा ऽएता देवानाम् । यद-
नुशासनानि * विद्या † वाकोवाक्क्यमितिहासपुराणङ्गाथा

* अनुशिष्यन्ते—व्युत्पाद्यन्ते एभिरित्यनुशासनानि-व्याकरणनिरुक्तादीनि षडङ्गानि ।
† न्यायमीमांसादयः ।
( १ ) उक्तिप्रत्युक्तिरूपं प्रकरणं वाकोवाक्यम् ।

नाराशꣳस्यः स य ऽएवं विद्वाननुशासनानि विद्या वाकोवा क्यमितिहासपुराणङ्गाथा नाराशꣳसीरित्यहरहः स्वाध्यायम धीते मद्धाहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्तास्तर्प्पय न्ति योगक्षेमेण प्प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ८ ॥ तस्य वा ऽएतस्य ब्ब्रह्मयज्ञस्य । चत्वारो वषट्कारा यद्वातो वाति यद्विद्योतते यत्स्तनयति यदवस्फूर्ज्जति तस्मा देवंविद्वाते वाति विद्योतमाने स्तनयत्यवस्फूर्ज्जत्यधीयीतैव वषट्काराणामच्छम्बट्कारायाति ह वै पुनर्म्मृत्युम्मुच्यते गच्छति ब्ब्रह्मणः सात्मताꣳ स चेदपि प्प्रबलमिव न शक्क्नुयादप्प्येकन्देवपदमधीयीतैव तथा भूतेब्भ्यो न हीयते ॥ ९ ॥

पञ्चमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या ॥ ११२ ॥



[ स्वाध्यायप्रशंसा ]

अथातः स्वाध्यायप्प्रशꣳसा । प्प्रिये स्वाध्यायप्प्रव चने भवतो युक्तमना भवत्यपराधीनोऽहरहरर्त्थान्त्साधयते सुखꣳ स्वपिति परमचिकित्सक ऽआत्मनो भवतीन्द्रिय- संयमश्चैकारामता च प्प्रज्ञावृद्धिर्यशो लोकपक्तिः प्प्रज्ञा वर्द्धमाना चतुरो धर्म्मान्ब्राह्मणमभिनिष्प्पादयति ब्ब्राह्म- ण्यम्प्रतिरूपचर्य्यां यशो लोकपक्तिँल्लोकः पच्यमान-

श्चतुर्भिर्द्धर्म्मैर्ब्राह्मणम्भुनक्त्यर्च्चया च दानेन चाज्येयतया चावद्ध्यतया च ॥ १ ॥ ये ह वै के च श्रमाः । इमे द्यावापृथिवी ऽअन्तरेण स्वाद्ध्यायो हैव तेषाम्परमता काष्ठा य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ २ ॥ यंयध्ह वा ऽअयञ्छन्दसः । स्वाद्ध्यायमधीते तेन तेन हैवास्य यज्ञक्रतुनेष्टम्भवति य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ ३ ॥ यदि ह वा अप्प्यभ्भ्यक्तः । अलङ्कृतः सुहितः सुखे शयने शयानः स्वाद्ध्यायमधीत ऽआ हैव स नखाग्ग्रेभ्भ्यस्तप्प्यते य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ ४ ॥ मधु ह वा ऽऋचः । घृतᳬं ह सामान्यमृतं यजूᳬंषि यद्ध वा ऽअयं वाकोवाक्क्यमधीते क्षीरौदनमाᳬंसौदनौ हैव तौ ॥ ५ ॥ मधुना ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वानृचोऽहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्ताास्तर्प्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥ ६ ॥ घृतेन ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्त्सामान्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥ ७ ॥ अमृतेन ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्न्यजूᳬंष्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥८॥ क्षीरौदनमाᳬंसौदनाभ्यांᳬ ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्वाकोवाक्क्यमितिहासपुराणमित्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्वैः कामैः सर्वै-

ञ्भोगैः ॥ ९ ॥ यन्ति वा ऽआपः । एत्यादित्य ऽएति चन्द्रमा यन्ति नक्षत्राणि यथा ह वा ऽएता देवता नेयुर्न्न कुर्य्युरेवछ हैव तदहर्ब्राह्मणो भवति यदहः स्वाध्यायन्ना-धीते तस्मात्स्वाध्यायोऽध्येतव्व्यस्तस्मादप्यृचं वा यजु-र्वा साम वा गाथां वा कुंव्यां वाभिव्व्याहरेद्व्रतस्याव्व्य-वच्छेदाय ॥ १० ॥

पञ्चमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



[ आख्यायिकया व्याहृत्युत्पत्तिकथनम् ]

प्रजापतिर्व्वा ऽइदमग्र ऽआसीत् । एक ऽएव सोऽका-मयत स्याम्प्रजायेयेति सोऽश्राम्म्यत्स तपोऽतप्प्यत तस्माच्छ्रान्तात्तेपानात्त्रयो लोका ऽअसृज्यन्त पृथिव्व्यन्त-रिक्षन्द्यौः ॥ १ ॥ स ऽइमाँस्त्रीँल्लोकानभितताप । तेब्भ्य-स्तप्तेब्भ्यस्त्रीणि ज्योतीᳬंष्यजायन्ताग्निर्य्योऽयम्पवते सूर्य्यः ॥ २ ॥ स ऽइमानि त्रीणि ज्योतीᳬंष्यभितताप । तेब्भ्य-स्तप्तेब्भ्यस्त्रयो वेदा ऽअजायन्ताग्नेर्ऋग्वेदो वायोर्य्यजु-र्वेदः सूर्य्यात्सामवेदः ॥ ३ ॥ स इमाँस्त्रीन्वेदानभितताप । तेब्भ्यस्तप्तेब्भ्यस्त्रीणि शुक्राण्ण्यजायन्त भूरित्यृग्वेदा-द्भुव ऽइति यजुर्वेदात्स्वरिति सामवेदात्तदृग्वेदेनैव होत्रम-कुर्वत यजुर्वेदेनाद्ध्वर्य्यवछ सामवेदेनोद्गीथं यदेव त्रय्यै विद्यायै शुक्रन्तेन ब्रह्मत्वमथोच्चक्राम ॥ ४ ॥ ते देवाः प्रजापतिमब्रुवन् । यदि न ऋक्तो वा यजुष्टो वा सामतो वा यज्ञो ह्वलेत्केनैनम्भिषज्येमेति ॥ ५ ॥ स होवाच ।

यद्यृक्तो भूरिति चतुर्ग्गृहीतमाज्यङ्गृहीत्वा गार्हपत्ये जुहवथ यदि यजुष्टो भुव ऽइति चतुर्ग्गृहीतमाज्यङ्गृहीत्वाग्नीध्रीये जुहवथान्वाहार्य्यपचने† वा हविर्य्यज्ञे यदि सामतः स्वरिति चतुर्ग्गृहीतमाज्यङ्गृहीत्वाहवनीये जुहवथ यद्यु ऽअविज्ञातमसत्सर्वाण्यनुद्रुत्याहवनीये जुहवथ तदृग्वेदेनैवऽर्ग्वेदम्भिषज्यति यजुर्वेदेन यजुर्वेदꣳ सामवेदेन सामवेदꣳ स यथा पर्व्वणा पर्व्व सन्दध्यादेवꣳ हैव स सन्दधाति य ऽएताभिर्ब्भिषज्यत्यथ यो ह्यतोऽन्येन भिषज्यति यथा शीर्ण्णेन शीर्ण्णꣳ सन्धित्सेद्यथा वा शीर्ण्णे गरमभिनिदध्यादेवन्तत्तस्मादेवंविदमेव ब्ब्रह्माणङ्कुर्वीत नानेवंविदम् ॥ ६ ॥ तदाहुः । यदृचा होत्रङ्क्रियते यजुषाद्ध्वर्य्यवꣳ साम्नोद्गीथोऽथ केन ब्ब्रह्मत्वमित्यनया त्रय्या विद्ययेति ह ब्ब्रूयात् ॥ ७ ॥

पञ्चमाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

[ अंश्वदाभ्ययोर्ग्रहयोरात्मवागादिरूपतया समुचित्यानुष्ठानम् ]

प्रजापतिर्ह वा ऽएष यदꣳशुः । सोऽस्यैष ऽआत्मैवात्मा ह्ययम्प्रजापतिर्व्वागेवादाभ्यः स यदꣳशुङ्गृहीत्वादाभ्यङ्गृह्णात्यात्मानमेवास्यैतत्संस्कृत्य तस्मिन्नेतां व्वाचम्प्रतिष्ठापयति ॥ १ ॥ अथ मनो ह वा ऽअꣳशुः । वागदाभ्यः प्राण ऽएवाꣳशुरुदानोऽदाभ्यश्चक्षुरेवाꣳशुः श्रोत्रमदा-

† अन्वाहार्यपचने—दक्षिणाग्नौ ।

ब्भ्यस्तद्यदेतौ ग्रहौ गृह्णन्ति सर्वत्वायैव कृत्स्नतायै ॥ २ ॥
अथ देवाश्च ह वा ऽअसुराश्च । उभये प्राजापत्या
ऽअस्पर्द्धन्त त ऽएतस्मिन्नेव यज्ञे प्रजापतावस्पर्द्धन्ता-
स्माकमयꣳ स्यादस्माकमयꣳ स्यादिति ॥ ३ ॥ ततो
देवाः । अर्चन्तः श्राम्यन्तश्चेरुस्त ऽएतङ्ग्रहन्ददृशुरेत-
मदाभ्यन्तमगृह्णत ते सवनानि प्रावृहन्त ते सर्वं यज्ञꣳ
समवृञ्जतान्तरायन्नसुरान्यज्ञात् ॥ ४ ॥ ते होचुः । अदभाम
वा ऽएनानिति तस्मादुदाभ्यो न वै नोऽदभन्निति तस्मा-
दुदाभ्यो वाग्वा ऽअदाभ्यः सेयमदब्धा वाक्तस्मा-
द्वेवादाभ्य ऽएवꣳ ह वै द्विषतो भ्रातृव्यस्य सर्वं
यज्ञꣳ संवृङ्क्त ऽएवन्द्विषन्तम्भ्रातृव्यꣳ सर्वस्माद्यज्ञा-
न्निर्भजति बहिर्द्धा करोति य ऽउ ऽएवमेतद्वेद ॥ ५ ॥ स
येनैव पात्रेणाꣳशुङ्गृह्णाति । तस्मिन्नेव पात्रे निग्राभ्या-
भ्योऽप[1] ऽआनीय तस्मिन्नेतानꣳशून्गृह्णाति A ॥६॥ 'उपया[2]-
मगृहीतोऽसि । अग्नये त्वा गायत्रच्छन्दसङ्गृह्णामी'ति गायत्र-
म्प्रातःसवनन्तत्प्रातःसवनम्प्रवृहन्ती'न्द्राय[3] त्वा त्रिष्टुप्छन्द-
सङ्गृह्णामी'ति त्रैष्टुभम्माध्यन्दिनꣳ सवनन्तन्माध्यन्दिनꣳ
सवनम्प्रवृहति 'विश्वेभ्य[4]स्त्वा देवेभ्यो जगच्छन्दसङ्गृ-
ह्णामी'ति जागतन्तृतीयसवनन्तत्तृतीयसवनम्प्रवृहत्य'नु[5]ष्टु-
प्तेऽभिगर' ऽइति यद्वा ऽऊर्द्ध्वꣳ सवनेभ्यस्तदानुष्टुभन्त-

(१) अभिषोतव्यस्य सोमस्य सेवनीया आपो निग्राभ्या उच्यन्ते ।

(A) का० श्रौ० सू० अ० १२ क० ५ सू० १६ ।

(२) शु० य० वे० सं० अ० ८ क० ४७ । (३) शु० य० वे० सं० अ० ८ क० ४७ ।
(४) शु० य० वे० सं० अ० ८ क० ४७ । (५) शु० य० वे० सं० अ० ८ क० ४७ ।

द्वेवैतत्प्रवृहति तन्नाभिषुणोति व्वज्रो वै ग्ग्रावा व्वागदाब्भ्यो नेद्व्वज्रेण व्वाचꣳ हिनसानीति ॥ ७ ॥ अꣳशूनेवाधूनोति[B] । 'व्वेशीनान्त्वा पत्मन्नाधूनोमि कुकूननानान्त्वा पत्मन्नाधूनोमि भन्दनानान्त्वा पत्मन्नाधूनोमि मदिन्तमानान्त्वा पत्मन्नाधूनोमि मधुन्तमानान्त्वा पत्मन्नाधूनोमी'त्येता वै दैवीरापस्तद्याश्चैव दैवीरापो याश्चेमा मानुष्ष्यस्ताभिरेवास्मिन्नेतदुभयीभी रसन्दधाति ॥ ८ ॥ [2]'शुक्रन्त्वा शुक्र ऽआधूनोमी'ति । शुक्रꣳ ह्येतच्छुक्र ऽआधूनो'त्यह्नो रूपे [3]सूर्य्यस्य रश्मिष्व्वि'ति तदह्नश्चैवैनमेतद्रूपे सूर्य्यस्य च रश्मिष्ष्वाधूनोति ॥ ९ ॥ [4]'ककुभꣳ रूपं व्वृषभस्य रोचते बृहदि'ति । एतद्वै ककुभꣳ रूपं व्वृषभस्य रोचते बृहद्य ऽएष तपति [5]'शुक्रः शुक्रस्य पुरोगाः सोमः सोमस्य पुरोगा' ऽइति तच्छुक्रमेवैतच्छुक्रस्य पुरोगाङ्करोति सोमꣳ सोमस्य पुरोगां [6]'यत्ते सोमादाब्भ्यन्नाम जागृवि तस्मै त्वा गृह्णामी'त्येतद्ध वा ऽअस्यादाब्भ्यन्नाम जागृवि यद्वाक्तद्वाचमेवैतद्वाचे गृह्णाति ॥ १० ॥ अथोपनिष्क्रम्म्य जुहोति* । [7]'तँस्मै ते सोम सोमाय स्वाहे'ति तत्सोममेवैतत्सोमाय जुहोति तथो व्वाचमग्नौ न प्प्रवृणक्त्यथ हिरण्यमभिव्व्यनित्य-

(B) का० श्रौ० सू० १२. ५. १९ ।

(१) शु० य० वे० सं० अ० ८ क० ४८ । (२) शु० य० वे० सं० अ० ८ क० ४८ ।
(३) शु० य० वे० सं० अ० ८ क० ४८ । (४) शु० य० वे० सं० अ० ८ क० ४९ ।
(५) शु० य० वे० सं० अ० ८ क० ४९ । (६) शु० य० वे० सं० अ० ८ क० ४९ ।

* "तस्मै त इति जुहोति" का० श्रौ० सू० १२. ५. २ ।

(७) शु० य० वे० सं० अ० ८ क० ४९ ।

सावेव बन्धुस्तस्य तावतीरेव दक्षिणा यावतीरᳲशोः * ॥ ११ ॥ अथाᳲशून्पुनरप्यर्जति †। 'उशिक्त्वन्देव सोमाग्नेः प्रियम्पाथोऽपीहि वशी त्वन्देव सोमेन्द्रस्य प्रियम्पाथोऽपीह्यस्मत्सखा त्वन्देव सोम विश्वेषान्देवानाम्प्रियम्पाथोऽपीही'ति सवनानि वा ऽअदः प्रवृहति तान्येवैतत्पुनराप्याययत्ययातयामानि करोति तैरयातयामैरुर्यज्ञन्तन्वते ॥ १२ ॥

पञ्चमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥



[ आख्यायिकया समिदाधानादीनां वनस्पत्यादिरूपफलप्राप्तिसाधनताकथनम् ]

भृगुर्ह वै वारुणिः। वरुणम्पितरं विद्ययातिमेने तद्ध वरुणो विदाञ्चकारातिवै मा विद्यया मन्यत ऽइति ॥ १ ॥ स होवाच। प्राङ् पुत्रक व्रजतात्तत्र यत्पश्श्येस्तद्दृष्ट्वा दक्षिणा व्रजतात्तत्र यत्पश्श्येस्तद्दृष्ट्वा प्रत्यग्व्रजतात्तत्र यत्पश्श्येस्तद्दृष्ट्वोदग्व्रजतात्तत्र यत्पश्श्येस्तद्दृष्ट्वैतयोः पूर्वयोरुत्तरमन्यवान्तरदेशं व्रजतात्तत्र यत्पश्श्येस्तन्म ऽआचक्षीथा ऽइति ॥ २ ॥ स ह तत ऽएव प्राङ् प्रवव्राज। इदु पुरुषैः पुरुषान्पर्वाण्येषाम्पर्वशः संव्रश्चम्पर्वशो विभजमानानिदन्तवेदम्म-

* "अᳲशुवद्दक्षिणा" का० श्रौ० सू० १२. ५. २२।

† का० श्रौ० सू० १२. ५. २१।

(१) शु० य० वे० सं० अ० ८ क० ५०।

मेति स होवाच भीष्ममम्बत भोः पुरुषान्न्वा ऽएतत्पुरुषाः पर्वाण्ण्येषाम्पर्वशः संव्रश्च्यम्पर्वशो ऽव्यभक्षतेति ते होचुरित्थं व्वा ऽइमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्न्वयमिदुमिह प्प्रतिसचामहा ऽइति स होवाचास्तीह प्प्रायश्चित्तीश्रित्त्यस्तीति कांति पिता ते वेदेति ॥ ३ ॥ स ह तत ऽएव दक्षिणा प्प्रवव्राज । इदु पुरुषैः पुरुषान्पर्वाण्ण्येषाम्पर्वशः सङ्कर्त्तम्पर्वशो विभजमानानिदन्तवेदम्ममेति स होवाच भीष्ममम्बत भोः पुरुषान्न्वा ऽएतत्पुरुषाः पर्वाण्ण्येषाम्पर्वशः सङ्कर्त्तम्पर्वशो ऽव्यभक्षतेति ते होचुरित्थं व्वा ऽइमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्न्वयमिदुमिह प्प्रतिसचामहा ऽइति स होवाचास्तीह प्प्रायश्चित्तीश्रित्त्यस्तीति कांति पितैव ते वेदेति ॥ ४ ॥ स ह तत ऽएव प्प्रत्यङ् प्रवव्राज । इदु पुरुषैः पुरुषाँस्तूष्ण्णीमासीनाँस्तूष्ण्णीमासीनैरद्यमानान्त्स होवाच भीष्ममम्बत भोः पुरुषान्न्वा ऽएतत्पुरुषास्तूष्ण्णीमासीनाँस्तूष्ण्णीमासीना ऽअदन्तीति ते होचुरित्थं व्वा ऽइमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्न्वयमिदुमिह प्प्रतिसचामहा ऽइति स होवाचास्तीह प्प्रायश्चित्तीश्रित्त्यस्तीति कांति पितैव ते वेदेति ॥ ५ ॥ स ह तत ऽएवोदङ् प्रवव्राज । इदु पुरुषैः पुरुषानाक्रन्दयत ऽआक्रन्दयद्भिरद्यमानान्त्स होवाच भीष्ममम्बत भोः पुरुषान्न्वा ऽएतत्पुरुषा ऽआक्रन्दयत ऽआक्रन्दयन्तोऽदन्तीति ते होचुरित्थं व्वा ऽइमेऽस्मानमु-

(१) 'ग' 'ज' पुस्तकयोः 'एदु' इति पाठ उपलभ्यते ।

ष्मिँल्लोके ऽसचन्त तान्न्वयमिदमिह प्प्रतिसचामहा ऽइति स होवाचास्तीह प्प्रायश्चित्ती३रि्त्यस्तीति काति पितैव ते व्वेदेति ॥ ६ ॥ स ह तत ऽएवैतयोः पूर्वयोः । उत्तरसन्न्ववान्तरदेशम्प्रवव्राजेदु स्त्रियौ कल्ल्याणीश्चातिकल्ल्याणीश्च ते ऽअन्तरेण पुरुषः कृष्णः पिङ्गाक्षो दण्डपाणिस्तस्स्थौ तꣳ हैनन्दृष्ट्वा भीर्व्विवेद स हेत्य संविवेश तꣳ ह पितोवाचाधीष्ष्व स्वाद्ध्यायङ्कस्म्मान्नु स्वाद्ध्यायन्नाधीष ऽइति स होवाच किमद्ध्येष्ष्ये न किञ्चनास्तीति तद्ध व्वरुणो विदाञ्चकाराद्रयेग्वा ऽइति ॥ ७ ॥ स होवाच । यान्वैतत्प्राच्च्यान्दिश्श्यद्राक्षीः पुरुषैः पुरुषान्न्पर्व्वाण्येषाम्पर्वशः संव्व्रश्चम्पर्व्वशो व्विभजमानानिदन्तवेदम्ममेति व्वनस्प्पतयो वै ते ऽअभूवन्त्स यद्व्वनस्प्पतीनाꣳ समिधमादधाति तेन व्वनस्प्पतीनवरुन्द्धे तेन व्वनस्प्पतीनाँल्लोकञ्जयति ॥ ८ ॥ अथ यानेतद्दक्षिणायान्दिश्श्यद्राक्षीः । पुरुषैः पुरुषान्न्पर्व्वाण्येषाम्पर्वशः सङ्कर्त्तम्पर्व्वशो व्विभजमानानिदन्तवेदम्ममेति पशवो वै ते ऽअभूवन्त्स यत्पयसा जुहोति तेन पशूनवरुन्द्धे तेन पशूनाँल्लोकञ्जयति ॥ ९ ॥ अथ यानेतत्प्रतीच्च्यान्दिश्श्यद्राक्षीः । पुरुषैः पुरुषाँस्तूष्ष्णीमासीनाँस्तूष्ष्णीमासीनैरद्यमानानोषधयो वै ता ऽअभूवन्त्स यत्तृणेनावज्ज्योतयति तेनौषधीरवरुन्द्धे तेनौषधीनाँल्लोकञ्जयति ॥ १० ॥ अथ यानेतदुदीच्च्यान्दिश्श्यद्राक्षीः । पुरुषैः पुरुषानाक्रन्दयत ऽआक्रन्दयद्भिरद्यमानानापो वै ता ऽअभूवन्त्स

(१) 'ग्र' इत्यस्य स्थाने 'द्रा' इति 'ग' 'ज' पुस्तकयोः ।

यदपः प्रत्यानयति तेनापोऽवरुन्द्धे तेनापाँल्लोकञ्जयति ॥ ११ ॥ अथ ये ऽएते । स्त्रियावद्राक्षीः कल्याणीञ्चातिकल्याणीञ्च सा या कल्याणी सा श्रद्धा स यत्पूर्वामाहुतिञ्जुहोति तेन श्रद्धामवरुन्द्धे तेन श्रद्धाञ्जयत्यथ यातिकल्याणी साऽश्रद्धा स यदुत्तरामाहुतिञ्जुहोति तेनाश्रद्धामवरुन्द्धे तेनाश्रद्धाञ्जयति ॥१२॥ अथ य ऽएने । सोऽन्तरेण पुरुषः कृष्णः पिङ्गाक्षो दण्डपाणिरस्थात्क्रोधो वै सोऽभूत्स यत्स्रुच्यप ऽआनीय निनयति तेन क्रोधमवरुन्द्धे तेन क्रोधञ्जयति स य ऽएवं विद्वानग्निहोत्रञ्जुहोति तेन सर्वञ्जयति सर्वमवरुन्द्धे ॥ १३ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ आख्यायिकयाग्निहोत्राहुतिप्राशस्त्यप्रतिपादनम् ]

जनको ह वै वैदेहः । ब्राह्मणैर्धावयद्भिः समाजगाम श्वेतकेतुनारुणेयेन सोमशुष्मेण सात्ययज्ञिना याज्ञवल्क्येन तान्होवाच कथङ्कथमग्निहोत्रञ्जुहुथेति ॥ १ ॥ स होवाच । श्वेतकेतुरारुणेयो घर्म्मावेव सम्म्राडहमजस्रौ यशसा वि(१)ष्प्यन्दमानावन्योऽन्यस्मिञ्जुहोमीति कथन्तदित्यादित्यो वै घर्म्मस्तः सायमग्नौ जुहोम्यग्निर्वै घर्म्मस्तम्प्रातरादित्ये जुहोमीति किः स भवति य ऽएवञ्जुहोत्यजस्र ऽएव श्रिया यशसा भवत्येतयोश्च देवतयोः सायुज्यः सलोकताञ्जयतीति ॥ २ ॥ अथ होवाच सोमशुष्मः सात्ययज्ञिः । तेज ऽएव सम्म्राडहन्तेजसि जुहोमीति कथन्त-

(१) 'विष्यन्द' इति 'ग' 'ज' पुस्तकयोः ।

दित्यादित्त्यो वै तेजस्तꣳ सायमग्ग्नौ जुहोम्म्यग्ग्निर्वै तेजस्त-
म्प्रातरादित्त्ये जुहोमीति किꣳ स भवति य ऽएवञ्जुहोतीति
तेजस्वी यशस्व्यन्नादो भवत्त्येतयोश्चैव देवतयोः सायुज्यꣳ
सलोकताञ्जयतीति ॥ ३ ॥ अथ होवाच याज्ञवल्क्यः ।
यदहमग्ग्निमुद्धराम्म्यग्ग्निहोत्रमेव तदुद्यच्छाम्म्यादित्त्यं वा
ऽअस्तं य्यन्तꣳ सर्व्वे देवा ऽअनुयन्ति ते म ऽएतमग्ग्नि-
मुद्धृतन्दृष्ट्वोपावर्त्तन्तेऽथाहम्पात्राणि निर्णिज्ज्योपवाप्प्या-
ग्ग्निहोत्रीन्दोहयित्वा पश्श्यन्न्पश्श्यतस्तर्प्पयामीति त्वन्ने-
दिष्ठं य्याज्ञवल्क्याग्ग्निहोत्रस्यामीमाꣳसिष्ठा धेनुशतन्ददा-
मीति होवाच न त्वेवैनयोस्त्वमुत्क्रान्तिन्न गतिन्न प्प्रति-
ष्ठान्न तृप्तिन्न पुनरावृत्तिन्न लोकम्प्रत्युत्थायिनमित्त्युक्त्वा
रथमास्थाय प्प्रधावयाञ्चकार ॥ ४ ॥ ते होचुः । अति वै
नोऽयꣳ राजन्न्यबन्धुरवादीद्धन्तैनम्ब्रह्मोद्यमाह्वयामहा ऽइति
स होवाच याज्ञवल्क्यो ब्ब्राह्मणा वै वयꣳ स्मो राज-
न्न्यबन्धुरसौ यद्यमुं वयञ्जयेम कमजैष्मेति ब्ब्रूयामाथ
यद्यसावस्मान्जयेद्ब्राह्मणान्राजन्न्यबन्धुरजैषीदिति नो ब्ब्रू-
युर्म्मेदमादद्ध्वमिति तद्धास्य जज्ञुरथ ह याज्ञवल्क्यो रथ-
मास्थायानुप्प्रधावयाञ्चकार तꣳ हान्न्वाजगाम स होवा-
चाग्निहोत्रं य्याज्ञवल्क्य वेदितू३मित्त्यग्निहोत्रꣳ सम्म्राडिति
॥ ५ ॥ ते वा ऽएते ऽआहुती हुते ऽउत्क्रामतः । ते
ऽअन्तरिक्षमाविशतस्ते ऽअन्तरिक्षमेवाहवनीयङ्कुर्व्वाते वायुꣳ
समिधम्मरीचीरेव शुक्क्रामाहुतिन्ते ऽअन्तरिक्षन्तर्प्पयतस्ते
तत ऽउत्क्रामतः ॥ ६ ॥ ते दिवमाविशतः । ते दिवमेवा-

हवनीयङ्कुर्वाते ऽआदित्यꣳ समिधञ्चन्द्रमसमेव शुक्का-माहुतिन्ते दिवन्तर्प्पयतस्ते तत ऽआवर्त्तेते ॥ ७ ॥ ते ऽइमामाविशतः । ते ऽइमामेवाहवनीयङ्कुर्वाते ऽअग्निꣳ समिधमोषधीरेव शुक्रामाहुतिन्ते ऽइमान्तर्प्पयतस्ते तत ऽउत्क्रामतः ॥ ८ ॥ ते पुरुषमाविशतः । तस्य मुखमेवाह-वनीयङ्कुर्वाते जिह्वाꣳ समिधमन्नमेव शुक्रामाहुतिन्ते पुरुषन्तर्प्पयतः स य ऽएवं विद्वानश्नात्यग्निहोत्रमेवास्य हुतम्भवति ते तत ऽउत्क्रामतः ॥९॥ [अर्धः प्रपाठकः ॥५१॥] ते स्त्रियमाविशतः । तस्या ऽउपस्थमेवाहनीयङ्कुर्वाते धार-काꣳ समिधन्धारका ह वै नामैषैतया ह वै प्प्रजापतिः प्प्रजा धारयाञ्चकार रेत ऽएव शुक्रामाहुतिन्ते स्त्रियन्तर्प्पयतः स य ऽएवं विद्वान्मिथुनमुपैत्यग्निहोत्रमेवास्य हुतम्भवति यस्ततः पुत्रो जायते स लोकः प्प्रत्युत्थाय्येतदग्निहोत्रं ऱ्याज्ञवल्क्य नातः परमस्तीति होवाच तस्मै ह याज्ञवल्क्यो व्वरन्ददौ स होवाच कामप्प्रश्न ऽएव मे त्वयि याज्ञवल्क्यास दिति ततो ब्ब्रह्मा जनक ऽआस ॥ १० ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ आख्यायिकयाऽग्निहोत्रदर्शपूर्णमासादियागदेवतानां तत्त्वतः प्राण-शब्दाभिधेयपरमात्मरूपताप्रतिपादनम् ]

जनको ह वैदेहः । बहुदक्षिणेन यज्ञेनेजे स ह गवाꣳ सहस्रमवरुन्धन्नुवाचैता वो ब्ब्राह्मणा यो ब्ब्रह्मिष्ठः स ऽउदजतामिति ॥ १ ॥ स होवाच याज्ञवल्क्यः ।

अर्वाचीरेता ऽइति ते होचुस्त्वथ्ठं स्विन्नो याज्ञवल्क्य ब्ब्रह्मिष्ठोऽसी३ ऽइति स होवाच नमोऽस्तु ब्ब्रह्मिष्ठाय गोकामा ऽएव व्वयथ्ठं स्म ऽइति ॥ २ ॥ ते होचुः । को न ऽइमम्प्रक्ष्यतीति स होवाच विदग्धः शाकल्ल्योऽहमिति तꣳ ह प्प्रतिख्यायोवाच त्वाꣳ स्विच्छाकल्ल्य ब्ब्राह्मणा ऽउल्म्मुकावक्षयणमक्रूता३ ऽइति ॥ ३ ॥ स होवाच । कति देवा याज्ञवल्क्येति त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येति त्रयस्त्रिꣳशदित्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येति त्त्रय ऽइत्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येति द्वावित्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येत्त्यद्ध्यर्द्ध ऽइत्त्योमिति होवाच कत्त्येव देवा याज्ञवल्क्येत्त्येक ऽइत्त्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ ४ ॥ स होवाच । महिमान ऽएवैषामेते त्रयस्त्रिꣳशत्त्वेव देवा ऽइति कतमे ते त्रयस्त्रिꣳशदित्त्यष्टौ व्वसव ऽएकादश रुद्रा द्वादशादित्त्यास्त ऽएकत्रिꣳशदिन्द्रश्चैव प्प्रजापतिश्च त्रयस्त्रिꣳशाविति ॥ ५ ॥ कतमे व्वसव ऽइति । अग्निश्च पृथिवी च व्वायुश्चान्तरिक्षञ्चादित्त्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते व्वसव ऽएते हीदꣳ सर्वं व्वासयन्ते ते यदिदꣳ सर्वं व्वासयन्ते तस्म्माद्वसव ऽइति ॥ ६ ॥ कतमे रुद्रा ऽइति । दशेमे पुरुषे प्प्राणा ऽआत्मैकादशस्ते यदास्म्मान्मर्त्त्याच्छरीरादुत्क्रामन्त्यथ रोद-

(१) अर्धदग्धकाष्ठमुल्मुकम्—तस्य वहिर्निरसनमवक्षयणम् ।

यन्ति तद्यद्रोदुयन्ति तस्म्मादुद्रा ऽइति ॥ ७ ॥ कतम ऽआदित्त्या ऽइति । द्वादश मासाः सँवत्त्सरस्यैत ऽआदित्त्या ऽएते हीदꣳ सर्व्वमाददाना यन्ति ते यदिदꣳ सर्व्वमाददाना यन्ति तस्म्मादादित्त्या ऽइति ॥ ८ ॥ कतम ऽइन्द्रः कतमः प्प्रजापतिरिति । स्तनयित्त्नुरेवेन्द्रो यज्ञः प्प्रजापतिरिति कतम स्तनयित्त्नुरित्त्यशनिरिति कतमो यज्ञ ऽइति पशव ऽइति ॥ ९ ॥ कतमे ते त्र्यो देवा ऽइति । इम ऽएव त्र्यो लोका ऽएषु हीमे सर्व्वे देवा ऽइति· कतमौ तौ द्वौ देवावित्त्यन्नञ्चैव प्प्राणश्च्चेति कतमोऽद्ध्यर्द्ध ऽइति योऽयम्पवत ऽइति यदस्म्मिन्निदꣳ सर्व्वमद्ध्याद्र्ध्नोत्तेना-द्ध्यर्द्ध ऽइति कतम ऽएको देव ऽइति प्प्राण ऽइति ॥ १० ॥ स होवाच । अनतिप्प्रश्श्यामा देवतामत्त्यप्राक्षीः पुरेतित्त्थ्यै मरिष्ष्यसि न तेऽस्त्थीनि चन गृहान्प्राप्प्स्य-न्तीति स ह तथैव ममार तस्य हाप्प्यन्न्यन्म्मन्न्यमानाः परिमोषिणोऽस्त्थीन्न्यपजह्रुस्तस्म्मान्नोपवादी स्यादुत ह्येवं-वित्त्परो भवति ॥ ११ ॥

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

---

[ पशुबन्धप्रशंसा ]

पशुबन्धेन*यजते । पशवो वै पशुबन्धः स यत्पशु-बन्धेन यजते पशुमानसानीति तेन गृहेषु † यजेत

---

( १ ) 'यदस्मिन्निदꣳ सर्व्वमद्ध्याप्नोत्तेनाद्ध्यर्द्ध ऽइति' इति पाठः 'ग' 'अ' पुस्तकयोर्नास्ति ।

* पशुर्बध्यते यज्ञार्थं यस्मिन्कर्मणि स पशुबन्धाख्यो यागः ।
उद्भिदा यजेतेतिवद्यजिसमानाधिकृतत्वाद्यागनामधेयम् ॥

† का० श्रौ० सू० ६. १. ३. ।

गृहेषु पशून्बद्ध्ना ऽइति तेन सुयवसे A यजेत सुयवसे पशून्बद्ध्ना इति जीर्य्यन्ति ह वै जुह्वतो यजमानस्याग्नयोऽग्नीञ्जीर्य्यतोऽनु यजमानो यजमानमनु गृहाश्च पशवश्च ॥ १ ॥ * स यत्पशुबन्धेन यजते। अग्नीनेवैतत्पुनर्णवान्कुरुतेऽग्नीनाम्पुनर्णवतामनु यजमानो यजमानमनु गृहाश्च पशवश्चायुष्ष्यो ह वा ऽअस्यैष ऽआत्मनिष्क्रयणो भवति माꣳसीयन्ति B ह वै जुह्वतो यजमानस्याग्नयस्ते यजमानमेव ध्यायन्ति यजमानꣳ सङ्कल्पयन्ति पचन्ति वा ऽअन्येष्वग्निषु व्वृथा माꣳसमथैतेषान्नातोऽन्या माꣳसाशा विद्यते यस्यो चैते भवन्ति ॥ २ ॥ स यत्पशुबन्धेन यजते। आत्मानमेवैतन्निष्क्रीणीते वीरेण वीरं वीरो हि पशुर्वीरो यजमान ऽएतदु ह वै परममन्नाद्यं यन्माꣳसꣳ स परमस्यैवान्नाद्यस्यात्ता भवति तं वै सँवत्सरो नानीजानमतीयादायुर्वै सँवत्सर आयुरेवैतदमृतमात्मन्धत्ते ॥ ३ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ पशुबन्धस्येष्टिविधत्वम्, सोमविधत्वञ्च ]

हविर्यज्ञविधो ह वा ऽअन्यꣳ पशुबन्धꣳ। सवविधोऽन्यꣳ स हैष हविर्यज्ञविधो यस्मिन्व्रतमुपनयति

(A) शोभनानि यवसानि तृणानि यस्मिन्नृतौ स कालः सुयवसः।

* शतम् ५९००।

(B) मांसीयन्ति = मांसं खादितुमिच्छन्ति।

(१) "व्रतोपायन-प्रणीताज्यभाग-भागावदान-पूर्णपात्र-विष्णुक्रमान् कुर्याद्धविर्यज्ञविधे" (का० श्रौ० सू० ६. २. ४)

यस्मिमन्नपः प्प्रणयति यस्मिमन्न्पूर्ण्णपात्रन्निनयति यस्मिम-न्न्विष्ष्णुक्रमान्न्क्रमयत्त्यथ हैष सत्रविधो यस्मिमन्नेतानि न क्रियन्ते ॥ १ ॥ तदाहुः । इष्टिः पशुबन्धा३ महायज्ञा३ ऽइति महायज्ञ ऽइति ह ब्रूयादिष्टिं वै तर्हि पशुबन्ध-मकुर्व्वयेनमक्कुक्षथा ऽइत्त्येनम्ब्रूयात् ॥ २ ॥ तस्य प्प्रयाजा ऽएव प्प्रातःसवनम् । अनुयाजास्तृतीयसवनम्पुरोडाश ऽएव माद्ध्यन्दिनꣳ सवनम् ॥ ३ ॥ तद्धैके । वपायाꣳ हुतायान्दक्षिणा नयन्ति तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयाद्बर्हिर्द्वा ह्वा ऽअयम्प्राणेभ्यो दक्षिणा ऽअनैषीन्न प्प्राणानदक्षदन्धो वा स्रामो वा बधिरो वा पक्षहतो वा भविष्ष्यतीतीश्श्वरो ह तथैव स्यात् ॥ ४ ॥ इत्थमेव कुर्य्यात् । पुरोडाशेडायामेवोपहूतायान्दक्षिणा नयेदैन्द्रो वा ऽअयम्मद्ध्यतः प्प्राण ऽइममेवैतदैन्द्रम्मद्ध्यतः प्प्राणन्दक्षिणा-भिर्दक्षयत्त्यैन्द्रं वै माद्ध्यन्दिनꣳ सवनम्माद्ध्यन्दिने वै सवने दक्षिणा नीयन्ते तस्मात्पुरोडाशेडायामेवोपहूतायान्दक्षिणा नयेत् ॥ ५ ॥ तदाहुः । अद्ध्वर्य्यो यद्दीक्षितस्य नानवभृथोऽ-वकल्पते क्वैनमदिदीक्ष ऽइत्त्यावभृथादनूहꣳहेयुरद्ध्वर्य्युश्च प्प्रतिप्प्रस्थाता च होता च मैत्रावरुणश्च ब्रह्मा चाग्नी-द्ध्रश्चैतैर्वा ऽएष षड्ढोता * तमनुद्रुत्त्य षड्ढोतारञ्जुहोत्त्ये-कामाहुतिङ्कृत्वा पञ्च वाज्या 'द्यौष्पृष्ठमन्तरिक्षमात्मा-ङ्गैर्य्यज्ञम्पृथिवीꣳ शरीरैः । व्वाचस्पतेऽच्छिद्रया व्वाचा-

* षट् होतारो होमनिष्पादका यस्मिन् स षड्ढोता ।

(१) "षड्ढोतारं पञ्चगृहीतं मनसानुद्रुत्य जुहोत्येकामाहुतिं पञ्च वा" (का० श्रौ० सू० ६. १. ३३)

च्छिद्रया जुह्वा दिवि देवावृधꣳ होत्रामैरयत्स्वाहे'ति सैव दीक्षा ॥ ६ ॥ तदाहुः । अद्धर्य्यो यद्दीक्षितस्य नानवभृथोऽवकल्प्पते क्वैनमवभृथमवनेष्ष्यसीति स यद्धृदयशूलेन चरन्ति स हैवैतस्यावभृथः ॥ ७ ॥ मधुको ह स्म्माह पैङ्ग्यः । विसोमेन वा ऽएके पशुवन्धेन यजन्ते ससोमेनैके दिवि वै सोम ऽआसीत्तङ्गायत्री वयो भूत्वाहरत्तस्य यत्पर्ण्णमच्छिद्यत तत्पर्ण्णस्य पर्ण्णत्त्वमिति न्न्वा ऽएतद्ब्राह्मणमुद्यते विसोमेन वा ऽएके पशुबन्धेन यजन्ते ससोमेनैके स हैष विसोमेन पशुबन्धेन यजते योऽन्न्यम्पालाशाद्यूपङ्कुरुतेऽथ हैष ससोमेन पशुबन्धेन यजते यः पालाशं य्यूपङ्कुरुते तस्म्मात्पालाशमेव यूपङ्कुर्वीत ॥ ८ ॥

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ बहुसारस्य यूपस्य पशुविरोधित्वम्, अल्पसारस्य पशुसमृद्धिकरत्वञ्च ]

स य ऽएष बहुसारः । स हापशव्व्यस्तस्म्मात्तादृशम्पशुकामो यूपन्न कुर्वीताथ य ऽएष फल्गुप्प्रासहः स ह पशव्व्यस्तस्म्मात्तादृशम्पशुकामो यूपङ्कुर्वीत ॥ १ ॥ अथ यस्यैतद्वक्रस्य सतः । शूल ऽइवाग्ग्रम्भवति स ह कपोती नाम स यो ह तादृशं य्यूपङ्कुरुते पुरा हायुषोऽमुँल्लोकमेति तस्म्मात्तादृशमायुष्कामो यूपन्न कुर्वीत ॥ २ ॥ अथ य ऽएष ऽआनतः । उपरिष्टादुपनतो मद्ध्ये सोऽशनायै रूपꣳ स यो ह तादृशं य्यूपङ्कुरुतेऽशनायुका हास्य भार्य्या

(१) का० श्रौ० सू० अ० ६ क० १ सू० ८ ।

भवन्ति तस्म्मात्तादृशमन्नाद्यकामो यूपन्न कुर्वीताथ य ऽएष ऽआनत ऽउपरिष्टाद्दुपनतो मद्ध्ये सोऽन्नाद्यस्य रूपन्तस्म्मात्तादृशमन्नाद्यकामो यूपङ्कुर्वीत ॥ ३ ॥

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ यूपप्रमाणम् ]

स यद्दपशुना यक्ष्यमाणः । एकारत्निं ऽयूपङ्कुरुत ऽइममेव तेन लोकञ्जयत्यथ यद्द्व्यरत्निमन्तरिक्षलोकमेव तेन जयत्यथ यत्र्यरत्निन्दिवमेव तेन जयत्यथ यच्चतुररत्निन्दिश ऽएव तेन जयति स वा ऽएष त्र्यरत्निर्वैव चतुररत्निर्वा * पशुबन्धयूपो भवत्यथ योऽत ऽऊर्द्ध्वः सौम्म्यस्यैव सोऽद्ध्वरस्य ॥ १ ॥ तदाहुः । यजेदाज्ज्यभागौ ना३ ऽइति यजेदित्याहुश्चक्षुषी वा ऽएते यज्ञस्य यदाज्ज्यभागौ किमृते पुरुषश्चक्षुर्भ्यांᳬ स्यादिति यावद्वै भागिनᳬ स्वेन भागधेयेन न निर्भजन्त्यनिर्भक्तो वै स तावन्मन्यतेऽथ यदैव तᳬ स्वेन भागधेयेन निर्भजन्त्यथैव स निर्भक्तो मन्यते स यत्रैतद्धोतान्वाहास्न्ना रक्षः सᳬसृजतादिति तदेनᳬ स्वेन भागधेयेन निर्भजति ॥ २ ॥ एतद्वै पशोः संज्ञप्प्यमानस्य । हृदयᳬ शुक्क्समवैति हृदयाच्छूलन्तद्यै सह हृदयेन पशुᳬ श्रपयन्ति पुनः पशुः शुगनुविष्प्पन्देत पार्श्र्वत ऽएवैनत्काष्ठे प्प्रतृद्य श्श्रपयेत् † ॥ ३ ॥ उपस्तृणीत ऽआज्ज्यम् । तत्पृथिव्यै रूपङ्करोति हिरण्यशकलमवदधाति तदग्ने रूप-

* "त्र्यरत्निश्चतुररत्निर्वा" का० श्रौ० सू० ६. १. ४।
† का० श्रौ० सू० ६. ७. १४।

ङ्करोति वपामवदधाति तदन्तरिक्षस्य रूपङ्करोति हिरण्यशकलमवदधाति तदादित्यस्य रूपङ्करोत्यथ यदुपरिष्टादभिघारयति तद्दिवो रूपङ्करोति सा वा ऽएषा पञ्चावत्ता वपा भवति पाङ्क्तो यज्ञः [A] पाङ्क्तः पशुः [B] पञ्च ऽर्त्तवः सँवत्सरस्य तस्मात्पञ्चावत्ता वपा भवति ॥ ४ ॥

सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥



[ अग्निहोत्रे मह इत्युपस्थानं कर्तव्यनिमित्तं विधातुमाख्यायिका ]

तद्यथा ह वै । इदꣳ रथचक्रं वा कौलालचक्रं वा प्प्रतिष्ठितङ्क्रन्देदेवꣳ हैवेमे लोका ऽअध्रुवा ऽअप्प्रतिष्ठिता ऽआसुः ॥ १ ॥ स ह प्प्रजापतिरीक्षाञ्चक्रे । कथन्न्विमे लोका ध्रुवाः प्प्रतिष्ठिताः स्युरिति स ऽएभिश्चैव पर्वतैर्न्नदीभिश्चेमामदृꣳहद्वयोभिश्च मरीचिभिश्चान्तरिक्षञ्जीमूतैश्च नक्षत्रैश्च दिवम् ॥ २ ॥ स मह ऽइति व्व्याहरत् । पशवो वै महस्तस्माद्यस्यैते बहवो भवन्ति भूयिष्ठमस्य कुले महीयन्ते बहवो ह वा ऽअस्यैते भवन्ति भूयिष्ठꣳ हास्य कुले महीयन्ते तस्माद्यद्येनमायतनाद्बाधेरन्न्वा प्र वा यापयेयुरग्निहोत्रꣳ हुत्वा मह ऽइत्युपतिष्ठेत प्प्रति प्प्रजया पशुभिस्तिष्ठति नायतनाच्च्यवते ॥ ३ ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(A) धानाकरम्भादिपञ्चद्रव्यसाध्यत्वाद्यज्ञः पाङ्क्तः ।
(B) लोमत्वङ्मांसास्थिमज्जाख्यपञ्चधातुमयत्वात्पशुः पाङ्क्तः ।

[ आहितादिभेदेनाग्नेश्चातुर्विध्यम् ]

चत्वारो ह वा ऽअग्नयः । आहित ऽउद्धृतः प्रहृतो विहृतोऽयमेव लोक ऽआहितोऽन्तरिक्षलोक ऽउद्धृतो द्यौष्प्रहृतो दिशो विहृतोऽग्निरेवाहितो वायुरुद्धृत ऽआदित्यः प्रहृतश्चन्द्रमा विहृतो गार्हपत्य ऽएवाहित ऽआहवनीय ऽउद्धृतोऽथ यमेतमाहवनीयात्प्राञ्चम्प्रणयन्ति स प्रहृतोऽथ यमेतमुदञ्चम्पशुश्रपणायाहरन्ति यश्चोपयड्भ्यः स विहृतस्तस्मात्प्रहार्य्येऽग्नौ पशुबन्धेन यजेत ॥ १ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ पशोः प्रजापतिः सूर्य इन्द्राग्नीति देवतात्रयप्रतिपादनम् ]

तदाहुः । किन्देवत्य ऽएष पशुः स्यादिति प्राजापत्यः स्यादित्याहुः प्रजापतिर्वा ऽएतमग्रेऽभ्यपश्यत्तस्मात्प्राजापत्य ऽएवैष पशुः स्यादिति ॥ १ ॥ अथो ऽअप्याहुः । सौर्य्य ऽएवैष पशुः स्यादिति तस्मादेतस्मिन्नस्तमिते पशवो बद्ध्यन्ते बद्ध्नन्त्येकांश्च्यथागोष्ठमेक ऽउपसमायन्ति तस्मात्सौर्य्य ऽएवैष पशुः स्यादिति ॥ २ ॥ अथो ऽअप्याहुः । ऐन्द्राग्न ऽएवैष पशुः स्यादित्येते वै देवते ऽअद्धक्ष्ये देवा यथार्त्तो यजते पारयत ऽएव यदि महसा यजते पारयत ऽएव तस्मादैन्द्राग्न * ऽएवैष पशुः स्यादिति ॥ ३ ॥ प्राण ऽएव पशुबन्धः । तस्माद्यावज्जी-

* "ऐन्द्राग्नः सौर्यः प्राजापत्यो ना यमिच्छेत्" ( का० श्रौ० सू० ६. १. २६ )

वति नास्यान्न्यः पशूनामीष्टे वद्धा ह्यस्मिन्नेते भवन्ति ॥४॥
स ह प्रजापतिरग्निमुवाच । यजै त्वया त्वा लभा ऽइति
नेति होवाच वायुम्ब्रूहीति स ह वायुमुवाच यजै त्वया
त्वा लभा ऽइति नेति होवाच पुरुषम्ब्रूहीति स ह पुरुषमुवाच
यजै त्वया त्वा लभा ऽइति नेति होवाच पशून्ब्रूहीति स ह
पशूनुवाच यजै युष्माभिरा वो लभा ऽइति नेति होचुश्चन्द्र-
मसम्ब्रूहीति स ह चन्द्रमसमुवाच यजै त्वया त्वा लभा
ऽइति नेति होवाचादित्यम्ब्रूहीति स हादित्यमुवाच यजै
त्वया त्वा लभा ऽइति तथेति होवाच य ऽउ त ऽएते
नाचीकमन्त किमु म ऽएतेषु स्यादिति यद्यत्कामयेथा
ऽइति तथेति तमालभत सोऽस्यायम्पशुरालब्धः संज्ञप्तोऽ-
श्वयत्तमेताभिराप्रीभिराप्रीणात्तद्यदेनमेताभिराप्रीभिरा-
प्रीणात्तस्मादाप्रियो नाम तस्मादु पशुः संज्ञप्तम्ब्रूया-
च्छेतान्नु मुहूर्त्तमिति स यावन्तमश्वमेधेनेष्ट्वा लोकञ्जयति
तावन्तमेनेन[1] जयति ॥ ५ ॥ तम्प्राची दिक् । प्राणेत्यनु-
प्प्राणत्प्राणमेवास्मिँस्तदद्धात्तन्दक्षिणा दिग्व्यानेत्यनु-
प्प्राणद्व्यानमेवास्मिँस्तदद्धात्तम्प्रतीची दिगपानेत्यनु-
प्प्राणदपानमेवास्मिँस्तदद्धात्तमुदीची दिगुदानेत्यनुप्प्राण-
दुदानमेवास्मिँस्तदद्धात्तमूर्द्ध्वा दिक्समानेत्यनुप्प्राणत्स-
मानमेवास्मिँस्तदद्धात्तस्मादु पुत्त्रञ्जातमकृत्तनाभिम्प्रञ्च
ब्राह्मणान्ब्रूयादित्येनमनुप्प्राणितेति * यद्यु तान्न विन्देदपि

(१) 'ते' इति 'ग' 'ज' पुस्तकयोः ।

* पा० गृ० सू० १, १६, १० ।

स्वयमेवानुपरिक्रामममनुप्प्राण्णयात्स सर्व्वमायुरेत्या हैव जरायै जीवति ॥ ६ ॥ स प्प्राणमेवाग्नेरादत्त । तस्मादेष नानुपद्ध्मातो नानुपज्वलितो ज्वलत्यात्तो ह्यस्य प्प्राण ऽआ ह वै द्विषतो भ्भ्रातृव्व्यस्य प्प्राणन्दत्ते य ऽएवं व्वेद ॥ ७ ॥ रूपमेव व्वायोरादत्त। तस्मादेतस्य लेलयत ऽइवैवो-पश्रृण्णवन्ति न त्वेनम्पश्श्यन्त्यात्तथं ह्यस्य रूपमा ह वै द्विषतो भ्भ्रातृव्व्यस्य रूपन्दत्ते य ऽएवं व्वेद ॥ ८ ॥ चित्त-मेव पुरुषस्यादत्त । तस्मादाहुर्द्देवचित्तन्त्वावतु मा मनुष्य-चित्तमित्यात्तथं ह्यस्य चित्तमा ह वै द्विषतोभ्भ्रातृव्व्यस्य चित्तन्दत्ते य ऽएवं व्वेद ॥ ९ ॥ चक्षुरेव पशूनामादत्त । तस्मादेते चाकश्श्यमाना ऽइवैव न जानन्त्यथ यर्द्दैवो-पजिग्घ्रन्त्यथ जानन्त्यात्तथं ह्येषाञ्चक्षुरा ह वै द्विषतो भ्भ्रातृव्व्यस्य चक्षुर्द्दत्ते य ऽएवं व्वेद ॥ १० ॥ भामेव चन्द्रमस ऽआदत्त । तस्मादेतयोः सदृशयोः सतोर्न्नत-राश्चन्द्रमा भात्यात्ता ह्यस्य भा ऽआ ह वै द्विषतो भ्भ्रातृव्व्यस्य भान्दत्ते य ऽएवं व्वेद तद्यदादत्त तस्मा-दादित्यः ॥ ११ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ पशुप्रायश्चित्ततया स्पृत्याख्यहोमविधानम् ]

केशिगृहपतीनामु ह । सम्म्राड्दुघाथं शार्द्दूलो जघान स ह ससत्रिण आमन्त्रयाञ्चक्क्रे केह प्प्रायश्चित्तिरिति ते होचुर्न्नेह प्प्रायश्चित्तिरस्ति खण्डिक ऽएवौद्भारिरस्य

प्प्रायश्चित्तिं व्वेद स ऽउ त ऽएतादृक्क्चैव कामयतेऽतश्च पापीय ऽइति ॥ १ ॥ स होवाच । सङ्ग्रहीतर्युक्त्धि मे स्यन्त्स्यामि स यद्यह मे व्वक्ष्यति समाप्प्स्यामि यद्यु मा मारयिष्ष्यति यज्ञं व्विकृष्टमनु व्विकृक्ष्य ऽइति ॥ २ ॥ स ह युक्त्वा ययावाजगाम । तꣳ ह प्प्रतिख्यायोवाच यन्न्वे- तान्न्येवाजिनानि मृगेषु भवन्त्यथैषाम्पृष्टीरपिशीर्ष्य पचामहे कृष्ण्णाजिनम्मे ग्गीवास्वाबद्धमित्त्येव मेदुमधृषोऽब्भ्यत्र- स्यन्तू३ मिति ॥ ३ ॥ नेति होवाच । सम्म्राड्दुघां* व्वै मे भगवꣳ शार्दूलोऽवधीत्स यद्यह मे व्वक्ष्यसि समाप्प्स्यामि यद्यु मा मारयिष्ष्यसि यज्ञं व्विकृष्टमनु व्विकृक्ष्य ऽइति ॥ ४ ॥ स होवाच । आमन्त्रणीयान्न्वामन्त्रया ऽइति तान्न्हामन्त्र्योवाच यद्यस्म्मै व्वक्ष्याम्म्यमुष्ष्यैवेदुम्प्रजा भविष्ष्यति न मम लोकी त्त्वहम्भविष्ष्यामि यद्यु वा ऽअस्म्मै न व्वक्ष्यामि ममैवेदुम्प्रजा भविष्ष्यति नामुष्ष्य लोकी त्त्वसौ भविष्ष्यतीति ते होचुर्म्मा भगवो व्वोचोऽयं व्वाव क्षत्त्रियस्य लोक ऽइति स होवाच व्वक्ष्याम्म्येवामूर्व्वै रात्रयो भूयस्य ऽइति ॥ ५ ॥ तस्म्मा ऽउ हैतदुवाच । स्पृतीर्हुत्त्वान्न्यामाजतेति ब्ब्रूतात्त्सा ते सम्म्राड्दुग्धा स्यादिति चन्द्रात्ते मन स्पृणोमि स्वाहा सूर्य्यात्ते चक्षु स्पृणोमि स्वाहा व्वातात्ते प्प्राणान्त्स्पृणोमि स्वाहा दिग्भ्यस्ते श्रोत्त्रꣳ स्पृणोमि स्वाहाद्भ्यस्ते लोहितꣳ स्पृणोमि स्वाहा पृथिव्व्यै ते शरीरꣳ स्पृणोमि स्वाहेत्त्यथान्न्यामाजतेति

* प्रवर्ग्यदोहनार्थां गामित्यर्थः ।

ब्रूतात्सा ते सम्म्राड्दुघा स्यादिति ततो हैव स ऽउत्स-
साद कैशिनीरेवेमा ऽअप्प्येतर्हि प्प्रजा जायन्ते ॥ ६ ॥

अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या॥१०२॥

इत्यष्टमोऽध्यायः ॥ ८ ॥

अष्टाध्यायीनामैकादशं काण्डं समाप्तम्* ॥ ११ ॥



* अस्मिन्काण्डे कण्डिकासंख्या ॥ ४३७ ॥

# अथ मध्यमनाम द्वादशं काण्डम्

[ अस्मिन्काण्डे प्रतिपाद्या विषयाः—दीक्षाक्रमः, सत्राणि, पृष्ठ्याऽभिप्लु-स्वरसाम—विषुवन्महाव्रतादिनिरूपणम्' गवामयनम्, अग्निहोत्र-प्रायश्चित्तम्, मृतकाग्निहोत्रम्, मृतस्यदाहः ]

[ द्वादशाहे* दीक्षाक्रमः ]

॥ ॐ ॥ अयं वै यज्ञो योऽयम्पवते। तमेत ऽईप्सन्ति ये सँवत्सराय दीक्षन्ते तेषाङ्गृहपतिः प्रथमो दीक्षतेऽयं वै लोको गृहपतिरस्मिन्न्वै लोक ऽइदꣳ सर्वम्प्रतिष्ठित-ङ्गृहपता ऽउ वै सत्रिणः प्रतिष्ठिताः प्रतिष्ठायामेवै-तत्प्रतिष्ठाय दीक्षन्ते ॥ १ ॥ अथ ब्रह्माणन्दीक्षयति। चन्द्रमा वै ब्रह्मा सोमो वै चन्द्रमाः सौम्या ऽओषधय ऽओषधीस्तदनेन लोकेन सन्दधाति तस्मादेतावन्तरे-णान्यो न दीक्षेत स यद्धैतावन्तरेणान्यो दीक्षेतौषधी-स्तदनेन लोकेन नानाकुर्य्यादुच्छोषुका ह स्युस्तस्मादेता-

---

* द्वादशाहो द्विविधः सत्रात्मकोऽहीनात्मकश्चेति। तयोर्लक्षणं यथा—'आसत उपयन्तीति सत्र-लिङ्गं यजत इत्यहीनस्य' ( का० श्रौ० सू० १२. १. ५. ) इति। यस्य उत्पत्तिवाक्ये आस् धातुः, उपोपसृष्ट इण् धातुर्वा श्रूयते तत् सत्रम्। यथा—'द्वादशाहमृद्धिकामा उपेयुः' 'देवा ह वै सत्रमासत' इति। यजधातुघटितवाक्यविहितत्वमहीनत्वम्। यथा—'द्वादशाहेन प्रजाकामं याजयेत्' इति।

लक्षणान्तरञ्च—'उभयतोऽतिरात्रं सत्रमुपरिष्टादहीनस्य' ( का० सू० १२. १. ६ ) इति।

अत्र सत्रे अहीने वा योऽहःशब्दो रात्रिशब्दो वा श्रूयते स सर्वोऽप्यहोरात्रसमुदायवाचकः। तेन द्वादशरात्रो द्वादशाह इति समानार्थक एव।

( १ ) का० श्रौ० सू० १२. २. १५।

वन्तरेणान्न्यो न दीक्षेत ॥ २ ॥ अथोद्गातारन्दीक्षयति । पर्ज्जन्न्यो वा ऽउद्गाता पर्ज्जन्न्यादु वै व्वृष्टिर्ज्जायते व्वृष्टि-न्तदोषधिभिः सन्दधाति तस्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेत व्वृष्टिन्तदोषधि भिर्न्नानाकुर्य्यादवर्षुको ह स्यात्तस्मादेतावन्तरेणान्न्यो न दीक्षेत ॥ ३ ॥ अथ होतारन्दीक्षयति । अग्निर्वै होताधि-देवतं व्वागध्यात्ममन्नं व्वृष्टिरग्निश्च तद्वाचश्चान्नेन सन्दधाति तस्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेताग्निश्च तद्वाचश्चान्नेन नानाकुर्य्यादशनायुका ह स्युस्तस्मादेतावन्तरेणान्न्यो न दीक्षेतैतांश्चतुरोऽद्ध्वर्य्यु-र्दीक्षयति ॥ ४ ॥ अथाद्ध्वर्य्युम्[2] प्रतिप्रस्थाता दीक्षयति । मनो वा ऽअद्ध्वर्य्युर्व्वाग्घोता मनश्च तद्वाचश्च सन्दधाति तस्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेत मनश्च तद्वाचश्च नानाकुर्य्यात्प्रमायुका ह स्युस्त-स्मादेतावन्तरेणान्न्यो न दीक्षेत ॥ ५ ॥ अथ ब्ब्रह्मणे ब्ब्राह्म-णाच्छंसिनन्दीक्षयति । तꣳ हि सोऽन्वथोद्गात्रे प्प्रस्तोतार-न्दीक्षयति तꣳ हि सोऽन्वथ होत्रे मैत्रावरुणन्दीक्षयति तꣳ हि सोऽन्वेतांश्चतुरः प्प्रतिप्प्रस्थाता दीक्षयति ॥६॥ अथाद्ध्व-र्य्यवे प्प्रतिप्प्रस्थातारेन्नेष्टा[3] दीक्षयति। तꣳ हि सोऽन्वेतेषां व्वै नवानाङ्क्लृप्तिमन्न्वितरे कल्पन्ते नव वै प्प्राणाः प्प्राणा-न्नेवैष्वेतद्दधाति तथा सर्व्वमायुर्य्यन्ति तथो ह न पुरायुषोऽ-

---

(१) 'ग' 'ज' पुस्तकयोः 'तदोषधिभ्यः' इति पाठ उपलभ्यते ।

(२) का० श्रौ० सू० १२. २. १६ । (३) का० श्रौ० सू० १२. २. १७ ।

स्म्माल्लोकात्प्रयन्ति ॥ ७ ॥ अथ ब्ब्रह्मणे पोतारन्दीक्षयति । तꣳ हि सोऽन्न्वथोद्गात्रे प्प्रतिहर्त्तारन्दीक्षयति तꣳ हि सोऽन्न्वथ होत्रेऽच्छावाकन्दीक्षयति तꣳ हि सोऽन्न्वेताꣳश्चतुरो नेष्टा दीक्षयति ॥ ८ ॥ अथाद्ध्वर्य्युर्वे नेष्टारमुन्नेता दीक्षयति । तꣳ हि सोऽन्न्वथ ब्ब्रह्मण ऽआग्नीध्रन्दीक्षयति तꣳ हि सोऽन्न्वथोद्गात्रे सुब्ब्रह्मण्ण्यान्दीक्षयति तꣳ हि सोऽन्न्वथ होत्रे ग्ग्रावस्तुतन्दीक्षयति तꣳ हि सोऽन्न्वेताꣳश्चतुर ऽउन्नेता दीक्षयति ॥ ९ ॥ अथोन्नेतारम्[2] । स्नातको वा ब्ब्रह्मचारी वान्न्यो वा दीक्षितो दीक्षयति न पूतꣳ पावयेदिति ह्याहुꣳ सैषानुपूर्व्वदीक्षा स यत्र हैवं विद्वाꣳसो दीक्षन्ते दीक्षमाणा हैव ते यज्ञङ्कल्प्पयन्ति यज्ञस्य क्लृप्तिमनु सत्रिणां रुयोगक्षेमꣳ कल्प्पते सत्रिणां रुयोगक्षेमस्य क्लृप्तिमन्न्वपि तस्यार्द्धस्य योगक्षेमꣳ कल्प्पते यस्मिन्नर्द्धे यजन्ते ॥ १० ॥ तेषां व्वा ऽउन्नेतोत्तमो दीक्षते । प्प्रथमोऽवभृथादुदायतामुदैति प्प्राणो वा ऽउन्नेता प्प्राणमेवैष्ष्वेतदुभयतो दधाति तथा सर्व्वमायुर्य्यन्ति तथो ह न पुरायुषोऽस्म्माल्लोकात्प्रयन्ति सैषानुपूर्व्वदीक्षा स यत्र हैवं विद्वाꣳसो दीक्षेरँस्तदेव दीक्षेत ॥ ११ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(१) का० श्रौ० सू० १२. २. १८। (२) का० श्रौ० सू० १२. २. १९।

[ द्वादशाहस्याहःक्लृप्तिः ]

श्रद्धाया वै देवाः। दीक्षान्निरमिमतादित्यै प्रायणीयः * सोमाक्रयं विष्णोरातिथ्यमादित्यात्प्रवर्ग्यꣳ स्वधाया ऽउपसदोऽग्नीषोमाभ्यामुपवसथमस्माल्लोकात्प्रायणीयमतिरात्रम् ॥ १ ॥ सँवत्सराच्चतुर्विꣳशमहः। ब्रह्मणोऽभिप्लवङ्क्षत्रात्पृष्ठ्यमग्नेरभिजितमद्भ्यः स्वरसाम्न ऽआदित्याद्विषुवन्तमुक्ताः स्वरसामान † ऽइन्द्राद्विश्वजितमुक्तौ पृष्ठ्याभिप्लवौ ‡ मित्रावरुणाभ्याङ्गोऽआयुषी विश्वेभ्यो देवेभ्यो दशरात्रन्दिग्भ्यो दाशरात्रिकम्पृष्ठ्यꣳ षडहमेभ्यो लोकेभ्यश्छन्दोमान् ॥ २ ॥ सँवत्सराद्दशममहः। प्रजापतेर्महाव्रतꣳ § स्वर्गाल्लोकादुदयनीयमतिरात्रन्तदेतत्सँवत्सरस्य जन्म स यो हैवमेतत्सँवत्सरस्य जन्म वेद हास्माच्छ्रेयाञ्जायते सात्मा भवति सँवत्सरो भवति सँवत्सरो भूत्वा देवानप्येति ॥ ३ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ उक्ताहःक्लृप्त्यर्थवादः ]

यद्वै दीक्षन्ते। अग्नाविष्णू ऽएव देवते यजन्तेऽग्नाविष्णू देवते भवन्त्यग्नाविष्णवोः सायुज्यꣳ सलोक-

* प्रकृष्टमयनमारम्भो यत्रेति व्युत्पत्या प्रायणीयशब्दो द्वादशाहस्य प्रथमदिनवाचकः।

† "यज्ञा यज्ञा" ( ४. ८. १ ) इत्यस्यां योनावुत्पन्नानि चत्वारि स्वरसंज्ञकानि सामानि येषु ते स्वरसामानः। ‡ प्रथमोऽग्निष्टोमः, ततश्चत्वार उक्थ्याः, पुनः षष्ठोऽग्निष्टोमः, एवं विधस्याह्नां षट्कस्य अभिप्लव इति संज्ञा ( तै० सं० सा० ७. ४. ११. १७, ऐ० ब्रा० ४. ३१।

§ महाव्रतं यज्ञस्यान्तिममहः। महानवर्तिष्ट अनेन कर्मणा इति महाव्रतम् ( तै० ब्रा० सा० भा० १. २. ६ )।

ताञ्जयन्ति ॥ १ ॥ अथ यत्प्रायणीयेन यजन्ते । अदिति-मेव देवतां रुयजन्तेऽदितिर्हैंवता भवन्त्यदितेः सायुज्यꣳ सलोकताञ्जयन्ति ॥ २ ॥ अथ यत्क्रयेण चरन्ति । सोम-मेव देवतां रुयजन्ते सोमो देवता भवन्ति सोमस्य सायुज्यꣳ सलोकताञ्जयन्ति ॥ ३ ॥ अथ यदातिथ्येन यजन्ते । विष्णुमेव देवतां रुयजन्ते विष्णुर्हैंवता भवन्ति विष्णोः सायुज्यꣳ सलोकताञ्जयन्ति ॥ ४ ॥ अथ यत्प्र-वर्ग्येण यजन्ते । आदित्यमेव देवतां रुयजन्त ऽआदित्यो देवता भवन्त्यादित्यस्य सायुज्यꣳ सलोकताञ्जयन्ति ॥ ५ ॥ अथ यदुपसद ऽउपयन्ति । एता ऽएव देवता यजन्ते या ऽएता ऽउपसत्स्वेता देवता भवन्त्येतासान्देवता-नाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ ६ ॥ अथ यदग्नी-षोमीयेण पशुना यजन्ते । अग्नीषोमावेव देवते यजन्तेऽ-ग्नीषोमौ देवते भवन्त्यग्नीषोमयोः सायुज्यꣳ सलोकता-ञ्जयन्ति ॥ ७ ॥ अथ यत्प्रायणीयमतिरात्रमुपयन्ति । अहोरात्रे ऽएव देवते यजन्तेऽहोरात्रे देवते भवन्त्य-होरात्रयोः सायुज्यꣳ सलोकताञ्जयन्ति ॥ ८ ॥ अथ यच्चतुर्विꣳशमहरुपयन्ति । सँवत्सरमेव देवतां रुयजन्ते सँव-त्सरो देवता भवन्ति सँवत्सरस्य सायुज्यꣳ सलोकता-ञ्जयन्ति ॥ ९ ॥ अथ यदभिप्लवꣳ षडहमुपयन्ति । अर्द्धमा-साँश्च मासाँश्च देवता यजन्तेऽर्द्धमासाश्च मासाश्च देवता भवन्त्यर्द्धमासानाञ्च मासानाञ्च सायुज्यꣳ सलो-कताञ्जयन्ति ॥ १० ॥ अथ यत्पृष्ठ्यꣳ षडहमुपयन्ति ।

ऋतूनेव देवता यजन्त ऽऋतवो देवता भवन्त्यृतूनाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ ११ ॥ अथ यदभिजितमुपयन्ति । अग्निमेव देवताꣳ रुयजन्तेऽग्निर्देवता भवन्त्यग्नेः सायुज्यꣳ सलोकताञ्जयन्ति ॥ १२ ॥ अथ यत्स्वरसाम्न ऽउपयन्ति । अप ऽएव देवता यजन्त ऽआपो देवता भवन्त्यपाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ १३ ॥ अथ यद्विषुवन्तमुपयन्ति । आदित्यमेव देवताꣳ रुयजन्त ऽआदित्यो देवता भवन्त्यादित्यस्य सायुज्यꣳ सलोकताञ्जयन्त्युक्ताः स्वरसामानः ॥ १४ ॥ अथ यद्विश्वजितमुपयन्ति । इन्द्रमेव देवताꣳ रुयजन्त ऽइन्द्रो देवता भवन्तीन्द्रस्य सायुज्यꣳ सलोकताञ्जयन्त्युक्तौ पृष्ठ्याभिप्लवौ ॥ १५ ॥ अथ यद्गोऽआयुषी ऽउपयन्ति । मित्रावरुणावेव देवते यजन्ते मित्रावरुणौ देवते भवन्ति मित्रावरुणयोः सायुज्यꣳ सलोकताञ्जयन्ति ॥ १६ ॥ अथ यद्दशरात्रमुपयन्ति । विश्वानेव देवान्देवता * यजन्ते विश्वे देवा देवता भवन्ति विश्वेषान्देवानाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ १७ ॥ अथ यन्महाशरात्रिकम्पृष्ठ्यꣳ षडहमुपयन्ति । दिश ऽएव देवता यजन्ते दिशो देवता भवन्ति दिशाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ १८ ॥ अथ यच्छन्दोमानुपयन्ति । इमानेव लोकान्देवता यजन्त ऽइमे लोका देवता भवन्त्येषाँल्लोकानाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ १९ ॥ अथ यद्दशममहरुपयन्ति । सँवत्सरमेव देवताꣳ रुयजन्ते

---

* 'ग' 'ज' पुस्तकयोः 'देवतां' इति पाठ उपलभ्यते ।

सँवत्सरो देवता भवन्ति सँवत्सरस्य सायुज्यꣳ सलोकता-ञ्जयन्ति ॥ २० ॥ अथ यन्महाव्रतमुपयन्ति । प्रजापतिमेव देवतां ꣳयजन्ते प्रजापतिर्द्देवता भवन्ति प्रजापतेः सायु-ज्यꣳ सलोकताञ्जयन्ति ॥ २१ ॥ अथ यदुदयनीयमतिरा-त्रमुपयन्ति । सँवत्सरमेव तदाप्त्वा स्वर्गे लोके प्रति-तिष्ठन्ति तान्न्यदि पृच्छेयुः कामद्य देवतां ꣳयजद्ध्वे का देवता स्थ कस्यान्देवतायां वसथेत्त्यत ऽएवैकतमाम्ब्रूयु-र्ꣳयस्यै तु नेदिष्ठꣳ स्युरेते ह वै सति सद ऽएते हि सतीषु देवतासु सीदन्तो यन्ति सत्रसदो हैवेतरे स यो हैवं विदुषान्दीक्षितानाम्पापकꣳ सत्रे कीर्त्तयेदेतां-ꣳअभ्यस्त्वा देवताꣳअभ्य ऽआवृश्चाम ऽइत्त्येनम्ब्रूयुः स पापी-यान्भवति श्श्रेयाꣳस ऽआत्मना ॥ २२ ॥ स ऽएष सँव-त्सरस्त्रिमहाव्रतः । चतुर्विꣳशे महाव्रतं विषुवति महाव्रत-म्महाव्रत ऽएव महाव्रतन्तꣳ ह स्मैतम्पूर्व्व ऽउपयन्ति त्रिम-हाव्रतन्ते तेजस्विन ऽआसुः सत्त्यवादिनः सꣳशितव्रता ऽअथ य ऽउ हैनमप्प्येतर्हि तथोपेयुर्य्यथामपात्रमुदक ऽआसिक्ते विम्म्रियेदेवꣳ हैव ते विम्म्रियेयुरुपर्य्युपयन्ति तदेषाꣳ सत्त्येन श्श्रमेण तपसा श्श्रद्धया यज्ञेनाहुतिभि-रवरुद्धम्भवति ॥ २३ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



---

१ 'ग' 'ज' पुस्तकयोः 'ते' इति ।

[ द्वादशाहस्य संवत्सरात्मना स्तुतिः ]

पुरुषो वै सँवत्सरः । तस्य पादावेव प्रायणीयोऽति-रात्रः पादाभ्याँ हि प्रयन्ति तयोर्यच्छुक्लन्तदह्नो रूपं यत्कृष्णन्तद्रात्रेर्नखान्येवौषधिवनस्पतीनाँ रूप-मूरू चतुर्विँशमहरुरोऽभिप्लवः पृष्ट्यम्पृष्ठ्यः ॥ १ ॥ अयमेव दक्षिणो बाहुरभिजित् । इम ऽएव दक्षिणे त्रयः प्राणाः स्वरसामानो मूर्द्धा विषुवानिम ऽएवोत्तरे त्रयः प्राणाः स्वरसामानः ॥ २ ॥ अयमेवोत्तरो बाहुर्विश्वजित् । उक्तौ पृष्ठ्याभिप्लवौ यावेवाञ्चौ प्राणौ ते गो-ऽआयुषी ऽअङ्गानि दशरात्रो मुखम्महाव्रतः हस्तावेवोद-यनीयोऽतिरात्रो हस्ताभ्याँ ह्युद्यन्ति तयोर्यच्छुक्लन्त-दह्नो रूपं यत्कृष्णन्तद्रात्रेर्नखान्येव नक्षत्राणाँ रूपः स ऽएष सँवत्सरोऽध्यात्मम्प्रतिष्ठितः स यो हैवमेतः सँवत्सरमध्यात्मम्प्रतिष्ठितं वेद प्रतितिष्ठति प्रजया पशुभिरस्मिँल्लोकेऽमृतत्वेनामुष्मिन् ॥ ३ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



[ संवत्सरसत्रस्याहःक्लृप्तिर्ब्राह्मणद्वयेन ]

समुद्रं वा ऽएते प्रतरन्ति । ये सँवत्सराय दीक्षन्ते तस्य तीर्थमेव प्रायणीयोऽतिरात्रस्तीर्थेन हि प्रस्नान्ति तद्यत्प्रायणीयमतिरात्रमुपयन्ति यथा तीर्थेन समुद्रम्प्रस्नायुस्तादृक्तत् ॥ १ ॥ गाधमेव प्रतिष्ठा चतुर्विंशमहः ।

यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्म्य प्प्रस्न्ना-
न्ति प्प्रस्न्नेयोऽभिप्प्लवः प्प्रस्न्नेयः पृष्ठ्यः ॥ २ ॥ गाधमेव
प्प्रतिष्ठाभिजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो
विश्रम्म्योत्क्रामन्त्यूरुदघ्न ऽएव प्प्रथमः स्वरसामा जानु-
दघ्नो द्वितीयः कुल्फदघ्नस्तृतीयो द्वीपः प्प्रतिष्ठा विषु-
वान्कुल्फदघ्न ऽएव प्प्रथमोऽर्व्वाक्सामा जानुदघ्नो
द्वितीय ऽऊरुदघ्नस्तृतीयः ॥ ३ ॥ गाधमेव प्प्रतिष्ठा
विश्वजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो
विश्रम्म्य प्प्रस्न्नान्ति प्प्रस्न्नेयः पृष्ठ्यः प्प्रस्न्नेयोऽभिप्प्लवः
प्प्रस्न्नेये गोऽआयुषी प्प्रस्न्नेयो दशरात्रः ॥ ४ ॥ गाधमेव
प्प्रतिष्ठामहाव्रतम् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा
यतो विश्रम्म्योत्स्नान्ति तीर्त्थमेवोदयनीयोऽतिरात्रस्ती-
र्त्थेन ह्युत्स्नान्ति तद्यदुदयनीयमतिरात्रमुपयन्ति यथा
तीर्त्थेन समुद्रम्प्रस्न्नाय तीर्त्थेनोत्स्नायुस्तादृक्तत् ॥ ५ ॥
तदाहुः । कति सँवत्सरस्यातिरात्राः कत्यग्निष्टोमाः
कत्युक्क्थ्याः कति षोडशिनः कति षडहा ऽइति द्वावतिरात्रौ
षट्शतमग्निष्टोमा द्वे चत्त्वारिꣳशे शते ऽउक्क्थ्यानामिति
नु य ऽउक्क्थ्यान्त्स्वरसाम्म्न ऽउपयन्ति ॥ ६ ॥ अथ
येऽग्निष्टोमान् । द्वादशशतमग्निष्टोमा द्वे चतुस्त्रिꣳशे
शते ऽउक्क्थ्यानान्द्वादश षोडशिनः षष्टिः षडहा ऽइति
नु सँवत्सरस्याप्तिः ॥ ७ ॥ द्वादश वै मासाः सँवत्सरस्य ।
तेषामेतत्तेज ऽइन्द्रियं यत्पृष्ठानि तद्यन्मासि मासि
पृष्ठान्युपयन्ति मासश ऽएव तत्सँवत्सरस्य तेज ऽआप्नु-

वन्त्यथ कथन्त्रयोदशस्य मासस्य तेज ऽआप्नुवन्तीत्युप-रिष्टाद्विषुवतो विश्वजितꣳ सर्वपृष्ठमग्निष्टोममुपयन्त्ये-वमु त्रयोदशस्य मासस्य तेज ऽआप्नुवन्ति ॥ ८ ॥ एतद्ध स्म वै तद्विद्वानाह । श्वेतकेतुरारुणेयꣳ सँवत्सराय न्त्वा ऽअहन्दीक्षिष्य ऽइति तꣳ ह पितोपेक्ष्योवाच वेत्थ न्त्वायुष्मन्त्सँवत्सरस्य गाधप्रतिष्ठा ऽइति वेदेति होवाचैतद्ध तद्विद्वानुवाच ॥ ९ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



तदाहुꣳ । कस्मादुभयतोज्योतिषोऽभिप्लवा भव-न्त्यन्यतोज्योतिꣳ पृष्ठ्य ऽइतीमे वै लोका ऽअभिप्लवा ऽउभयतोज्योतिषो वा ऽइमे लोका ऽअग्निनेत ऽआदि-त्येनामुत ऽऋतवꣳ पृष्ठ्योऽन्यतोज्योतिषो वा ऽऋतव ऽएष ऽएषाञ्ज्योतिर्य्य ऽएष तपति ॥ १ ॥ देवचक्रे वा ऽएते पृष्ठ्यप्रतिष्ठिते । यजमानस्य पाप्मानन्तृꣳहती परिप्लवेते स यो हैवं विदुषान्दीक्षितानाम्पापकꣳ सत्रे कीर्त्तयत्येते हास्य देवचक्रे शिरश्छिन्तो दशरात्र ऽउद्धिꣳ पृष्ठ्याभिप्लवौ चक्रे ॥ २ ॥ तदाहुꣳ । यत्समे ऽएव चक्रे भवतोऽथैते विषमा स्तोमाꣳ कथमस्यैते समा स्तोमा ऽउपेता भवन्तीति यदेव षडन्यान्यहानि षडन्यानि तेनेति ब्रूयात् ॥ ३ ॥ पृष्ठ्याभिप्लवौ तन्त्रे कुर्वी-तेति ह स्माह पैङ्ग्यꣳ । तयो स्तोत्राणि च शस्त्राणि च सञ्चारयेदिति स यत्सञ्चारयति तस्मादिमे प्राणा

नाना सन्त ऽएकोतयः समानमूतिमनुसञ्चरन्त्यथ यन्न
सञ्चारयेत्प्रमायुको यजमानः स्यादेष ह वै प्प्रमायुको
योऽन्धो वा बधिरो वा ॥ ४ ॥ नवाग्निष्टोमा मासि
सम्पद्यन्ते । नव वै प्प्राणाः प्प्राणानेवैष्ष्वेतद्दधाति तथा
सर्व्वमायुर्य्यन्ति तथो ह न पुरायुषोऽस्म्माल्लोकात्प्रयन्ति
॥५॥ एकविꣳशतिरुक्क्थ्याः । द्वादश वै मासाः सँव्वत्सरस्य
पञ्चर्त्तवस्त्रयो लोकास्तद्विꣳशतिरेष ऽएवैकविꣳशो य
ऽएष तपत्येतामभिसम्पदꣳ स ऽएतया सम्पदा मासि
मासि स्वर्ग्गँल्लोकꣳ रोहति मासशः स्वर्ग्गँल्लोकꣳ समश्नुत
ऽएकविꣳशश्च स्तोमम्बृहतीश्च च्छन्दः ॥ ६ ॥ चतुस्त्रिꣳ-
शदग्निष्टोमा मासि सम्पद्यन्ते । त्रयस्त्रिꣳशद्वै देवाः
प्प्रजापतिश्चतुस्त्रिꣳशः सर्व्वासान्देवतानामाप्प्त्या ऽएक
ऽउक्क्थ्यः षोडशिमानन्नं व्वा ऽउक्क्थ्यो व्वीर्य्यꣳ षोडशी
॥ ७ ॥ एतेन वै देवाः । व्वीर्य्येणान्नेन सर्व्वान्कामानाप्नु-
वन्त्सर्व्वान्कामानाश्नुवत तथो ऽएवैष ऽएतेन व्वीर्य्येणान्नेन
सर्व्वान्कामानाप्नोति सर्व्वान्कामानश्नुते तस्मात्पृष्ठ्याभि-
प्प्लवा ऽउपैवेयात्सँव्वत्सराय दीक्षित ऽएतस्म्मै कामाय
॥ ८ ॥ अथादित्याश्च ह वा ऽअङ्गिरसश्च । उभये
प्प्राजापत्त्या ऽअस्प्पर्द्धन्त व्वयम्पूर्व्वे स्वर्ग्गँल्लोकमेष्ष्यामो
व्वयम्पूर्व्व ऽइति ॥ ९ ॥ त ऽआदित्याः । चतुर्ब्भि स्तोमैश्च-
तुर्ब्भिः पृष्ठैर्ल्लघुभिः सामभिः स्वर्ग्गँल्लोकमब्भ्यप्प्लवन्त
यदब्भ्यप्प्लवन्त तस्मादभिप्प्लवाः ॥ १० ॥ अन्न्वञ्च
ऽइवाङ्गिरसः । सर्व्वैः स्तोमैः सर्व्वैः पृष्ठैर्ग्गुरुभिः सामभिः

स्वर्गँल्लोकमस्पृशन्न्यदुस्पृशँस्तस्मात्पृष्ठ्यः ॥ ११ ॥ अभिप्लवः षडहः । षड्ढ्यहानि भवन्त्यभिप्लवः पञ्चाहः पञ्च ह्यहानि भवन्ति षळ्वेव प्रथममहस्तदुत्तममभिप्लवश्चतुरहश्चत्वारो हि स्तोमा भवन्ति त्रिवृत्पञ्चदशः सप्तदश ऽएकविंशऽइत्यभिप्लवस्त्र्यहस्त्रयावृद्धि ज्योतिर्गौरायुरभिप्लवो द्व्यहो द्वे ह्येव सामनी भवतो बृहद्रथन्तरेऽएवाभिप्लव ऽएकाह ऽएकाहस्यो हि स्तोमैस्तायते चतुर्णामुक्थ्यानान्द्वादश स्तोत्राणि द्वादश शस्त्राण्यतियन्ति स सप्तमोऽग्निष्टोमऽएवमु सप्ताग्निष्टोमाः सम्पद्यन्ते ॥ १२ ॥ प्रोतिर्ह कौशाम्बेयः । कौसुरुबिन्दिरुद्दालकऽआरुणौ ब्रह्मचर्यमुवास तँ हाचार्यः पप्रच्छ कुमार कति ते पिता सँवत्सरस्याहान्यमन्यतेति ॥१३॥* दशेति होवाच । दश वा ऽइति होवाच दशाक्षरा विराड्वैराजो यज्ञः ॥१४॥ कति त्वेवेति । नवेति होवाच नव वा ऽइति होवाच नव वै प्राणाः प्राणैरु यज्ञस्तायते ॥ १५ ॥ कति त्वेवेति । अष्टेति होवाचाष्टौ वा ऽइति होवाचाष्टाक्षरा गायत्री गायत्रो यज्ञः ॥ १६ ॥ कति त्वेवेति । सप्तेति होवाच सप्त वा ऽइति होवाच सप्त च्छन्दाᳪंसि चतुरुत्तराणि च्छन्दोभिरु यज्ञस्तायते ॥ १७ ॥ [ अर्धः प्रपाठकः ६६ ] कति त्वेवेति । षडिति होवाच षड्वा ऽइति होवाच षड्ऋतवः सँवत्सरः सँवत्सरो यज्ञः समानमेतदहर्यत्प्रायणीयोदयनीयौ ॥ १८ ॥ कति त्वेवेति ।

---

* अत्र शतम् ६००० ।

पञ्चेति होवाच पञ्च वा ऽइति होवाच पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पञ्चर्त्तवः सँवत्सरस्य सँवत्सरो यज्ञः समानमेतदुहर्य्यच्चतुर्विंशमहाव्रते ॥ १९ ॥ कति त्वेवेति । चत्वारीति होवाच चत्वारि वा ऽइति होवाच चतुष्पादाः पशवः पशवो यज्ञः समानमेतदुहर्य्यत्पृष्ठ्याभिप्लवौ ॥ २० ॥ कति त्वेवेति । त्रीणीति होवाच त्रीणि वा ऽइति होवाच त्रीणि च्छन्दाꣳसि त्रयो लोकास्त्रिसवनो यज्ञः समानमेतदुहर्य्यदभिजिद्विश्वजितौ ॥ २१ ॥ कति त्वेवेति । द्वे ऽइति होवाच द्वे वा ऽइति होवाच द्विपाद्वै पुरुषः पुरुषो यज्ञः समानमेतदुहर्य्यत्स्वरसामानः ॥ २२ ॥ कति त्वेवेति । एकमिति होवाचाहरेवेति तदेतदुहरहरिति सर्वꣳ सँवत्सरꣳ सैषा सँवत्सरस्योपनिषत्स यो हैवमेताꣳ सँवत्सरस्योपनिषदं वेदा हास्माच्छ्रेयाञ्जायते साऽत्मा भवति सँवत्सरो भवति सँवत्सरो भूत्वा देवानप्प्येति ॥ २३ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ दशरात्रनिरूपणम् ]

स वा ऽएष सँवत्सरो बृहतीमभिसम्पन्नः । द्वावाक्ष्यंतामहन्नाꣳ षडहौ द्वौ पृष्ठ्याभिप्प्लवौ गोऽआयुषी दशरात्रस्तत्षट्त्रिꣳशत्षट्त्रिꣳशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गे लोकेऽयतन्त बृहत्या स्वर्ग्गँल्लोकमाप्नुवँस्तथो ऽएवैष ऽएतद्बृहत्यैव स्वर्गे लोके यतते बृहत्या स्वर्ग्गँल्लोकमाप्नोत्यथ यो बृहत्याङ्कामस्तमेवैतेनैवंविदवरुन्द्धे ॥ १ ॥

षष्ठे चतुर्विंशमहः । दशरात्रस्य वै तत्सप्तमं वा नवमं वाभिप्लवात्पृष्ठ्यो निर्म्मितः पृष्ठ्यादभिजिदभिजितः स्वरसामानः स्वरसामभ्यो विषुवान्विषुवतः स्वरसामानः स्वरसामभ्यो विश्वजिद्विश्वजितः पृष्ठ्यः पृष्ठ्यादभिप्लवोऽभिप्लवाद्गोऽआयुषी गोऽआयुर्भ्यान्दशरात्रः ॥२॥ अथैतदुहराक्ष्र्यंत् । यन्न्महाव्रतम्पञ्चविंशो ह्येतस्य स्तोमो भवति नाक्षराच्छन्दो व्येत्येकस्मान्न द्वाभ्यान्न स्तोत्रियया स्तोमः ॥ ३ ॥ अभिप्लवम्पूर्वम्पुरस्ताद्विषुवत ऽउपयन्ति । पृष्ठ्यमुत्तरम्पुत्रा वा ऽअभिप्लवः पिता पृष्ठ्यस्तस्मात्पूर्ववयसे पुत्राः पितरमुपजीवन्ति पृष्ठ्यमुपरिष्टाद्विषुवतः पूर्वमुपयन्त्यभिप्लवमुत्तरन्तस्मादुत्तरवयसे पुत्रान्पितोपजीवत्युप ह वा ऽएनम्पूर्ववयसे पुत्रा जीवन्त्युपोत्तरवयसे पुत्राञ्जीवति य ऽएवमेतद्वेद ॥ ४ ॥ तदाहुः । यच्चतुर्विंशमहरुपेत्य प्प्रेयात्कथमनागूर्त्ती भवतीति यदेवादः प्प्रायणीयमतिरात्रमुपयन्ति तेनेति ब्ब्रूयात् ॥ ५ ॥ तदाहुः । यद्द्वादश मासाः सँवत्सरस्याथैतदुहरत्येति यद्वैषुवतमवरेषामेताश्परेषाश्मित्यवरेषाञ्चैव परेषाञ्चेति ह ब्ब्रूयादात्मा वै सँवत्सरस्य विषुवानङ्गानि मासा यत्र वा ऽआत्मा तदङ्गानि यत्रो ऽअङ्गानि तदात्मा न वा ऽआत्माङ्गान्यतिरिच्च्यते नात्मानमङ्गान्न्यतिरिच्च्यन्त ऽएवमु हैतदुवरेषाञ्चैव परेषाञ्च भवति ॥ ६ ॥ अथ ह वा ऽएष महासुपर्ण्ण ऽएव यत्सँवत्सरः । तस्य यान्पुरस्ताद्विषुवतः षण्मासानुपयन्ति सोऽन्न्यतरः पक्षोऽथ यान्षडु-

परिष्टात्सोऽन्यतर ऽआत्मा विषुवान्यत्र वा ऽआत्मा
तत्पक्षौ यत्र वा पक्षौ तदात्मा न वा ऽआत्मा पक्षावति-
रिच्यते नात्मानम्पक्षावतिरिच्येते ऽएवमु हैतदुवरेषा-
ञ्चैव परेषाञ्च भवति ॥ ७ ॥ तदाहुः । यत्पुरस्ताद्विषुवत
ऽऊर्द्ध्वान्त्स्तोमान्त्षण्णमासानुपयन्ति षडुपरिष्टादावृत्तान्क-
थमस्यैत ऽऊर्द्ध्वा स्तोमा ऽउपेता भवन्तीति यमेवामुमूर्द्ध्व-
स्तोमन्दशरात्रमुपयन्ति तेनेति ब्रूयाद्देवेभ्यो ह वै महा-
व्रतन्न तस्थे कथमूर्द्ध्वैः स्तोमैर्विषुवन्तमुपागातावृत्तैर्म्मामिति
॥ ८ ॥ ते ह देवा ऽऊचुः । उप तं यज्ञक्रतुञ्जानीत य
ऽऊर्द्ध्वस्तोमो येनेदमाप्नवामेति त ऽएतमूर्द्ध्वस्तोमन्दशरा-
त्रमपश्यन्त्सँवत्सरविधन्तस्य यः पृष्ठ्यः षडहः ऽऋतवः स
ऽइमे लोकाश्छन्दोमाः सँवत्सरो दशममहस्तेनैतदाप्नुवँस्त-
देभ्योऽतिष्ठत तिष्ठते ह वा ऽअस्मै महाव्रतं य ऽएव-
मेतद्वेद ॥ ९ ॥ अथ वा ऽअतोऽह्नामभ्यारोहः । प्रायणी-
येनातिरात्रेणोदयनीयमतिरात्रमभ्यारोहन्ति चतुर्विंशेन
महाव्रतमभिप्लवेन परमभिप्लवम्पृष्ठ्येन परम्पृष्ठ्यमभि-
जिता विश्वजितꣳ स्वरसामभिः परान्त्स्वरसाम्नोऽथैत-
दुहरनभ्यारूढं यद्वैषुवतमभि ह वै श्रेयाꣳसꣳ रोहति
नैनम्पापीयानभ्यारोहति य ऽएवमेतद्वेद ॥१०॥ अथ वा ऽअ
तोऽह्नान्निवाहः । प्रायणीयोऽतिरात्रश्चतुर्विंशायाह्ने निव
हति चतुर्विंशमहरभिप्लवायाभिप्लवः पृष्ठ्याय पृष्ठ्योऽ
भिजितेऽभिजित्स्वरसामभ्यः स्वरसामानो विषुवते विषुवा-
न्त्स्वरसामभ्यः स्वरसामानो विश्वजिते विश्वजित्पृष्ठ्याय

पृष्ठ्योऽभिप्लवायाभिप्लवो गोऽआयुर्भ्यां गोऽआयुषी दशरात्राय दशरात्रो महाव्रताय महाव्रतमुदयनीयायाति-रात्रायोदयनीयोऽतिरात्रः स्वर्ग्याय लोकाय प्रतिष्ठाया ऽअन्नाद्याय ॥ ११ ॥ तानि वा ऽएतानि । यज्ञारण्यानि यज्ञकृन्तत्राणि[1] तानि शतꣳ शतꣳ रथाह्न्यान्यन्तरेण तानि येऽविद्वाꣳसऽउपयन्ति यथारण्यान्यसम्मुग्धाꣳश्चरतोऽशनाया वा पिपासा वा पाप्मानो रक्षाꣳसि [2]संचेरन्नेवꣳ हैवैनानशनाया वा पिपासा वा पाप्मानो रक्षाꣳसि सचन्तेऽथ ये विद्वाꣳसो यथा प्रवाहात्प्रवाहमभयादभयमेवꣳ हैव ते देवतायै देवतामुपसंयन्ति ते स्वस्ति स्वर्गꣳल्लोकꣳ समश्नुवते ॥ १२ ॥ तदाहुः । कति संवत्सरस्याहानि पराञ्चि कत्यर्वाञ्चीति स यानि सकृत्सकृदुपयन्ति तानि पराञ्च्यथ यानि पुनः पुनस्तान्यर्वाञ्च्यर्वाञ्चीति ह त्वेवैनान्युपासीत षडहयोर्ह्यावृत्तिमन्वावर्त्तन्ते[3] ॥ १३ ॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ संवत्सरस्याभिप्लवाद्यात्मना स्तुतिर्ब्राह्मणद्वयेन ]

पुरुषो वै संवत्सरः । तस्य प्राण ऽएव प्रायणीयोऽतिरात्रः प्राणेन हि प्रयन्ति वागेवारम्भणीयमहर्वाचा

(१) 'ग' 'ज' पुस्तकयोः 'यज्ञकृन्तत्राणि' इत्यस्य स्थाने 'यज्ञक्षत्राणि' इति पाठ उपलभ्यते ।

(२) 'सचेरन्नेवꣳ हैवैनानशनाया वा पिपासा वा पाप्मानो रक्षाꣳसि' एतावान् पाठः 'ग' 'ज' पुस्तकयोर्नास्ति ।

(३) 'ग' 'ज' पुस्तकयोः 'न्वर्तते' इति पाठोः दृश्यते ।

ह्यारभन्ते यद्यदारभन्ते ॥ १ ॥ अयमेव दक्षिणो हस्तोऽ-
भिप्लवः षडहः । तस्येदमेव प्रथममहस्तस्येदमेव प्रातः-
सवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनङ्गायत्र्या
ऽआयतने तस्मादियमासाꣳ ह्रसिष्ठा ॥ २ ॥ इदमेव
द्वितीयमहः । तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ
सवनमिदन्तृतीयसवनन्त्रिष्टुभ ऽआयतने तस्मादियमस्यै
वर्षीयसी ॥३॥ इदमेव तृतीयमहः । तस्येदमेव प्रातःसव-
नमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनञ्जगत्या ऽआय-
तने तस्मादियमासां वर्षिष्ठा ॥ ४ ॥ इदमेव चतुर्थमहः ।
तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीय-
सवनं विराज ऽआयतनेऽन्नं वै विराट् तस्मादियमासाम-
न्नादितमा ॥ ५ ॥ इदमेव पञ्चममहः । तस्येदमेव प्रातः-
सवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनम्पङ्क्तेराय-
तने पृथुरिव वै पङ्क्तिस्तस्मादयमासाम्प्रथिष्ठः ॥ ६ ॥
इदमेव षष्ठमहः । तस्येदमेव प्रातःसवनमिदम्माध्य-
न्दिनꣳ सवनमिदन्तृतीयसवनमतिच्छन्दस ऽआयतने
तस्मादयमासां वर्षिष्ठो गायत्रमेतदहर्भवति तस्मादि-
दम्फलकꣳ ह्रसिष्ठꣳ स ऽइतोऽभिप्लवः षडहः स
ऽइतः स ऽइतः स ऽइत ऽआत्मा पृष्ठ्यः ॥ ७ ॥ एतद्ध
स्म वै तद्विद्वानाह पैङ्ग्यः । प्लवन्त ऽइव वा ऽअभि-
प्लवास्तिष्ठतीव पृष्ठ्य ऽइति प्लवत ऽइव ह्ययमङ्गैस्ति-
ष्ठतीवात्मनेति ॥ ८ ॥ शिर ऽएवास्य त्रिवृत् । तस्मा-
त्त्त्रिविधम्भवति त्वगस्थि मस्तिष्कः ॥ ९ ॥ ग्रीवाः

पञ्चदशः । चतुर्दश वा ऽएतासाङ्करूकराणि वीर्य्यम्पञ्च-
दशन्तस्मादेताभिरण्वीभिः सतीभिर्गुरुम्भारꣳ हरति
तस्माद्ग्रीवाः पञ्चदशः ॥ १० ॥ उरः सप्तदशः । अष्टा-
वन्ये जत्रवोऽष्टावन्य ऽउरः सप्तदशन्तस्मादुरः सप्त-
दशः ॥ ११ ॥ उदरमेकविꣳशः । विꣳशतिर्वा ऽअन्तरुदरे
कुन्तापान्युदरमेकविꣳशन्तस्मादुदरमेकविꣳशः ॥ १२ ॥
पार्श्वे त्रिणवः । त्रयोदशान्याः पर्शवस्त्रयोदशान्याः
पार्श्वे त्रिणवे तस्मात्पार्श्वे त्रिणवः ॥ १३ ॥ अनूकन्त्रय-
स्त्रिꣳशः । द्वात्रिꣳशद्वा ऽएतस्य करूकराण्यनूकन्त्रयस्त्रिꣳ-
शन्तस्मादनूकन्त्रयस्त्रिꣳशः ॥ १४ ॥ अयमेव दक्षिणः
कर्णोऽभिजित् । यदिदमक्ष्णः शुक्लꣳ स प्रथमः
स्वरसामा यत्कृष्णꣳ स द्वितीयो यन्मण्डलꣳ स तृतीयो
नासिके विषुवान्यदिदमक्ष्णो मण्डलꣳ स प्रथमोऽर्वा-
क्सामा यत्कृष्णꣳ स द्वितीयो यच्छुक्लꣳ स तृतीयः
॥ १५ ॥ अयमेवोत्तरः कर्णो विश्वजित् । उक्तौ पृष्ठ्या-
भिप्लवौ यावर्वाञ्चौ प्राणौ ते गोऽआयुषी ऽअङ्गानि दश-
रात्रो मुखम्महाव्रतमुदान ऽएवोदयनीयोऽतिरात्र ऽउदानेन
ह्युद्यन्ति स ऽएष संवत्सरोऽध्यात्मम्प्रतिष्ठितः स यो
हैवमेतꣳ संवत्सरमध्यात्मम्प्रतिष्ठितं वेद प्रतितिष्ठति
प्रजया पशुभिरस्मिँल्लोकेऽमृतत्वेनामुष्मिन् ॥ १६ ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



षद्वालाके । इदुन्त्रिवृद्देति सर्वमन्न्योऽन्न्यमभिसम्प-
द्यमानम् ॥ कथꣳस्विद्यज्ञः पुरुषः प्प्रजापतिरन्न्योऽन्न्यन्ना-
तिरिच्च्यन्त ऽएते ॥ १ ॥ षदूर्द्ध्वा स्तोमा ऽअनुयन्ति ।
षज्ञमभ्यावर्त्तꣳ सामभिः कल्प्पमानाः ॥ कथꣳस्वित्ते
पुरुषमाविशन्ति कथम्प्राणैः सयुजो भवन्ति ॥ २ ॥ प्राय-
णीयोऽतिरात्रः । चतुर्विꣳशमहश्चत्त्वारोऽभिप्प्लवाः पृष्ठ्य-
ऽइत्त्येते ॥ कथꣳस्वित्ते पुरुषमाविशन्ति कथम्प्राणैः
सयुजो भवन्ति ॥ ३ ॥ अभिजिता स्वरसामानः । अभि-
क्लृप्ता ऽउभयतो विषुवन्तमुपयन्ति ॥ कथꣳस्वित्ते पुरुष-
माविशन्ति कथम्प्राणैः सयुजो भवन्ति ॥ ४ ॥ त्रिवृ-
त्प्रायाः । सप्तदशाभिक्लृप्तास्त्रयस्त्रिꣳशान्ताश्चतुरुत्तरेण ॥
कथꣳस्वित्ते पुरुषमाविशन्ति कथम्प्राणैः सयुजो भव-
न्तीति ॥ ५ ॥ शिरस्त्रिवृत् । पञ्चदशोऽस्य ग्रीवा ऽउर
ऽआहुः सप्तदशाभिक्क्लृप्तम् ॥ एकविꣳशमुदरङ्कल्पयन्ति
पार्श्वे पर्शूस्त्रिणवेनाभिक्क्लृप्ते ॥ ६ ॥ अभिप्प्लवा ऽउभ-
यतोऽस्य बाहू । पृष्ठम्पृष्ठ्य ऽइति धीरा वदन्ति ॥ अनू-
कमस्य चतुरुत्तरेण सँवत्सरे ब्ब्राह्मणाः कल्पयन्ति ॥ ७ ॥
कर्णावस्याभिजिद्विश्वजिच्च । अक्ष्याबाहुः स्वरसामाभि-
क्लृप्ते ॥ नस्यम्प्राणं विषुवन्तमाहुर्ग्गोऽआयुषी प्प्राणावेता-
ववाञ्चौ ॥ ८ ॥ अङ्गान्न्यस्य दशरात्रमाहुः । मुखम्महा-
व्रतꣳ सँवत्सरे ब्ब्राह्मणाः कल्पयन्ति ॥ सर्वस्तोमꣳ सर्व-
सामानमेतꣳ सँवत्सरमद्ध्यात्मम्प्रविष्टम् ॥ समन्धीर

ऽआत्मना कल्पयित्वा ब्रध्नस्यास्ते विष्टपेऽजात-
शोकः ॥ ९ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



पुरुषो वै सँवत्सरः । पुरुष ऽइत्येकः सँवत्सर ऽइत्ये-
कमत्र तत्समन्द्वे वै सँवत्सरस्याहोरात्रे द्वाविमौ पुरुषे प्प्राणा-
वत्र तत्समन्त्रय ऽऋतवः सँवत्सरस्य त्रय ऽइमे पुरुषे
प्प्राणा ऽअत्र तत्समञ्चतुरक्षरो वै सँवत्सरश्चतुरक्षरोऽयं
य्यजमानोऽत्र तत्समम्पञ्चऽर्त्तवः सँवत्सरस्य पञ्चेमे पुरुषे
प्प्राणा ऽअत्र तत्समः षडृतवः सँवत्सरस्य षडिमे पुरुषे
प्प्राणा ऽअत्र तत्समः सप्तऽर्त्तवः सँवत्सरस्य सप्तेमे
पुरुषे प्प्राणा ऽअत्र तत्समम् ॥ १ ॥ द्वादश वै मासाः
सँवत्सरस्य । द्वादशेमे पुरुषे प्प्राणा ऽअत्र तत्समन्त्रयोदश
वै मासाः सँवत्सरस्य त्रयोदशेमे पुरुषे प्प्राणा नाभिस्त्र-
योदश्यत्र तत्समञ्चतुर्विꣳशतिर्वै सँवत्सरस्यार्द्धमासा-
श्चतुर्विꣳशोऽयम्पुरुषो विꣳशत्यङ्गुलिश्चतुरङ्गोऽत्र तत्समः
षड्विꣳशतिर्वै सँवत्सरस्यार्द्धमासाः षड्विꣳशोऽयम्पुरुषः
प्प्रतिष्ठे षड्विꣳश्यावत्र तत्समम् ॥ २ ॥ त्रीणि च
वै शतानि षष्टिश्च । सँवत्सरस्य रात्रयस्त्रीणि च
शतानि षष्टिश्च पुरुषस्यास्थीन्यत्र तत्समन्त्रीणि च वै
शतानि षष्टिश्च सँवत्सरस्याहानि त्रीणि च शतानि
षष्टिश्च पुरुषस्य मज्जानोऽत्र तत्समम् ॥ ३ ॥ सप्त च

वै शतानि विꣳशतिश्च । सँवत्सरस्याहोरात्राणि सप्त च शतानि विꣳशतिश्च पुरुषस्यास्थीनि च मज्जानश्चात्र तत्समम् ॥ ४ ॥ दश च वै सहस्राण्यष्टौ च शतानि । सँवत्सरस्य मुहूर्त्ता यावन्तो मुहूर्त्तास्तावन्ति पञ्चदश कृत्वः क्षिप्राणि यावन्ति क्षिप्राणि तावन्ति पञ्चदश कृत्व ऽएतर्हीणि यावन्त्येतर्हीणि तावन्ति पञ्चदश कृत्व ऽइदानीनि यावन्तीदानीनि तावन्तः पञ्चदश कृत्वः प्राणा यावन्तः प्राणास्तावन्तोऽना यावन्तोऽनास्तावन्तो निमेषा यावन्तो निमेषास्तावन्तो लोमगर्त्ता यावन्तो लोमगर्त्तास्तावन्ति स्वेदायनानि यावन्ति स्वेदायनानि तावन्त ऽएते स्तोका वर्षन्ति ॥ ५ ॥ एतद्ध स्म वै तद्विद्वानाह वार्क्कलिः । सार्वभौमम्मेघं वर्षन्तं वेदाहमस्य वर्षस्य स्तोकानिति ॥ ६ ॥ तदेष श्लोकोऽभ्युक्तः । प्रमादन्यत्र परिवर्त्तमानस्तिष्ठन्नासीनो यदि वा स्वपन्नपि ॥ अहोरात्राभ्याम्पुरुषः समेन कति कृत्वः प्राणिति चाप चानितीति ॥ ७ ॥ तदेष श्लोकः प्रत्युक्तः । शतꣳ शतानि पुरुषः समेनाष्टौ शता यन्मितन्तद्वदन्ति ॥ अहोरात्राभ्याम्पुरुषः समेन तावत्कृत्वः प्राणिति चाप चानितीति ॥ ८ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ संवत्सरादि दीक्षापक्षः ]

देवा ह वै सहस्रसँवत्सराय दिदीक्षिरे । तेषाम्पञ्च शतानि सँवत्सराणाम्पर्युपेतान्यासुरथेदꣳ सर्वमेव शश्राम

ये स्तोमा यानि पृष्ठानि यानि च्छन्दाꣳसि ॥ १ ॥ ततो देवाः । एतद्यज्ञस्यायातयामापश्यꣳस्तेनायातयाम्ना या वेदे व्युष्टिरासीत्तां व्याश्नुवतायातयामा वा ऽअस्य वेदा ऽअयातयाम्न्या हास्य त्रय्या विद्ययार्त्विज्यङ्कृतम्भवति य ऽएवमेतद्वेद ॥ २ ॥ तदेतद्यज्ञस्यायातयाम । ओ श्राव-यास्तु श्रौषड्यज ये यजामहे वौषडिति तासां वा ऽएता-साम्पञ्चानां व्याहृतीनाꣳ सप्तदशाक्षराण्यो श्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह ऽइति पञ्चाक्षरम् ॥ ३ ॥ द्व्यक्षरो वषट्कारः । स ऽएष सप्तदशः प्रजापतिरधिदेवतञ्चाध्यात्मञ्च प्रति-ष्ठितः स यो हैवमेतꣳ सप्तदशम्प्रजापतिमधिदेवतञ्चा-ध्यात्मञ्च प्रतिष्ठितं वेद प्रतितिष्ठति प्रजया पशु-भिरस्मिँल्लोकेऽमृतत्वेनामुष्मिन् ॥ ४ ॥ ते ह देवा ऽऊचुः । उप तं यज्ञक्रतुञ्जानीत यः सहस्रसँवत्सरस्य प्रतिमा को हि तस्मै मनुष्यो यः सहस्रसँवत्सरेण समाप्नुयादिति ॥ ५ ॥ ते विश्वजितमेव सर्वपृष्ठम् । पृष्ठ्यस्य षडहस्याञ्जःसवमपश्यꣳस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाꣳसि ॥ ६ ॥ पृष्ठ्यमेव षडहम् । द्वादशाहस्याञ्जःसवमपश्यꣳस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाꣳसि ॥ ७ ॥ द्वाद-शाहमेव । सँवत्सरस्याञ्जःसवमपश्यꣳस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाꣳसि ॥ ८ ॥ सँवत्सरमेव । तापश्चितस्याञ्जःसवमपश्यꣳस्ते हि स्तोमा भवन्ति तानि

पृष्ठानि तानि च्छन्दाᳫंसि ॥ ९ ॥ तापश्चितमेव । सहस्र-सँवत्सरस्याञ्जःसवमपद्यᳫँस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳫंसि ॥ १० ॥ स वै सँवत्सरन्दीक्षाभिरेति । सँवत्सरमुपसद्भिः सँवत्सरᳫं सुत्याभिः ॥ ११ ॥ स यत्सँवत्सरन्दीक्षाभिरेति । पूर्वार्द्धमेव तेन सहस्रसँवत्सरस्यावरुन्द्धेऽथ यत्सँवत्सरमुपसद्भिर्म्मध्यमेव तेन सहस्रसँवत्सरस्यावरुन्द्धेऽथ यत्सँवत्सरᳫं सुत्याभिरुत्तमार्द्धमेव तेन सहस्रसँवत्सरस्यावरुन्द्धे ॥ १२ ॥ स वै द्वादश मासान्दीक्षाभिरेति । द्वादशोपसद्भिर्द्वादश सुत्याभिस्तत्षट्त्रिᳫंशत्षट्त्रिᳫंशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्ग्गे लोकेऽयतन्त बृहत्या स्वर्ग्गँल्लोकमाप्नुवँस्तथो ऽएवैष ऽएतद्बृहत्यैव स्वर्ग्गे लोके यतते बृहत्या स्वर्ग्गँल्लोकमाप्नोत्यथ यो बृहत्याङ्कामस्तमेवैतेनैवंविदवरुन्द्धे ॥ १३ ॥ तद्वा ऽएतत् । त्रयᳫं सह क्रियतेऽग्निरर्क्कर्यम्महदुक्थᳫं स यत्सँवत्सरन्दीक्षाभिरेति सँवत्सरमुपसद्भिस्तेनास्याग्न्यर्क्कावाप्तौ भवतोऽथ यत्सँवत्सरᳫं सुत्याभिरेति तेनो ऽएवास्य महदुक्थमाप्तम्भवति स वा ऽएष ऽएव सहस्रसँवत्सरस्य प्प्रतिमा यत्तापश्चित ऽएष प्प्रजानाम्प्रजात्यै यत्तापश्चितः ॥ १४ ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या १३२ ॥



[ ज्योतिष्टोमे उद्गात्राद्यन्वारम्भः ]

पुरुषꣳ ह नारायणम्प्रजापतिरुवाच । यजस्व यजस्वेति स होवाच यजस्व यजस्वेति वाव त्वम्मामात्थ त्रिरयक्षि वसवः प्रातःसवनेनागू रुद्रा माध्यन्दिनेन सवनेनादित्यास्तृतीयसवनेनाथ मम यज्ञवास्त्वेव यज्ञवास्तावेवाहुमास ऽइति ॥ १ ॥ स होवाच । यजस्वैवाहं वै ते तद्वक्ष्यामि यथा त ऽउक्थानि मणिरिव सूत्र ऽओतानि भविष्यन्ति सूत्रमिव वा मणाविति ॥ २ ॥ तस्मा ऽउ हैतदुवाच । प्रातःसवने बहिष्पवमान ऽउद्गातारमन्वारभासै श्येनोऽसि गायत्रच्छन्दा ऽअनु त्वारभे स्वस्ति मा सम्पारयेति ॥ ३ ॥ अथ माध्यन्दिने पवमाने । उद्गातारमन्न्वारभासै सुपर्णोऽसि त्रिष्टुप्छन्दा ऽअनु त्वारभे स्वस्ति मा सम्पारयेति ॥ ४ ॥ अथ तृतीयसवन ऽआर्भवे पवमाने । उद्गातारमन्न्वारभासा ऽऋभुरसि जगच्छन्दा ऽअनु त्वारभे स्वस्ति मा सम्पारयेति ॥ ५ ॥ अथ सꣳस्थितेषु सꣳस्थितेषु सवनेषु जपेत् । मयि भर्गो मयि महो मयि यशो मयि सर्वमिति ॥ ६ ॥ अयं वै लोको भर्गः । अन्तरिक्षलोको महो द्यौर्यशो येऽन्न्ये लोकास्तत्सर्वम् ॥७॥ अग्निर्वै भर्गः । वायुर्म्मह ऽआदित्यो यशो येऽन्न्ये देवास्तत्सर्वम् ॥ ८ ॥ ऋग्वेदो वै भर्गः । यजुर्वेदो महः सामवेदो यशो येऽन्न्ये वेदास्तत्सर्वम् ॥ ९ ॥ वाग्वै भर्गः । प्राणो महश्चक्षुर्यशो येऽन्न्ये प्राणास्तत्सर्वम् ॥ १० ॥ तद्विद्यात् । सर्वाँल्लोकानारभन्नधिषि सर्वेषु

लोकेष्ष्वात्मानमधाᳬं सर्वान्देवानात्मन्नधिषि सर्वेषु देवेष्ष्वात्मानमधाᳫं सर्वान्वेदानात्मन्नधिषि सर्वेषु वेदेष्ष्वात्मानमधाᳬं सर्वान्प्राणानात्मन्नधिषि सर्वेषु प्प्राणेष्ष्वात्मानमधामित्यक्षिता वै लोका ऽअक्षिता देवा ऽअक्षिता वेदा ऽअक्षिताः प्प्राणा ऽअक्षितᳬं सर्वमक्षिताद्ध वा ऽअक्षितमुपसङ्क्रामत्यप पुनर्म्मृत्युञ्जयति सर्वमायुरेति य ऽएवमेतद्वेद ॥ ११ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ सोमादीनां नित्यत्वम् ]

सावित्रᳬं ह स्मैतम्पूर्वं पशुमालभन्ते । अथैतर्हि प्प्राजापत्यं रुषो ह्येव सविता स प्प्रजापतिरिति वदन्तस्तस्मात्सव्युप्प्याग्नीस्तेन यजेरन्गृहपतेरेवाग्निषु यऽयेदस्राघन्न्या पत्नीः संख्याजयन्ति तस्यान्नोऽप्यसदिति ते ततो यदानिकामन्दीक्षन्ते ॥ १ ॥ तदु वा ऽआहुः । नानाधिष्ण्या ऽएव स्युर्य्यदि दीक्षितस्योपतपेत्याश्वतोऽग्निहोत्रंजुहुयसेत्स यद्यगदो भवति सᳬंसृज्यैनम्पुनरुपह्वयन्ते यद्यु म्रियते स्वैरेव तमग्निभिर्दहन्त्यशवाग्निभिरितरे यजमाना ऽआसत ऽइति तदुहैवाहिताग्नेः कर्म्म समानधिष्ण्यास्त्वेव भवन्ति तस्य तदेव ब्राह्मणं यत्पुरश्चरणे ॥ २ ॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषामग्निहोत्रमनन्तरितम्भवतीति व्रतेनेति ब्रूयात् ॥ ३ ॥

तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषा-म्पौर्णमासं हविरनन्तरितम्भवतीत्याज्येन च पुरोडाशेन चेति ब्रूयात् ॥ ४ ॥ तदाहुः यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषाम्पितृयज्ञोऽनन्तरितो भवतीत्यौपासनै-रिति ब्रूयात् ॥५॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषामामावास्यं हविरनन्तरितम्भवतीति दध्ना च पुरोडाशेन चेति ब्रूयात् ॥ ६ ॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषामाग्रयणेष्टि-रनन्तरिता भवतीति सौम्येन चरुणेति ब्रूयात् ॥ ७ ॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषा-ञ्चातुर्मास्यान्यनन्तरितानि भवन्तीति पयस्ययेति ब्रूयात् ॥ ८ ॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषाम्पशुबन्धोऽनन्तरितो भवतीति पशुना च पुरो-डाशेन चेति ब्रूयात् ॥ ९ ॥ तदाहुः । यत्सँवत्सराय सँव-त्सरसदो दीक्षन्ते कथमेषाᳪं सोमोऽनन्तरितो भवतीति सवनैरिति ब्रूयात् ॥ १० ॥ ते वा ऽएवमेते यज्ञक्रतवः । सँवत्सरमपियन्ति स यो हैवमेतां स्यज्ञक्रतूनाᳪं सँवत्सरेऽ-पीतिं वेदाप्यस्य स्वर्गे लोके भवति ॥ ११ ॥ सँवत्सरस्य समता वेदितव्या । एकम्पुरस्ताद्विषुवतोऽतिरात्रमुपयन्त्ये-कमुपरिष्टात्त्रयः पञ्चाशतम्पुरस्ताद्विषुवतोऽग्निष्टोमानुप-यन्ति त्रयः पञ्चाशतमुपरिष्टाद्विᳪंशतिशतम्पुरस्ताद्विषुवत ऽउक्थ्यान्यहान्युपयन्ति विᳪंशतिशतमुपरिष्टादिति नु ष ऽउक्थ्यान्त्स्वरसाम्न ऽउपयन्ति ॥ १२ ॥ अथ

येऽग्निष्टोमान् । षट्पञ्चाशतम्पुरस्ताद्विषुवतोऽग्निष्टोमा-
नुपयन्ति षट्पञ्चाशतमुपरिष्टात्सप्तदशाहः शतम्पुरस्ता-
द्विषुवत ऽउक्थ्यान्यहान्युपयन्ति सप्तदशानुपरिष्टात्षट्
पुरस्ताद्विषुवतः षोडशिन ऽउपयन्ति षडुपरिष्टात्त्रिꣳशत-
म्पुरस्ताद्विषुवतः षडहानुपयन्ति त्रिꣳशतमुपरिष्टादेषा
ह्यस्य समता समेन ह वा ऽअस्याꣳसंवृद्धेनान्न्यूनेनान-
तिरिक्तेनार्थनेनेतम्भवति य ऽएवमेतद्वेद ॥ १३ ॥

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ अग्निहोत्रप्रायश्चित्तं ब्राह्मणद्वयेन ]

दीर्घसत्त्रꣳ ह वा ऽएत ऽउपयन्ति । येऽग्निहोत्र-
ञ्जुह्वत्येतद्वै जरामर्य्यꣳ सत्त्रं यदग्निहोत्रञ्जरया वा ह्येवा-
स्मान्मुच्यन्ते मृत्युना वा ॥ १ ॥ तदाहुः । यदेतस्य
दीर्घसत्त्रिणोऽग्निहोत्रञ्जुह्वतोऽन्तरेणाग्नी शुक्लं वा विया-
यात्सं वा चरेयुः किन्तत्र कर्म्म का प्रायश्चित्तिरिति
कुर्वीत हैव निष्कृतिमपीष्ट्या यजेत तदु तन्नाद्रियेतेमान्वा
ऽएष लोकाननुवितनुते योऽग्नी ऽआधत्ते ॥ २ ॥ तस्या-
यमेव लोको गार्हपत्यः । अन्तरिक्षलोकोऽन्वाहार्यपच-
नोऽसौ लोक ऽआहवनीयः कामन्वा ऽएषु लोकेषु वया-
ꣳसि युक्तश्चायुक्तश्च सञ्चरन्ति स यदि हास्याप्यन्तरेण
श्वामोऽग्नीन्वियायान्नैव मे का चनार्तिरस्ति न रिष्टिरिति

हैव विद्यात् ॥ ३ ॥ त्रयो ह त्वाव पशवोऽमेध्याः । दुर्वराह ऽऐडकः श्वा तेषां यद्यधिश्रितेऽग्निहोत्रेऽन्तरेण कश्चि-त्सञ्चरेत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति तद्धैके गार्ह-पत्याद्भस्मोपहृत्याहवनीयान्निवपन्तो यन्ती'दं विष्णुर्वि-चक्रम, ऽइत्येतयर्चा यज्ञो वै विष्णुस्तद्यज्ञेनैव यज्ञमनु-सन्तन्मो भस्मनास्य पदमपिवपाम ऽइति वदन्तस्तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयादुासान्न्वा ऽअयं यज-मानस्यावाप्प्सीरिक्षिप्प्रे परमासानावप्प्स्यते ज्येष्ठगृह्यः रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ ४ ॥ इत्थमेव कुर्य्यात् । उदस्थालीं वैवोदकमण्डलुं वादाय गार्हपत्यादुग्र ऽआह-वनीयान्निनयन्नियादिदं विष्णुर्विचक्रम ऽइत्येत यैवर्चा यज्ञो वै विष्णुस्तद्यज्ञेनैव यज्ञमनुसन्तनोति यद्वै यज्ञस्य रिष्टं यदशान्तमापो वै तस्य सर्वस्य शान्तिरद्भिरेवैन-त्तच्छान्त्या शमयत्येतदेव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याग्निहोत्रन्दोह्यमानꣳ स्कन्देत्किन्तत्र कर्म्म का प्प्राय-श्चित्तिरिति स्कन्नप्प्रायश्चित्तेनाभिमृश्याद्भिरुपनिनीय परि-शिष्टेन जुहुयाद्यद्यु नीची स्थाली स्याद्यदि वा भिद्येत स्कन्नप्प्रायश्चित्तेनैवाभिमृश्याद्भिरुपनिनीय यदन्न्यद्विन्दे-त्तेन जुहुयात् ॥ ६ ॥* अथ यत्र स्कन्नꣳ स्यात् । तदभि-मृशेदुस्कन्नधित प्प्राजनीति यदा वै स्कन्दत्यथ धीयते यदा धीयतेऽथ प्प्रजायते योनिर्वा ऽइयः रेतः पयस्तद-स्यां योनौ रेतो दधात्यनुष्ठ्या हास्य रेतः सिक्तम्प्रजायते

(१) शु॰ य॰ सं॰ ५. १५ । ऋ॰ सं॰ १. २. ७ । का॰ श्रौ॰ सू॰ २५. ४. १८ ।
* अत्र शतम् ६१०० ।

य ऽएवमेतद्वेदामुतो वै दिवो वर्षतीहौषधयो वनस्पतयः प्रजायन्ते पुरुषाद्रेत स्कन्दति पशुभ्यस्तत ऽइदꣳ सर्वं प्रजायते तद्विद्याद्भूयसी मे प्रजातिरभूद्बहुः प्रजया पशुभिर्भविष्यामि श्रेयान्भविष्यामीति ॥ ७ ॥ अथ यत्रावभिन्नꣳ स्यात् । तदुदस्थालीं वैवोदकमण्डलुं वा निनयेद्यद्वै यज्ञस्य रिष्टं यदशान्तमापो वै तस्य सर्वस्य शान्तिरद्भिरेवैनत्तच्छान्त्या शमयति भूर्भुवः स्वरित्येताभि-र्व्याहृतिभिरेता वै व्याहृतयः सर्वप्रायश्चित्तीस्तदनेन सर्वेण प्रायश्चित्तिं कुरुते तानि कपालानि सञ्चित्य यत्र भस्मोद्धृतꣳ स्यात्तन्निवपेदेतदेव तत्र कर्म्म ॥ ८ ॥ तदाहुः । यस्याग्निहोत्री दोह्यमानोपविशेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति ताꣳ हैके यजुषोत्थापयन्त्युदस्था-द्देव्यदितिरितीयं वा ऽअदितिरिमामेवास्मा ऽएतदुत्थाप-याम ऽइति वदन्त ऽआयुर्यज्ञपतावधादित्यायुरेवास्मिँस्त-द्दध्म ऽइति वदन्त ऽइन्द्राय कृण्वती भागमितीन्द्रियमे-वास्मिँस्तद्दध्म ऽइति वदन्तो मित्राय वरुणाय चेति प्राणोदानौ वै मित्रावरुणौ प्राणोदानावेवास्मिँस्तद्दध्म ऽइति वदन्तस्तान्तस्यामाहुर्यान्ब्राह्मणाय दद्याद्यमनभ्याग-मिष्यन्मन्येतार्त्तिं वा ऽएषा पाप्मानं यजमानस्य प्रतिदृश्योपाविक्षदार्त्तिमेवास्मिँस्तत्पाप्मानम्प्रतिमुञ्चाम ऽइति वदन्तः ॥ ९ ॥ तदुहोवाच याज्ञवल्क्यः । अश्र-द्दधानेभ्यो हैभ्यो गौरपक्रामत्यार्त्यों वा ऽआहुतिं

---

(१) का० श्रौ० सू० २५. १. १३ ।

विद्यन्तीत्यमेव कुर्य्याद्दण्डेनैवैनां विपिष्योत्थापयेदिति यथैवादो धावयतोऽश्वो वाश्वतरो वा गदायेत बलीवर्दो वा युक्तस्तेन दण्डप्राजितेन तोत्रप्राजितेन यमध्वानं समीप्सति तं समश्नुत एवमेवैतया दण्डप्राजितया तोत्रप्राजितया यं स्वर्गं लोकं समीप्सति तं समश्नुते ॥ १० ॥ अथ होवाचारुणिः । वौर्वा एतस्याग्निहोत्रस्याग्निहोत्र्ययमेव वत्सो योऽयमुपवात इयमेवाग्निहोत्रस्थाली न वा एवं विदुषोऽग्निहोत्री नश्यति क्व ह्यसौ नश्येन्नैवं विदुषोऽग्निहोत्रीवत्सो नश्यति क्व ह्येष नश्येन्नैवं विदुषोऽग्निहोत्रस्थाली भिद्यते क्व हीयम्भिद्येत दिव्यो वै पर्ज्जन्यो वर्षति तद्वियाच्छ्रेमाणस्मे महिमानमधारयमाणोपाविक्षच्छ्रेयान्भविष्यामीति तामास्यन्न्येव कुर्वीतास्यन्न्येव तच्छ्रियन्धत्त इति ह स्माहारुणिरेतदेव तत्र कर्म्म ॥ ११ ॥ तदाहुः । यस्याग्निहोत्री दोह्यमाना वाश्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति स्तम्बमाच्छिद्य ग्रासयेदेतदेव तत्र कर्म्म ॥ १२ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

तदाहुः । यस्याग्निहोत्री लोहितन्दुहीत किन्तत्र कर्म्म का प्रायश्चित्तिरिति त्र्युरुकामतेत्युक्त्वा प्रेक्षणक्षत्वान्वाहार्य्यपचनम्परिश्रयितवै ब्रूयात्तस्मिन्नेनच्छ्रपयि-

(१) का० श्रौ० सू० २५. १. १८ । (२) का० श्रौ० सू० २५. २. २ ।

त्वा तस्मिँस्तूष्णीञ्जुहुयादनिरुक्तो वै प्रजापतिः प्राजापत्यमग्निहोत्रँ सर्वं वा ऽअनिरुक्तन्तदनेन सर्वेण प्रायश्चित्तिङ्कुरुते तान्तस्यामाहुत्यां ब्राह्मणाय दद्यादथ मन्यस्थार्त्तिमेष्यन्मन्येतार्त्तिं वा ऽएषा पाप्मानं यजमानस्य प्रतिदृश्य दुहे या लोहितन्दुह ऽआर्त्तिमेवास्मिँस्तत्पाप्मानम्प्रतिमुञ्चत्यथ यदन्यद्विन्देत्तेन जुहुयादनार्त्तेनैव तदार्त्तं यज्ञस्य निष्करोत्येतदेव तत्र कर्म्म ॥ १ ॥ तदाहुः । यस्याग्निहोत्रन्दोह्यमानममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्धैके होतव्यम्मन्यन्ते प्रयतमेतन्नैतस्याहोमोऽवकल्पते न वै देवाः कस्माच्चन बीभत्सन्ते बीभत्सन्ता३ऽइ तु देवा ऽइत्थमेव कुर्याद्गार्हपत्यादुष्णम्भस्म निरुह्य तस्मिन्नेनदुष्णे भस्मँस्तूष्णीन्निनयेदद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ २ ॥ तदाहुः । यस्याग्निहोत्रन्दोहितममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति स ऽएवैतऽङ्गारा निरूढा येष्ववधिश्रयिष्यन्भवति तान्प्रत्युह्य तस्मिन्नेनदुष्णे भस्मँस्तूष्णीन्निनयेदद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ३ ॥ तदाहुः । यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति स ऽएवैतेऽङ्गारा निरूढा येष्ववधिश्रितम्भवति तेष्वेवेनत्तूष्णीञ्जुहुयाद्धुतमहुतं यद्दहेत्तत्तेषु जुहोति तेन हुतं यद्देनाँस्तेनैवानुगम-

(१) "०दनिरुक्तमनिरुक्तो" इति 'ग' 'ज' पुस्तकयोः ।

यति तेनाहुतमद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ४ ॥ तदाहुः । यदधिश्रितेऽग्निहोत्रे यजमानो म्रियेत किन्तत्र कर्म्म का प्रायश्चित्तिरिति तदेवैनदभिपर्य्याधाय विष्यन्दयेदुथो खल्वाहुरेतावती सर्वस्य हविर्यज्ञस्य प्रायश्चित्तिरित्येतदेव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याग्निहोत्रꣳ स्रुच्युन्नीतꣳ स्कन्देत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति स्कन्नप्रायश्चित्तेनाभिमृश्याद्भिरुपनिनीय परिशिष्टेन जुहुयाद्यद्यु नीची स्रुक् स्याद्यदि वा भिद्येत स्कन्नप्रायश्चित्तेनैवाभिमृश्याद्भिरुपनिनीय यत्स्थाल्याम्परिशिष्टꣳ स्यात्तेन जुहुयात् ॥ ६ ॥ तद्धैके । प्रतिपरेत्य यत्स्थाल्याम्परिशिष्टम्भवति तेन जुह्वति तदु तथा न कुर्य्यात्स्वर्ग्यं वा ऽएतद्यदग्निहोत्रं य्यो हैनन्तत्र ब्रूयात्प्रति न्वा ऽअयꣳ स्वर्गाल्लोकादवारुक्षन्नास्येदꣳ स्वर्ग्यमिव भविष्यतीतीश्वरो ह तथैव स्यात् ॥ ७ ॥ इत्थमेव कुर्य्यात् । तदेवोपविशेद्यत्स्थाल्याम्परिशिष्टꣳ स्यात्तदस्मा ऽउन्नीयाहरेयुस्तद्धैक ऽउपवल्हन्ते हुतोच्छिष्टं वा ऽएतद्यातयाम वा ऽएतन्नैतस्य होतव्यमिति तदु तन्नाद्रियेत यदा वा ऽएतदुयातयामाथैनद्धविरातञ्चनङ्कुर्वते तस्माद्यत्स्थाल्याम्परिशिष्टꣳ स्यात्तदस्मा ऽउन्नीयाहरेयुर्य्यद्यु तत्र न स्याद्यदन्न्यद्विन्देत्तदग्नावधिश्रित्यावज्योत्यापः प्रत्यानीयोद्वास्य तदद्दो हैवोन्नेष्यामीत्युक्तम्भवत्यथात्र यथोन्नीतमेवास्मा ऽउन्नीयाहरेयुस्तेन कामञ्जुहुयादेतदेव तत्र कर्म्म ॥ ८ ॥ तदाहुः ।

यस्याग्निहोत्रꣳ स्रुच्च्युन्नीतममेध्यमापद्येत किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति तद्धैके होतव्यम्मन्न्यन्ते प्प्रयतमेतन्नैतस्याहोमोऽवकल्प्पते न वै देवाः कस्म्माच्चन बीभत्सन्त ऽइति तद्धैक ऽउत्सिच्च्य च्छर्दयन्ति तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्ब्रूयात्परासिञ्चत न्न्वा ऽअयमग्निहोत्रं क्षिप्प्रेऽयं यजमानः परासेक्ष्यत ऽइतीश्वरो ह तथैव स्यादित्थमेव कुर्य्यादाहवनीये समिधमब्भ्याधायाहवनीयादुष्णम्भस्म्म निरुह्य तस्म्मिन्नेनदुष्णे भस्म्मँस्तूष्णीन्निनेयदद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्न्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ९ ॥ तदाहुः । यस्याग्निहोत्रꣳ स्रुच्च्युन्नीतमुपरिष्टादववर्षेत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति तद्विद्यादुपरिष्टान्न्मा शुक्रमागन्नुप मान्देवाः प्प्राभूवञ्छ्रेयान्भविष्यामीति तेन कामञ्जुहुयादेतदेव तत्र कर्म्म ॥ १० ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ गार्हपत्याद्यनुगमने प्रायश्चित्तम् ]

तदाहुः । यत्पूर्वस्यामाहुत्याꣳ हुतायामथाग्निरनुगच्छेत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति यम्प्रतिवेशः शकलं विन्देत्तमब्भ्यस्याभिजुहुयाद्दारौ दारावग्निरिति वदन्दारौ दारौ ह्येवाग्निरथ यद्यु ऽअस्य हृदयं व्येव लिखेद्धिरण्ण्यमभिजुहुयादग्नेर्वा ऽएतद्रेतो यद्धिरण्ण्यं यु ऽउ वै पुत्रः स पिता यः पिता स पुत्रस्तस्म्माद्धिरण्ण्यमभिजुहुयादेतदेव तत्र कर्म्म ॥ १ ॥ तदाहुः । यस्याहवनीय ऽउद्धृतः

पुराग्निहोत्रादनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति गार्हपत्यादेवैनम्प्राञ्चमुद्धृत्योपसमाधायाग्निहोत्रञ्जुहुयात्स यद्यपि शतमेव कृत्वः पुनः पुनरुद्धृतोऽनुगच्छेद्गार्हपत्यादेवैनम्प्राञ्चमुद्धृत्योपसमाधायाग्निहोत्रञ्जुहुयादेतदेव तत्र कर्म्म ॥२॥ [अर्धः प्रपाठकः ४८] तदाहुः। यस्य गार्हपत्योऽनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्धैक उल्मुकादेव निर्म्मन्थन्ति यतो वै पुरुषस्यान्ततो नश्यति ततो वै स तस्य प्रायश्चित्तिमिच्छत इति वदन्तस्तदु तथा न कुर्य्यादुल्मुकं ह वै वादाय चरेयुरुल्मुकस्य वावव्रश्चमित्थमेव कुर्य्यादुल्मुकादङ्गारमादाय तमरण्योरभिविमथ्नीयादुप ह तङ्काममाप्नोति य उल्मुकमन्थ्य उपो तं यो ऽरण्योरेतदेव तत्र कर्म्म ॥ ३ ॥ तदाहुः। यस्याग्नावग्निमभ्युद्धरेयुः किन्तत्र कर्म्म का प्रायश्चित्तिरितीश्वरौ वा एतौ सम्पद्याशान्तौ यजमानस्य प्रजाश्च पशूँश्च निर्दहस्तदभिमन्त्रयेत 'समितँ सङ्कल्पेथाँ सम्प्रियौ रोचिष्णू सुमनस्यमानौ ॥ इषमूर्जमभि संवसानौ ॥ सं वाम्मनाँसि सं व्रता समु चित्तान्याकरम् ॥ अग्ने पुरीष्याधिपा भव त्वन्न इषमूर्जं यजमानाय धेही'ति शान्तिमेवाभ्यामेतद्वदति यजमानस्य प्रजायै पशूनामहिँसायै ॥ ४ ॥ यद्यु अस्य हृदयं कथेव लिखेत्। अग्नयेऽग्निमतेऽष्टाकपालम्पुरोडाशन्निर्वपेत्तस्यावृत्सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संयाज्ये अथैते याज्यानुवाक्ये

(१) शु० य० सं० (अ० १२ क० ५७-५८)।

ऽ'अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ॥ हव्यवाड्जुह्वास्य' ऽइत्यथ याज्या 'त्वꣳ ह्यग्ने ऽअग्निना विप्रो विप्रेण सन्त्सता ॥ सखा सख्या समिध्यस' ऽइति शान्तिमेवाभ्यामेतद्दधाति यजमानस्य प्रजायै पशूनामहिꣳसायाऽ ऽएतदेव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याहवनीयेऽननुगते गार्हपत्योऽनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्ध हैके तत ऽएव प्राञ्चमुद्धरन्ति प्राणा वा ऽअग्नयः प्राणानेवास्मा ऽएतदुद्धराम ऽइति वदन्तस्तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयात्प्राचो न्वा ऽअयं यजमानस्य प्राणान्प्रारौत्सीत्प्रमरिष्यत्ययं यजमान ऽइतीश्वरो ह तथैव स्यात् ॥ ६ ॥ अथ हैके प्रत्यञ्चमाहरन्ति । प्राणोदानाविमाविति वदन्तस्तदु तथा न कुर्य्यात्स्वर्ग्यं वा ऽएतद्यदग्निहोत्रं यो हैनन्तत्र ब्रूयात्प्रति न्वा ऽअयꣳ स्वर्गाल्लोकादुवारुक्षन्नास्येदुꣳ स्वर्ग्यमिव भविष्यतीतीश्वरो ह तथैव स्यात् ॥ ७ ॥ अथ हैकेऽन्यङ्गार्हपत्यम्मन्थन्ति । तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयादग्नेन्न्वा ऽअयमधि द्विषन्तम्भ्रातृव्यमजीजनत क्षिप्रेऽस्य द्विषन्भ्रातृव्यो जनिष्यते प्रियतमꣳ रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ ८ ॥ अथ हैकेऽनुगमय्याग्न्यम्मन्थन्ति । तस्याशान्तेयादुपि यत्परिशिष्टमभूत्तदजीजसत नास्य दायादश्चन परिशेक्ष्यत ऽइतीश्वरो ह तथैव स्यात् ॥ ९ ॥ इत्थमेव कुर्य्यात् । अरण्योरग्नी समारोह्योदङ्ङुदवसाय निर्म्मथ्य जुहुयात्तथा ह न

(१) ऋ० सं० १. १. २२ । (२) ऋ० सं० ६. ३. ३१. ।

काञ्चन परिचक्षाङ्करोति नवावसान ऽउ ऽअस्याभितोराद्ध हुतम्भवति * ॥ १० ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ अग्न्यन्तरसंसर्गादौ प्रायश्चित्तम् ]

अथ प्प्रातर्ब्भस्स्माद्ध्युद्धृत्य । गोमयेनालिप्प्यारण्ण्यो-रेवाग्नी समारोह्य प्प्रत्त्यवस्यति मथित्त्वा गार्हपत्त्यमुद्धृत्त्या-हवनीयमाहृत्त्यान्न्वाहार्य्यपचनमग्ग्नये पथिकृतेऽष्टाकपाल-म्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनु-ब्ब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संयाज्ये ऽअथैते याज्या-नुवाक्क्ये 'वेत्त्था हि वेधो ऽअद्ध्वनः पथश्च्च देवाञ्जसा ॥ अग्ग्ने यज्ञेषु सुक्रत'वित्त्यथ याज्या'देवानामपि पन्थामगन्म यच्छक्क्नवाम तदनुप्प्रवोढुम् ॥ अग्निर्व्विद्वान्त्स यजात्सेदु होता सो ऽअद्ध्वरान्त्स ऽऋतून्कल्पयाती'त्त्यग्निर्व्वै पथिकृत्प-थामपिनेता स ऽएवैनं यज्ञपथमपिनयत्त्येतदेव तत्र कर्म्म ॥ १ ॥ तदाहुः । यस्याग्नयः सꣳसृज्ज्येरन्किन्तत्र कर्म्म का प्प्रायश्च्चित्तिरिति स यदि परस्ताद्दहन्नभीयात्तद्विद्यात्प-रस्तान्मा शुक्क्रमागन्नुप मान्देवाः प्प्राभूवञ्छ्रेयान्भविष्ष्या-मीति यद्यु ऽअस्य हृदयं व्व्येव लिखेदग्नये विविचयेऽष्टा-कपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनी-रनुब्ब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संयाज्ये ऽअथैते

* का० श्रौ० सू० २५. ३. ४–६ ।
( १ ) ऋ० सं० ४. ५. २१ । ( २ ) ऋ० सं० ७. ५. १० ।

याज्यानुवाक्क्ये 'वि ते विष्ष्वग्ग्वातजूतासो ऽअग्ने भामासः शुचे शुचयश्चरन्ति ॥ तुविम्म्रक्षासो दिव्व्या नवग्ग्वा वना वनन्ति धृषता रुजन्त' इत्त्यथ याज्ज्या 'त्त्वामग्ने मानुषीरीडते विशो होत्त्राविदं विविचिꣳ रत्नधातमम् ॥ गुहा सन्तꣳ सुभग विश्श्वदर्शतन्तुविष्ष्वणसꣳ सुयजङ्घृतश्श्रिय'मित्त्यथो ह यो द्विषतो भ्भ्रातृव्व्याद्व्याविवृत्सेत तत्काम ऽएतया यजेत वि हैवास्स्माद्वर्त्तत ऽएतदेव तत्र कर्म्म ॥ २ ॥ यद्व्यमितो दुहन्नभीयात् । तद्विद्याद्भि द्विषन्तम्भ्रातृव्व्यम्भविष्ष्यामि श्श्रेयान्न्भविष्ष्यामीति यद्यु ऽअस्य हृदयं व्व्येव लिखेद् ग्ग्नये संवर्ग्गायाष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्प्तदश सामिधेनीरनुब्ब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ सꣳयाज्ज्ये ऽअथैते याज्ज्यानुवाक्क्ये 'परस्या ऽअधि संवतोऽ वराँ२॥ऽअब्भ्यातर ॥ यत्राहमस्स्मि ताँ२॥ ऽअव'त्त्यथ याज्ज्या 'मा नो ऽअस्स्मिन्न्महाधने परावर्ग्भारभृद्यथा ॥ संवर्ग्गꣳ सꣳ रयिञ्जये'त्त्यथो ह यो द्विषतो भ्भ्रातृव्व्यात्सं विवृक्षेत तत्काम ऽएतया यजेत सꣳ हैवास्स्माद्वृङ्क्त ऽएतदेव तत्र कर्म्म ॥ ३ ॥ तदाहुः । यस्य वैद्युतो दहेत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति तद्विद्यादुपरिष्टान्न्मा शुक्रमागन्नुप मान्देवाः प्प्राभूवञ्छ्रेयान्न्भविष्ष्यामीति यद्यु ऽअस्य हृदयं व्व्येव लिखेदग्ग्नयेऽप्प्सुमतेऽष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्प्तदश सामिधेनीरनु-

(१) ऋ० सं० ४. ५. ८। (२) ऋ० सं० ३. ८. २६। (३) शु० य० सं० ११. ७१। (४) ऋ० सं० ६. ५. २६।

ब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ सँयाज्ये ऽअथैते याज्यानुवाक्ये ‘ऽअप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे ॥ गर्भे सञ्जायसे पुन’रित्यथ याज्या ‘गर्भो ऽअस्योषधीनाङ्गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याग्ने गर्भो ऽअपामसी’ति शान्तिमेवाभ्यामेतद्ददति यजमानस्य प्रजायै पशूनामहिंसाया ऽएतदेव तत्र कर्म्म ॥ ४ ॥ तदाहुः । यस्याग्नयोऽमेध्यैरग्निभिः संसृज्येरन्किन्तत्र कर्म्म का प्रायश्चित्तिरित्यग्नये शुचयेऽष्टाकपालम्पुरोडाशन्निर्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संयाज्ये ऽअथैते याज्यानुवाक्ये ‘ऽअग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः ॥ शुची रोचत ऽआहुत’ इत्यथ याज्या‘दग्ने शुचयस्तव शुक्रा भ्राजन्त ऽईरते ॥ तव ज्योतींष्यर्चय’ ऽइति शान्तिमेवाभ्यामेतद्ददति यजमानस्य प्रजायै पशूनामहिंसाया ऽएतदेव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याहवनीयमनुद्धृतमादित्योऽभ्यस्तमियात्किन्तत्र कर्म्म का प्रायश्चित्तिरित्येते वै रश्मयो विश्वे देवास्तेऽस्मादपप्रयन्ति तदस्मै व्यृध्यते यस्माद्देवा ऽअपप्रयन्ति तामनु व्यृद्धिं यश्च वेद यश्च न ता ऽउभावाहतुरनुद्धृतमस्याभ्यस्तमगादिति तत्रेत्थङ्कुर्य्यादुद्धरितः हिरण्यन्दर्भे प्रबध्य पश्चाद्धर्त्तवै ब्रूयात्तदेतस्य रूपङ्क्रियते य ऽएष तपत्यहर्वा ऽएष तदुद्धृतो

(१) ऋ० सं० ६. ३. ३०। शु० य० सं० १२. ३६। (२) शु० य० सं० १२. ३७। (३) ऋ० सं० ६. ३. ४०। (४) ऋ० सं० ६. ३. ३९।

रूपङ्क्रियते पवित्रन्दर्भाः पवयत्त्येवैनन्तदुथेद्ध्ममादीप्प्य
प्प्राञ्चः हर्त्तवै ब्ब्रूयाद्ब्राह्मण ऽआर्षेय ऽउद्धरेद्ब्राह्मणो वा
ऽआर्षेयः सर्वा देवताः सर्वाभिरेवैनन्तद्देवताभिः समर्द्ध-
यति तमुपसमाधाय प्प्रतिपरेत्त्य गार्हपत्त्य ऽआज्यमधि-
श्श्रित्त्योद्वास्योत्त्पूयावेक्ष्य चतुर्ग्गृहीतमाज्यङ्गृहीत्त्वा समिध-
मुपसङ्गृह्य प्प्राङुदाद्रवत्त्यथाहवनीये समिधमब्भ्याधाय द-
क्षिणञ्जान्न्वाच्च्य जुहोति व्विश्श्वेब्भ्यो देवेब्भ्यः स्वाहेति
स यथा ब्ब्राह्मणमावसथवासिनङ्क्रुद्धं य्यन्तमुक्षवेहुतो-
पमन्त्रयेतैवमेवैतद्विश्श्वान्देवानुपमन्त्रयते जानन्ति हैनमुप
हैनमावर्त्तन्त ऽएतदेव तत्र कर्म्म ॥ ६ ॥ तदाहुः ।
यस्याहवनीयमनुद्धृतमादित्त्योऽब्भ्युदियात्किन्तत्र कर्म्म का
प्प्रायश्श्चित्तिरित्त्येते वै रश्श्मयो व्विश्श्वे देवास्तेऽस्म्मा-
दूषिवाꣳसोऽपप्प्रयन्ति तदस्म्मै व्व्यृद्ध्यते यस्म्माद्देवा
ऽअपप्प्रयन्ति तामनु व्व्यृद्धिं य्यश्श्च व्वेद यश्श्च न ताऽउभा-
वाहतुरनुद्धृतमस्याब्भ्युदगादिति तत्रेत्थङ्कुर्य्याद्व्रजतः हिर-
ण्ण्यन्दर्ब्भे प्प्रबद्ध्य पुरस्ताद्धर्त्तवै ब्ब्रूयात्तच्चन्द्रमसो रूप-
ङ्क्रियते रात्त्रिर्वै चन्द्रमास्तद्रात्त्रे रूपङ्क्रियते पवित्रन्दर्भाः
पवयत्त्येवैनन्तदुथेद्ध्ममादीप्प्याश्श्वञ्चः हर्त्तवै ब्ब्रूया-
द्ब्राह्मण ऽआर्षेय ऽउद्धरेद्ब्राह्मणो वा ऽआर्षेयः सर्वा
देवताः सर्वाभिरेवैनन्तद्देवताभिः समर्द्धयति तमुपसमाधाय
प्प्रतिपरेत्त्य गार्हपत्त्य ऽआज्यमधिश्श्रित्त्योद्वास्योत्त्पूयावेक्ष्य
यथागृहीतमाज्यङ्गृहीत्त्वा समिधमुपसङ्गृह्य प्प्राङुदाद्रवत्त्यथा-
हवनीये समिधमब्भ्याधाय दक्षिणञ्जान्न्वाच्च्य जुहोति

विश्श्वेब्भ्यो देवेब्भ्यः स्वाहेति सोऽसावेव बन्धुर्न्न ह वै तत्र का चनार्त्तिर्न्न रिष्टिर्ब्भवति यत्रैषा प्प्रायश्चित्तिः क्रियत ऽएतदेव तत्र कर्म्म ॥ ७ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥



[ मृताग्निहोत्रनिरूपणम् ]

तदाहुः । यदेष दीर्ग्घसत्त्र्यग्निहोत्र्याहुत्वा प्रवसन्म्रियेत जुहुयुरस्मा३ ऽइ ना३ ऽइति तद्धैके होतव्यम्मन्न्यन्त ऽआगन्तोरिति तदु तथा न कुर्य्यादुतस्त्थानो वा ऽएष तस्म्मै यदेनᳪ शवद्धाया ऽइव जुहुयुर्य्यज्ञाय वा ऽएष ऽआहुतिब्भ्यस्तस्त्थानः स हैनमम्मृष्यमाणस्तृप्प्रᳪ सचते ॥ १ ॥ अथ हैक ऽआहुः । एवमेवान्न्वाहिता ऽआहूयमानाः शयीरन्निति तदु तथा न कुर्य्यादुतस्त्थानो वा ऽएष तस्म्मै यदेनᳪ शवद्धाया ऽइवेन्धीरन्न्यज्ञाय वा ऽएष ऽआहुतिब्भ्यस्तस्त्थानः स हैनमम्मृष्यमाणस्तृप्प्रᳪ सचते ॥ २ ॥ अथ हैकेऽरण्योः । अग्नी समारोह्य निदधति तमाहृते निर्म्मन्थन्ति तदु तथा न कुर्य्यादुतस्त्थानो वा ऽएष तस्म्मै यदेनᳪ शवद्धाया ऽइव निर्म्मन्थेयुर्य्यज्ञाय वा ऽएष आहुतिब्भ्यस्तस्त्थानः स हैनमम्मृष्यमाणस्तृप्प्रᳪ सचते ॥ ३ ॥ इत्थमेव कुर्य्यात् । निवान्न्यवत्सानिष्ट्वै ब्रूयात्तस्यै पयसा जुहुयादार्त्तं वा

ऽएतरप॒ ... यृ॒त्विना॒न्य ... सा॒या * ऽआर्त्तमे॒त॒दग्निहोत्रं य्यृ॒न्मृत॒स्य त॒दा॒र्त्तेनैव त॒दा॒र्त्तिं निष्कृ॒त्य श्श्रेयान्भवति ॥ ४ ॥ त॒दु॒प्प्युपमास्ति । य॒द्द्वौ र॒थौ मृदि॒तौ समाग॒च्छे॒ताᳪ स्या॒दे॒वान्यतरः स्य॒दा॒येति ॥ ५ ॥ त॒स्य वा॒ ऽए॒त॒स्याग्निहो॒त्रस्योपचा॒रः । प्राचीनावीती दोहयति यज्ञोपवीती वै॒ दे॒वेभ्यो दोहयन्त्य॒थै॒वम्पितृणाम् ॥६॥ नाङ्गारेष्व॒धिश्श्रयति । य॒द्धाङ्गारेष्वधिश्श्रयेद्देव॒त्रा कुर्य्याद्गा॒र्ह॑पत्याद॒ुष्णम्भ॒स्म दक्षिणा निरु॒ह्य त॒स्मिन्नेनदु॒धिश्श्रयति पितृदे॒व॒त्यमे॒वैनत्त॒त्करोति ॥७॥ ना॒वज्ज्योतयति॒ नापः प्प्रत्य॒नयति । य॒द्धावज्ज्योत॒ये॒द्य॒द॒पः प्प्रत्य॒नयेद्देव॒त्रा कुर्य्यान्न त्रिः प्प्रतिष्ठापः हरति य॒त्रिः प्प्रतिष्ठापः ह॒रेद्देव॒त्रा कुर्य्यात्सकृ॒दे॒व निक॒र्षन्हरति पितृदे॒व॒त्यमे॒वैनत्त॒त्करोति ॥ ८ ॥ नो॒न्नेष्य्यामी॒त्याह । न॒ चतुरु॒न्नयति य॒द्धोन्नेष्य्यामी॒ति ब्रूया॒द्य॒च्चतु॒रुन्न॒येद्देव॒त्रा कुर्य्यात्सकृ॒दे॒व तू॒ष्णी॒न्त्व्य॒वक्क्प॒रु॒र्य्यस्यति पि॒तृदे॒व॒त्यमे॒वैनत्त॒त्करोति ॥ ९ ॥ नोप॒रिष्टात्स॒मि॒धमभ्य॒स्य हरति । य॒द्धोप॒रिष्टात्समि॒धमभ्य॒स्य ह॒रेद्देव॒त्रा कुर्य्याद॒ध॒स्तादु॒पास्य हरति पितृदे॒व॒त्यमे॒वैनत्त॒त्करोति ॥ १० ॥ नो॒त्तरेण गा॒र्ह॑पत्यमेति । य॒द्धोत्तरेण गा॒र्ह॑पत्यमिया॒द्देव॒त्रा कुर्य्याद्द॒क्षिणेन गा॒र्ह॑पत्यमेति पितृदे॒व॒त्यमे॒वैनत्त॒त्करोति ॥ ११ ॥ अ॒थ या॒न्यमू॒न्युदी॒चीनाग्राणि तृ॒णानि भ॒वन्ति । द॒क्षिणाग्र॒ ... णे ता॒नि करोति पितृदे॒व॒त्यमे॒वैनत्त॒त्करो॒त्य॒थाहवनी॒ये समि॒धम॒भ्याधा॒य सव्यज्ञान्वा॒च्य सकृ॒दे॒व तू॒ष्णी॒न्त्व्य॒वक्क्प॒रु॒र्य्यस्यति

* निवः पातः अन्यः परकीयवत्सो यस्याः । परकीयेण वत्सेन या मृतवत्सा गौर्दुह्यते सा निवान्यवत्सा । "अभिमृश्यार्धाः पिष्ट्वा निवान्यादुग्धे" ( का० श्रौ० सू० ५. ८. १८ ) ।

पितृदेवत्यमेवैनत्तत्करोति नोदिङ्गयति नोपमृष्टे न प्प्राश्नाति नोदुक्षति पितृदेवत्यमेवैनत्तत्करोति ॥ १२ ॥ तदाहुः । यदेष दीर्घसत्र्यग्निहोत्र्यजुह्वत्प्रवसन्म्रियेत कथमेनमग्निभिः कुर्युरिति तः हैके दग्ध्वाहरन्ति तमाहृतमग्निभिः सङ्क्षापयन्ति तदु तथा न कुर्याद्यथान्यस्यां योनौ रेतः सिक्तन्तदन्यस्याम्प्रजिजनयिषेत्तादृक्तदुस्थीन्येतान्याहृत्य कृष्णाजिने न्युप्य पुरुषविधिं विधायोर्णाभिः प्प्रच्छाद्याज्येनाभिघार्य तमग्निभिः समुपोषेत्तदेनꣳ स्वाद्योनेः प्प्रजनयतीति ॥ १३ ॥ तः हैके ग्रामाग्निना दहन्ति । तदु तथा न कुर्यादेष वै विश्वात्क्रव्यादग्निः स हैनमीश्वरः सपुत्रः सपशुः समन्तोः ॥ १४ ॥ अथ हैके प्प्रदव्येन दहन्ति । तदु तथा न कुर्यादेष वाऽअशान्तोऽग्निः स हैनमीश्वरः सपुत्रः सपशुम्प्रदग्धोः ॥ १५ ॥ अथ हैक ऽउल्मुक्येन दहन्ति । तदु तथा न कुर्यादेष वै रुद्रियोऽग्निः स हैनमीश्वरः सपुत्रः सपशुमभिमन्तोः ॥ १६ ॥ अथ हैकेऽन्तरेणाग्नींश्चितिश्चित्वा । तमग्निभिः समुपोषन्त्येतद्वै यजमानस्यायतनं यदन्तरेणाग्नीनिति तदु तथा न कुर्याद्यो हैनन्तत्र ब्रूयात्सृक्ष्ये न्वा ऽअयक्षामस्याशसनमजीजनत क्षिप्रेऽस्याशसनञ्जनिष्यते प्प्रियतमः रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ १७ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ और्ध्वदेहिकनिरूपणम् ]

अथ ह स्माह नाको मौद्गल्ल्यः। मरिष्यन्तञ्चेद्यजमानम्मन्येत यत्रैवास्मा ऽआशसनञ्जोषितं स्यात्तदरण्योरग्नी समारोह्य निर्म्मथ्य जुहुवद्वसेत्स यदास्माल्लोकाद्यजमानः प्रेयात् ॥ १ ॥ अथैनमन्तरेणाग्नीश्चितिञ्चित्वा। तमग्निभिः समुपोषेदिति तदु तथा न कुर्य्यादुतस्थानो वा ऽएष तस्मै यदेनः शवदह्याया ऽइव जुहुयुरुर्यञ्जाय वा ऽएष ऽआहुतिभ्यस्ततस्थानः स हैनममृष्यमाणस्तृप्रः सचते ॥ २ ॥ इत्थमेव कुर्य्यात्। तिस्र ऽएव स्थालीरेष्ट्वैव ब्रूयात्तासु गोमयानि च शुम्बलानि चावधाय नाना त्रिष्वग्निषु प्रवृञ्ज्यात्ते ये ततः सन्तापाद्दग्नयो जायेरँस्तैरेनन्दहेयुस्तथाह तैरेव दग्धो भवति नो प्रत्यक्षमिव ॥ ३ ॥ तस्मादुप्येतदृषिणाभ्यनूक्तम्। 'ग्नो ऽअग्निरग्नेरध्यजायत शोकात्पृथिव्या ऽउत वा दिवस्परि ॥ येन प्रजा विश्वकर्म्मा जजान तमग्ने हेडः परि ते वृणक्त्वि'ति यथऽर्क्तथा ब्राह्मणम् ॥ ४ ॥ अथैनं विपुरीषङ्कृत्वा। अस्याम्पुरीषम्प्रतिष्ठापयति पुरीषं वा ऽइयन्तत्पुरीष ऽएवैतत्पुरीषन्दधाति या ह वा ऽअस्यैषा वृकला सपुरीषा तस्यै ह विदग्धायै सृगालः सम्भवति नेत्सृगालः सम्भवदिति तदु तथा न कुर्य्यात्क्षोधुका हास्य प्रजा भवति तमन्ततः प्रक्षाल्याज्येनान्वनक्ति मेध्यमेवैनत्तत्करोति ॥ ५ ॥ अथास्य सप्तसु प्राणायतनेषु * ।

(१) शु० य० सं० अ० १३ क० ४५।

* का० श्रौ० सू० २५. ७. २०–३४।

सप्त हिरण्यशकलान्प्रत्यस्यति ज्योतिर्वा ऽअमृतꣳ हिरण्यञ्ज्योतिरेवास्मिँस्तदमृतन्दधाति ॥ ६ ॥ अथैन-मन्तरेणाग्नीञ्शिञ्चितिञ्चित्वा । कृष्णाजिनमुत्तरलोम प्राचीनग्रीवम्प्रस्तीर्य तस्मिन्नेनमुत्तानन्निपाद्य जुहूङ्घृतेन पूर्णान्दक्षिणे पाणावादधाति सव्य ऽउपभृतमुरसि ध्रुवाम्मुखेऽग्निहोत्रहवणीन्नासिकयोः स्रुवौ कर्णयोः प्राशित्रहरणे शीर्षञ्चमसम्प्रणीताप्रणयनम्पार्श्वयोः शूर्पे ऽउदरे पात्रीꣳ समवत्तधानीम्पृषदाज्यवतीꣳ शिश्नस्यान्ते शम्याभाण्डयोरन्ते वृषारवावन्वगुलूखलञ्च मुसलञ्चान्तरेणोरू ऽअन्यानि यज्ञपात्राणि दक्षिणे पाणौ स्फ्यम् ॥ ७ ॥ स ऽएष यज्ञायुधी यजमानः । यथा बिभ्यदामोषमतीयादेवमेव योऽस्य स्वर्गे लोको जितो भवति तमभ्यत्येति तमेते सन्ताप्या ऽअग्नयो यथा पुत्राः पितरम्प्रोषुषमागतꣳ शिवमुपस्पृशन्त्येवꣳ शिवꣳ हैवैनमुपस्पृशन्ति प्र हैवैनङ्कल्पयन्ति ॥ ८ ॥ तं यदि गार्हपत्यः पूर्वः प्राप्नुयात् । तद्विद्यात्प्रतिष्ठ ऽएनमग्निः पूर्वः प्रापत्प्रतिष्ठास्यति प्रत्येव तेऽस्मिँल्लोके स्थास्यन्ति येऽस्मात्प्रत्यञ्च ऽइति ॥ ९ ॥ अथ यद्याहवनीयः । तद्विद्यान्मुख्य ऽएनमग्निः पूर्वः प्रापन्मुखतो लोकानजैषीन्मुखमेव तेऽस्मिँल्लोके भविष्यन्ति येऽस्मात्प्रत्यञ्च ऽइति ॥ १० ॥ अथ यद्यन्वाहार्यपचनः । तद्विद्यादन्नाद ऽएनमग्निः पूर्वः प्रापदन्नमत्स्यत्यन्नमेव तेऽस्मिँल्लोकेऽत्स्यन्ति येऽस्मात्प्रत्यञ्च ऽइति ॥ ११ ॥ अथ यदि

सर्वे सकृत् । तद्विद्यात्कल्याणँल्लोकमजैषीदित्येतान्न्य- स्मिन्न्विज्ञानानि ॥ १२ ॥ तां व्वा ऽएताम् । यजमाना- त्माहुतिमन्ततो जुहोति स यो ऽस्य स्वर्ग्गे लोको जितो भवति तत ऽआहुतिमयोऽमृतः सम्भवति ॥ १३ ॥ अथ यान्न्यश्ममयानि च मृन्मयानि च भवन्ति । तानि ब्राह्मणाय ‡ दद्याच्छवोद्वहमु ह तम्मन्न्यन्ते यस्तानि प्रतिगृह्णणात्यप ऽएवैनान्न्यभ्यवहरेयुरापो वा ऽअस्य सर्व्वस्य प्रतिष्ठा तदेनमप्स्वेव प्रतिष्ठापयति ॥ १४ ॥ अथैतामाहुतिञ्जुहोति * । पुत्रो वा भ्राता वा यो वान्न्यो ब्राह्मणः स्याद् 'स्मात्त्वमधि जातोऽसि त्वदयञ्जायताम्पुनः ॥ असौ स्वर्ग्गाय लोकाय स्वाहे'त्यनपे- क्षमेत्याप ऽउपस्पृशन्ति † ॥ १५ ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ ९५ ॥

---

‡ का० श्रौ० सू० २५. ७. ३६ ।

* का० श्रौ० सू० २५. ७. ४० ।

( १ ) शु० य० सं० ३३. २२ ।

† 'अनपेक्षमेत्योपस्पृशन्त्यपः' ( का० श्रौ० सू० २५. ७. ४१ )

[ ज्योतिष्टोमप्रायश्चित्तम् ]

सोमो वै राजा यज्ञः प्रजापतिः । तस्यैतास्तन्वो या ऽएता देवता या ऽएता ऽआहुतीर्जुहोति ॥ १ ॥ स यद्यज्ञस्याच्छेत् । यान्तत्प्रति देवताम्मन्येत तामनुसमीक्ष्य जुहुयाद्यदि दीक्षोपसत्स्वाहवनीये यदि प्रसुत ऽआग्नीध्रे वि वा ऽएतद्यज्ञस्य पर्व स्रंसते यद्ध्वलति सा यैव तर्हि तत्र देवता भवति तयैवैतद्देवतया यज्ञम्भिषज्यति तया देवतया यज्ञम्प्रति सन्दधाति ॥ २ ॥ स यद्येनम्मनसाभिध्यातः । यज्ञो नोपनमेत्परमेष्ठिने स्वाहेति जुहुयात्परमेष्ठी हि स तर्हि भवत्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥३॥ [* काण्डस्यार्धम् २३० ] अथ यद्येनं वाचाभिव्याहृतः । यज्ञो नोपनमेत्प्रजापतये स्वाहेति जुहुयात्प्रजापतिर्हि स तर्हि भवत्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥४॥ अथ यस्य राजानमच्छेत्वा । नाहरन्त ऽएयुरन्धसे स्वाहेति जुहुयादन्धो हि स तर्हि भवत्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥ ५ ॥ अथ यदि सातः । किञ्चिदापद्येत सवित्रे स्वाहेति जुहुयात्सविता हि स तर्हि भवत्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥ ६ ॥ अथ यदि दीक्षासु । किञ्चिदापद्येत विश्वकर्म्मणे स्वाहेति जुहुयाद्विश्वकर्म्मा हि स तर्हि भवत्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥ ७ ॥ अथ यदि सोमक्रयण्याम् । किञ्चिदापद्येत पूष्णे स्वाहेति जुहुयात्पूषा हि स तर्हि भवत्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥ ८ ॥ अथ यदि क्रयायोपोत्थितः । किञ्चि-

---

* इयमर्धकाण्डसंख्याऽत्र काण्डे लिखिता । सापि 'क' पुस्तक एव ।

दापद्येतेन्द्राय च मरुद्भ्यश्च स्वाहेति जुहुयादिन्द्रश्च हि स तर्हि मरुतश्च भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥९॥ अथ यदि पण्यमानꣳ । किञ्चिदापद्येतासुराय स्वाहेति जुहुयादसुरो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १० ॥ अथ यदि क्रीतꣳ । किञ्चिदापद्येत मित्राय स्वाहेति जुहुयान्मित्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ११ ॥ अथ यदूरावासन्नꣳ । किञ्चिदापद्येत विष्णवे शिपिविष्टाय स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि शिपिविष्टो भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १२ ॥ अथ यदि पर्युह्यमाणꣳ । किञ्चिदापद्येत विष्णवे नरन्धिषाय स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि नरन्धिषो भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १३ ॥ अथ यद्यागतꣳ । किञ्चिदापद्येत सोमाय स्वाहेति जुहुयात्सोमो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १४ ॥ अथ यद्यासन्द्यामासन्नꣳ । किञ्चिदापद्येत वरुणाय स्वाहेति जुहुयाद्वरुणो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १५ ॥ अथ यद्याग्नीध्रगतः । किञ्चिदापद्येताग्नये स्वाहेति जुहुयादग्निर्हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १६ ॥ अथ यदि हविर्धानगतꣳ । किञ्चिदापद्येतेन्द्राय स्वाहेति जुहुयादिन्द्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १७ ॥ अथ यद्युपावह्रियमाणꣳ किञ्चिदापद्येताथर्वणे

स्वाहेति जुहुयादथर्वा हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १८ ॥ अथ यद्यꣳशुषु न्न्युप्तꣳ। किञ्चिदापद्येत विश्वेभ्यो देवेभ्यꣳ स्वाहेति जुहुयाद्विश्वे हि स तर्हि देवा भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १९ ॥ अथ यद्याप्याय्यमानꣳ। किञ्चिदापद्येत विष्णव ऽआप्रीतपाय स्वाहेति जुहुयाद्विष्णुर्हि स तर्ह्याप्रीतपा भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २० ॥ अथ यद्यभिषूयमाणꣳ। किञ्चिदापद्येत यमाय स्वाहेति जुहुयाद्यमो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २१ ॥ अथ यदि सम्भ्रियमाणꣳ। किञ्चिदापद्येत विष्णवे स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २२ ॥ अथ यदि पूयमानꣳ। किञ्चिदापद्येत वायवे स्वाहेति जुहुयाद्वायुर्हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २३ ॥ अथ यदि पूतꣳ। किञ्चिदापद्येत शुक्राय स्वाहेति जुहुयाच्छुक्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥२४॥ अथ यदि क्षीरश्रीꣳ। किञ्चिदापद्येत शुक्राय स्वाहेति जुहुयाच्छुक्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २५ ॥ अथ यदि सक्तुश्रीꣳ। किञ्चिदापद्येत मन्थिने स्वाहेति जुहुयान्मन्थी हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २६ ॥ अथ यदि चमसेषून्नीतꣳ। किञ्चिदापद्येत विश्वेभ्यो देवेभ्यꣳ स्वा-

हेति जुहुयाद्विश्वे हि स तर्हि देवा भवत्त्युप पाप्मानꣳ
हत ऽउपैनं ꣳयज्ञो नमति ॥ २७ ॥ अथ यदि होमायो-
द्यतः । किश्चिदापद्येतासवे स्वाहेति जुहुयादसुर्हि स तर्हि
भवत्त्युप पाप्मानꣳ हत ऽउपैनं ꣳयज्ञो नमति ॥ २८ ॥
अथ यदि हूयमानः । किश्चिदापद्येत रुद्राय स्वाहेति
जुहुयाद्रुद्रो हि स तर्हि भवत्त्युप पाप्मानꣳ हत ऽउपैनं
ꣳयज्ञो नमति ॥ २९ ॥ अथ यद्यभ्यावृत्तः । किश्चिदाप-
द्येत वाताय स्वाहेति जुहुयाद्वातो हि स तर्हि भवत्त्युप
पाप्मानꣳ हत ऽउपैनं ꣳयज्ञो नमति ॥३०॥ अथ यदि प्रति-
ख्यातः । किश्चिदापद्येत नृचक्षसे स्वाहेति जुहुयान्नृचक्षा
हि स तर्हि भवत्त्युप पाप्मानꣳ हत ऽउपैनं ꣳयज्ञो
नमति ॥ ३१ ॥ अथ यदि भक्ष्यमाणः किञ्चिदापद्येत
भक्षाय स्वाहेति जुहुयाद्भक्षो हि स तर्हि भवत्त्युप पाप्मा-
नꣳ हत ऽउपैनं ꣳयज्ञो नमति॥ ३२ ॥ अथ यदि नाराशꣳ-
सेषु सन्नः । किञ्चिदापद्येत पितृभ्यो नाराशꣳसेभ्यः
स्वाहेति जुहुयात्पितरो हि स तर्हि नाराशꣳसा भवत्त्युप
पाप्मानꣳ हत ऽउपैनं ꣳयज्ञो नमति ॥ ३३ ॥ अथ यद्य-
वभृथायोद्यतः । किञ्चिदापद्येत सिन्धवे स्वाहेति जुहुया-
त्सिन्धुर्हि स तर्हि भवत्त्युप पाप्मानꣳ हत ऽउपैनं ꣳयज्ञो
नमति ॥ ३४ ॥ अथ यद्यभ्यवह्रियमाणः । किञ्चिदा-
पद्येत समुद्राय स्वाहेति जुहुयात्समुद्रो हि स तर्हि
भवत्त्युप पाप्मानꣳ हत ऽउपैनं ꣳयज्ञो नमति ॥ ३५ ॥*

* शतम् १२०० ।

अथ यदि प्प्रप्प्लुतः । किञ्चिदापद्येत सलिलाय स्वाहेति जुहुयात्सलिलो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं य्यज्ञो नमति ॥ ३६ ॥ ता वा ऽएताः । चतुस्त्रिꣳशतमाज्याहुतीर्जुहोति त्रयस्त्रिꣳशद्वै देवाः प्प्रजापतिश्चतुस्त्रिꣳश ऽएतदु सर्वैर्देवैर्य्यज्ञम्भिषज्यति सर्वैर्देवैर्य्यज्ञम्प्रति सन्दधाति ॥३७॥ ता ब्ब्रह्मैव जुहुयात् । नाब्ब्रह्मा ब्ब्रह्मा वै यज्ञस्य दक्षिणत ऽआस्ते ब्ब्रह्मा यज्ञन्दक्षिणतो गोपायति यदि तु ब्ब्रह्मा न विद्यादपि य ऽएव कश्च विद्यात्स जुहुयाद्ब्रह्माणन्त्वामन्त्र्य ब्ब्रह्मणातिसृष्टस्तासां व्वा ऽएतासां व्व्याहृतीनाम्बन्धुता व्वसिष्ठो ह विराजं विदाञ्चकार ताꣳ हेन्द्रोऽभिदध्यौ ॥ ३८ ॥ स होवाच । ऋषे विराजꣳ ह वै वेत्थ ताम्मे ब्ब्रूहीति स होवाच किम्मम ततः स्यादिति सर्वस्य च ते यज्ञस्य प्प्रायश्चित्तिम्ब्ब्रूयाꣳ रूपञ्च त्वा दर्शयेयेति स होवाच यन्नु मे सर्वस्य यज्ञस्य प्प्रायश्चित्तिम्ब्ब्रूयाः किमु स स्याद्यन्त्वꣳ रूपन्दर्शयेथा ऽइति जीवस्वर्ग्ग ऽएवास्म्माल्लोकात्प्रेयादिति ॥ ३९ ॥ ततो हैतामृषिरिन्द्राय विराजमुवाच । इयं व्वै विराडिति तस्म्माद्योऽस्यै भूयिष्ठँल्लभते स ऽएव श्श्रेष्ठो भवति ॥ ४० ॥ अथ हैतामिन्द्र ऽऋषये । प्प्रायश्चित्तिमुवाचाग्निहोत्रादुग्ग्र ऽआ महत ऽउक्क्थात्ता ह स्म्मैताः पुरा व्व्याहृतीर्व्वसिष्ठा ऽएव विदुस्तस्म्माद्ध स्म पुरा वासिष्ठ ऽएव ब्ब्रह्मा भवति यतस्त्वेना ऽअप्प्येतर्हि य ऽएव कश्चाधीते ततोऽप्प्येतर्हि य ऽएव कश्च ब्ब्रह्मा भवति स ह वै ब्ब्रह्मा

भवितुमर्हति स वा ऽब्रह्मन्नित्यामन्त्रितः ऽप्रतिशृणुयाद्य
ऽएवमेता ऽव्याहृतीर्वेद ॥ ४१ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

---

[ * सौत्रामणीहविः ]

विश्वरूपं वै त्वाष्ट्रमिन्द्रोऽहन् । तन्त्वष्टा हतपुत्रोऽ-
भ्यचरत्सोऽभिचरणीयमपेन्द्रः सोममाहरत्तस्येन्द्रो यज्ञ-
वेशसङ्कृत्वा ऽप्रासहा सोममपिबत्स विष्वङ् ऽव्यार्च्छ-
त्तस्येन्द्रियं वीर्यमङ्गादङ्गादस्रवत् ॥ १ ॥ तस्याक्षिभ्यामेव
तेजोऽस्रवत् । सोऽजः पशुरभवद्धूम्रोऽथ यत्पक्ष्मभ्यस्ते
गोधूमा यदश्रुभ्यस्तत्कुवलम् ॥ २ ॥ नासिकाभ्या-
मेवास्य वीर्यमस्रवत् । सोऽविः पशुरभवन्मेषोऽथ यच्छ्ले-
ष्मणस्ता ऽउपवाका यत्स्नीहा तद्बदरम् ॥ ३ ॥ मुखा-
देवास्य बलमस्रवत् । स गौः पशुरभवदृषभोऽथ ये
फेनास्ते यवा यत्स्नेहस्तत्कर्कन्धु ॥ ४ ॥ श्रोत्रादेवास्य
यशोऽस्रवत् । तदेकशफमभवदश्वोऽश्वतरो गर्दभः ॥ ५ ॥
स्तनाभ्यामेवास्य शुक्रमस्रवत् । तत्पयोऽभवत्पशूनाञ्ज्यो-

---

* सुष्ठु त्रायत इति सुत्रामा तस्येय सौत्रामणी नाम पशुयगः । स च स्वतन्त्रोऽङ्गभूतश्चेति द्विविधः । चयनानन्तरं तदङ्गत्वेनानुष्ठीयमाना सौत्रामण्यङ्गभूता । स्वातन्त्र्येण विहिता च प्रधानभूता । सा नित्या काम्या नैमित्तिकी चेति त्रिविधा । तत्र फलमनुद्दिश्य विहिता नित्या हविर्यज्ञान्तर्गता । सैव च ऋद्धिफलोद्देशेन विधीयमाना काम्या । सोमवमनादिषु निमित्तेषूत्पन्नेषु तदनन्तरमनुष्ठेयतया विहिता नैमित्तिकी । स्वतन्त्रसौत्रामण्यां ब्राह्मणस्यैवाधिकारः । अङ्गभूतायां तु क्षत्रियवैश्यावप्यधिकारिणौ ।

रुरस ऽएवास्य हृदयात्त्विषिरस्रवत्स श्येनोऽपाष्ठिहाभव-द्वयसाᳬ राजा ॥ ६ ॥ नाभ्या ऽएवास्य शुषोऽस्रवत् । तत्सीसमभवन्नायो न हिरण्यꣳ रेतस ऽएवास्य रूपमस्र-वत्तत्सुवर्णꣳ हिरण्यमभवच्छिश्नादेवास्य रसोऽस्रवत्सा परिस्रुदभवत्स्फिग्गीभ्यामेवास्य भामोऽस्रवत्सा सुरा-भवदन्नस्य रसः ॥ ७ ॥ मूत्रादेवास्यौजोऽस्रवत् । स वृकोऽभवदारण्यानाम्पशूनाञ्जूतिरूवध्यादेवास्य मन्युर-स्रवत्स व्याघ्रोऽभवदारण्यानाम्पशूनाᳬ राजा लोहिता-देवास्य सहोऽस्रवत्स सिꣳहोऽभवदारण्यानाम्पशूनामीशः ॥ ८ ॥ लोमभ्य ऽएवास्य चित्तमस्रवत् । ते श्यामाका ऽअभवँस्त्वच ऽएवास्यापचितरस्रवत्सोऽश्वत्थो वनस्पति-रभवन्माꣳसेभ्य ऽएवास्योर्गस्रवत्स ऽउदुम्बरोऽभवद-स्थिभ्य ऽएवास्य स्वधास्रवत्स न्यग्रोधोऽभवन्मज्जभ्य ऽएवास्य भक्षः सोमपीथोऽस्रवत्ते व्रीहयोऽभवन्नेवमस्ये-न्द्रियाणि वीर्याणि व्युदक्रामन् ॥ ९ ॥ अथ ह वै तर्हि । नमुचिनैवासुरेण सह चचार स ऽऐक्षत नमुचिरपुनर्वा ऽअयमभूद्धन्तास्येन्द्रियं वीर्यꣳ सोमपीथमन्नाद्यꣳ हरा-णीति तस्यैतयैव सुरयेन्द्रियं वीर्यꣳ सोमपीथमन्नाद्यमह-रत्स ह न्यपद्यꣳ शिश्ये तन्देवा ऽउपसञ्जग्मिरे श्रेष्ठो वै नोऽयमभूत्तमिमम्पाप्माविदद्धन्तेमम्भिषज्यामेति ॥ १० ॥ तेऽश्विनावब्रुवन् । युवं वै ब्रह्माणौ भिषजौ स्थो युवमिमम्भिषज्यतमिति तावब्रूतामस्तु नौ भाग ऽइति तेऽब्रुवन्य ऽएषोऽजः स वाम्भाग ऽइति तथेति तस्मा-

दाश्विनो धूम्रो भवति ॥ ११ ॥ ते सरस्वतीमब्रुवन् । त्वं वै भैषज्यमसि त्वमिमम्भिषज्ज्येति साब्रवीदस्तु मे भाग ऽइति तेऽब्रुवन्कश्य ऽएषोऽविः स ते भाग ऽइति तथेति तस्मात्सारस्वतो मेषो भवति ॥ १२ ॥ अथाब्रुवन् । एतावद्वा ऽअस्मिन्नेतर्हि यावदयमृषभोऽस्यैवायमस्त्विति तथेति तस्मादैन्द्र ऽऋषभो भवति ॥ १३ ॥ तावश्विनौ च सरस्वती च । इन्द्रियं वीर्य्यं नमुचेराहृत्य तदस्मिन्पुन-रदधुस्तम्पाप्मनोऽत्रायन्त सुत्रातम्वतैनम्पाप्मनोऽत्रास्म-हीति तद्वाव सौत्रामण्यभवत्तत्सौत्रामण्यै सौत्रामणी-त्वन्त्रायते मृत्योरात्मानमप पाप्मानꣳ हते य ऽएवमेत-त्सौत्रामण्यै सौत्रामणीत्वं वेद त्रयस्त्रिꣳशद्दक्षिणा भवन्ति त्रयस्त्रिꣳशद्धि तन्देवता ऽअभिषज्यꣳस्तस्मादाहुर्भेषजन्द-क्षिणा ऽइति ॥ १४ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ सुराक्रयादि ]

अप वा ऽएतस्मात् । तेज ऽइन्द्रियं वीर्य्यं क्रामति यꣳ सोमोऽतिपवत ऽऊर्ध्वं वावाञ्चं वा ॥ १ ॥ तदाहुः । अन्नं वा ऽएतद्ब्राह्मणस्य यत्सोमो न वै सोमेन ब्राह्मणꣳ सोमवामी स यो वा ऽअलम्भूत्यै सन्भूतिन्न प्राप्नोति यो वालम्पशुभ्यꣳ सन्पशून्न विन्दते स सोमवामी पशवो हि सोम ऽइति ॥ २ ॥ स ऽएतमाश्विनन्धूम्रमालभेत ।

(१) 'ग' 'ज' पुस्तकयोः "वा" इति ।

सारस्वतम्मेषमैन्द्रमृषभमश्श्विनौ वै देवानाम्भिषजौ ताभ्यामेवैनम्भिषज्यति सरस्वती भेषजन्तयैवास्मै भेषजङ्करोतीन्द्र ऽइन्द्रियं व्वीर्य्यन्तेनैवास्मिन्निन्द्रियं व्वीर्य्यन्दधाति ॥ ३ ॥ चक्षुर्व्वा ऽअश्श्विनौ तेजः । यदाश्श्विनो भवति चक्षुरेवास्मिँस्तत्तेजो दधात्यथो श्श्रोत्रꣳ समानꣳ हि चक्षुश्च श्श्रोत्रञ्च ॥४॥ प्राणः सरस्वती व्वीर्य्यम् । यत्सारस्वतो भवति प्प्राणमेवास्मिँस्तद्वीर्य्यन्दधात्यथो ऽअपानꣳ समानꣳ हि प्प्राणश्चापानश्च ॥५॥ [अर्धप्रपाठकः ६०] व्वागिन्द्रो बलम् । यदैन्द्रो भवति व्वाचमेवास्मिँस्तद्बलन्दधात्यथो मनः समानꣳ हि व्वाक्च मनश्च ॥ ६ ॥ आश्श्विनीरजाः । सारस्वतीरवीरैन्द्रीर्ग्गाव ऽइत्याहुर्य्यदेते पशव ऽआलभ्यन्त ऽएताभिरेव देवताभिरेतान्पशूनवरुन्द्धे ॥ ७ ॥ व्वडवानुशिशुर्भवति । यश ऽएवैकशफमवरुन्द्ध ऽआरण्यानाम्पशूनाँल्लोमानि भवन्त्यारण्यानाम्पशूनामवरुद्ध्यै व्वृकलोमानि भवन्त्योज ऽएव जूतिमारण्यानाम्पशूनामवरुन्द्धे व्व्याघ्रलोमानि भवन्ति मन्न्युमेव राज्यमारण्यानाम्पशूनामवरुन्द्धे सिꣳहलोमानि भवन्ति सह ऽएवेशामारण्यानाम्पशूनामवरुन्द्धे ॥ ८ ॥ व्व्रीहयश्च श्श्यामाकाश्च भवन्ति । गोधूमाश्च कुवलानि (A) चोपवाकाश्च बदराणि (B) च यवाश्च कर्कन्धूनि च[२] शष्पाणि * च तोक्मानि † चोभयमेव

(A) स्थूलानि बदरीफलानि ।

(१) उपवाका इन्द्रयवाः ।

(B) सूक्ष्मबदरीफलानि ।

(२) 'ग' 'ज' पुस्तकयोः 'च' इति नास्ति ।

* विरूढा व्रीहयः शष्पाणि । † विरूढा यवाः तोक्माः ।

ग्ग्राम्म्यञ्चान्नमारण्ण्यञ्चावरुन्द्धेऽथो ऽउभयेनैवान्नेन यथारू-
पमिन्द्रियं व्वीर्य्यमात्मन्धत्ते ॥ ९ ॥ सीसेन शष्प्पाणि
क्क्रीणाति । ऊर्ण्णाभिस्तोक्क्मानि सूत्रैर्व्व्रीहीनुभयोर्व्वा ऽए-
तद्रूपमयसश्च हिरण्ण्यस्य च यत्सीसमुभयꣳ सौत्रा-
मणीष्ट्टिश्च पशुबन्धश्चोभयस्यावरुद्ध्यै ॥ १० ॥ ऊर्ण्णा-
सूत्रेण क्क्रीणाति । तद्वा ऽएतत्स्त्रीणाङ्कर्म्म यदूर्ण्णासूत्रङ्कर्म्म
व्वा ऽइन्द्रियं व्वीर्य्यन्तदेतदुत्सन्नꣳ स्त्रीषु तद्यदेवेन्द्रियं व्वी-
र्य्यमुत्सन्नꣳ स्त्रीषु तदेवावरुन्द्धे ॥ ११ ॥ तद्धैतद-
न्न्येऽद्ध्वर्य्यवः । सीसेन क्लीबाच्छष्प्पाणि क्क्रीणन्ति
तत्तदिति न व्वा ऽएष स्त्री न पुमान्न्यत्क्लीबो नेष्टिर्न्न
पशुबन्धः सौत्रामणीति व्वदन्तस्तदु तथा न कुर्य्याद-
भयं व्वै सौत्रामणीष्टिश्च पशुबन्धश्च व्व्यृद्धमु व्वा ऽएत-
न्मनुष्ष्येषु यत्क्लीबो यज्ञमुख ऽएव ते यज्ञस्य व्व्यृद्धिन्द-
धति ये तथा कुर्व्वन्ति सोमविक्क्रयिण ऽएव क्क्रीणीया-
त्सोमो व्वै सौत्रामणी यज्ञमुख ऽएव तत्सोमरूपङ्करोति यज्ञस्य
समृद्ध्यै ॥ १२ ॥ शतातृण्णा कुम्भी भवति । बहुधेव हि
स व्व्यस्रवदथो शतोन्मानो व्वै यज्ञो यज्ञमेवावरुन्द्धे
सतम्भवति सदेवावरुन्द्धे चप्प्यम्भवत्यन्नाद्यस्यैवावरुद्ध्यै
पवित्रम्भवति पुनन्ति ह्येनं व्वालो भवति पाप्प्मनो व्व्यावृत्त्यै
सुवर्ण्णꣳ हिरण्ण्यम्भवति रूपस्यैवावरुद्ध्यै शतमानम्भवति
शतायुर्व्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते
॥ १३ ॥ आश्वत्त्थम्पात्रम्भवति । अपचितिमेवावरुन्द्धे
ऽऔदुम्बरम्भवत्यूर्ज्जमेवावरुन्द्धे नैयग्ग्रोधम्भवति स्वधामेवा-

वरुन्द्धे स्थाल्ल्यो भवन्ति पृथिव्व्या ऽएवान्नाद्यमवरुन्द्धे ॥ १४ ॥ पालाशान्न्युपशयानि भवन्ति । ब्ब्रह्म वै पलाशो ब्ब्रह्मणैव स्वर्गँल्लोकञ्जयत्त्यपाष्ट्रिहस्य पत्त्रे भवतस्त्विषिमेव राज्ज्यं व्वयसामवरुन्द्धे षट्त्रिꣳशदेतानि भवन्ति षट्त्रिꣳशदक्षरा वै बृहती बार्हताः पशवो बृहत्त्यैवास्म्मै पशूनवरुन्द्धे ॥१५॥ तदाहुः । अन्न्यदेवत्त्याः पशवो भवन्त्यन्न्यदेवत्त्याः पुरोडाशा व्विलोमैतत्क्रियते कथमेतत्सलोम भवतीत्त्यैन्द्रः पशूनामुत्तमो भवत्त्यैन्द्रः पुरोडाशानाम्प्रथम ऽइन्द्रियं वै व्वीर्य्यमिन्द्र ऽइन्द्रियेणैवास्म्मा ऽइन्द्रियं व्वीर्य्यꣳ सन्दधातीन्द्रियेणेन्द्रियं व्वीर्य्यमवरुन्द्धे ॥ १६ ॥ सावित्त्रः पुरोडाशो भवति । सवितृप्प्रसूततायै व्वारुणो भवति व्वरुणो वा ऽएतङ्गृह्णाति यः पाप्प्मना गृहीतो भवति व्वरुणेनैवैनं व्वरुणय्याःमुञ्चत्त्यन्त्यो भवत्त्यन्तत ऽएवैनं व्वरुणपाशात्प्रमुञ्चति ॥ १७ ॥ एकादशकपाल ऽऐन्द्रो भवति । एकादशाक्षरा वै त्रिष्टुबिन्द्रियमु वै व्वीर्य्यन्त्रिष्टुबिन्द्रियस्यैव व्वीर्य्यस्यावरुद्ध्यै ॥ १८ ॥ द्वादशकपाल सावित्त्रो भवति । द्वादश वै मासाः सँव्वत्सरस्य सँव्वत्सरो व्वा ऽअन्नाद्यमन्न्वायत्तꣳ सँव्वत्सरादेवास्म्मा ऽअन्नाद्यमवरुन्द्धे ॥ १९ ॥ दशकपालो व्वारुणो भवति । दशाक्षरा वै व्विराडन्नं व्विराड्वरुणोऽन्नपतिर्व्वरुणेनैवास्म्मा ऽअन्नमवरुन्द्धे मद्ध्यत ऽएतैः पुरोडाशैः प्प्रचरति मद्ध्यं व्वा ऽएतेषां रूपोनिः स्वादेवैनान्न्योनेः प्प्रजनयति ॥ २० ॥ व्वडवानुशिशुर्द्दक्षिणा भवति । उभयं व्वा ऽएषा जनय-

स्यश्श्वश्चाश्वतरश्चोभयस्य सौत्रामणीष्टिश्च पशुबन्धश्चो-भयस्यैवावरुद्ध्यै ॥ २१ ॥

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ सौत्रामणीग्रहग्रहणादि ]

इन्द्रस्येन्द्रियमन्नस्य रसम् । सोमस्य भक्षꣳ सुरया-सुरो नमुचिरहरत्सोऽश्विनौ च सरस्वतीञ्चोपाधावच्छे-पानोऽस्मि नमुचये न त्वा दिवा न नक्तꣳ हनानि न दण्डेन न धन्वना न पृथेन न मुष्टिना न शुष्केण नार्द्रेणाथ म ऽइदमहार्षीदिदम्म ऽआजिहीर्षथेति ॥ १ ॥ तेऽब्रुवन् । अस्तु नोऽत्राप्यथाहरामेति सह न ऽएतदथाहरतेत्यब्र-वीदिति ॥ २ ॥ तावश्विनौ च सरस्वती च । अपाम्फेनं वज्रमसिञ्चन्न शुष्को नार्द्र ऽइति तेनेन्द्रो नमुचेरासुरस्य व्युष्टायाꣳ रात्रावनुदित ऽआदित्ये न दिवा न नक्त-मिति शिर ऽउदवासयत् ॥ ३ ॥ तस्मादेतदृषिणाभ्यनू-क्तम् । 'अपाम्फेनेन नमुचेः शिर ऽइन्द्रोदवर्त्तयः ॥ विश्वा यदजय स्पृध' ऽइति पाप्मा वै नमुचिः पाप्मानं वाव तद्द्विषन्तम्भ्रातृव्यꣳ हत्वेन्द्रियं वीर्यमस्यावृङ्क्त स यो भ्रातृव्यवान्त्स्यात्स सौत्रामण्या यजेत पाप्मान-मेव तद्द्विषन्तम्भ्रातृव्यꣳ हत्वेन्द्रियं वीर्यमस्य वृङ्क्ते तस्य शीर्षश्छिन्ने लोहितमिश्रꣳ सोमोऽतिष्ठत्तस्मादबी-भत्सन्त त ऽएतदन्धसोर्विपानमपश्यन्त्सोमो राजामृतꣳ

(१) शु० य० सं० १९. ७१। (२) शु० य० सं० १९. ७२।

सुत, ऽइति तेनैनꣳ स्वदयित्वात्मन्नदधत ॥४॥ 'स्वाद्वीन्त्वा स्वादुने'ति सुराꣳ सन्दधाति । स्वदयत्येवैना'न्तीव्रान्तीव्रेणे'तीन्द्रियमेवास्मिन्दधात्य'मृताममृतेने' त्यायुरेवास्मिन्दधाति 'मधुमतीम्मधुमते'ति रसमेवास्यान्दधाति 'सृजामि सꣳ सोमेने'ति सोमरूपमेवैनाङ्करोति ॥ ५ ॥ 'सोमोऽस्यश्विभ्याम्पच्यस्व । सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वे'त्येता वा ऽएतन्देवता ऽअग्रे यज्ञꣳ समभरँस्ताभिरेवैनꣳ सम्भरत्यथो ऽएता ऽएवैतद्देवता भागधेयेन समर्द्धयत्यासुनोति सुत्यायै तिस्रो रात्रीर्वसति तिस्रो हि रात्रीः सोमः क्रीतो वसति सोमरूपमेवैनाङ्करोति ॥ ६ ॥ द्वे वेदी * भवतः । द्वौ वाव लोकावित्याहुर्देवलोकश्चैव पितृलोकश्चेत्युत्तरान्या भवति दक्षिणान्योत्तरो वै देवलोको दक्षिणः पितृलोक ऽउत्तरयैव देवलोकमवरुन्द्धे दक्षिणया पितृलोकम् ॥ ७ ॥ पयश्च सुरा च भवतः । सोमो वै पयोऽन्नꣳ सुरा पयसैव सोमपीथमवरुन्द्धे सुरयान्नाद्यं क्षत्रं वै पयो विट् सुरा सुराम्पूत्वा पयः पुनाति विश ऽएव तत्क्षत्रञ्जनयति विशो हि क्षत्रञ्जायते ॥ ८ ॥ 'वायोः पूतः पवित्रेण । प्रत्यङ्क्सोमो ऽअतिद्रुत, ऽइति सोमातिपूतस्य † पुनाति यथारूपमेवैनम्पुनाती'न्द्रस्य

(१) शु० य० सं० १९. १। (२) शु० य० सं० १९. १। (३) शु० य० सं० १९. १। (४) शु० य० सं० १९. १। (५) शु० य० सं० १९. १। (६) शु० य० सं० १९. १।

* का० श्रौ० सू० १९. ४. १।

(७) शु० य० सं० १९. २।

† मुखेतरच्छिद्रसोमवामिन इत्यर्थः। (८) शु० य० सं० १९, ३।

युज्यः सखे’ति यदेवास्य तेनेन्द्रियं व्वीर्य्यमतिक्रान्तम्भवति तदस्मिन्पुनर्दधाति ॥ ९ ॥ ‘वायोः[1] पूतः पवित्रेण । प्प्राङ्क्सोमो ऽअतिद्रुत’ ऽइति सोमवामिनः पुनाति यथा-रूपमेवैनम्पुनाती‘न्द्रस्य[2] युज्यः सखे’ति यदेवास्य तेनेन्द्रियं व्वीर्य्यमतिक्रान्तम्भवति तदस्मिन्पुनर्दधाति ॥ १० ॥ ‘पुनाति[3] ते परिस्रुत’मिति । समृद्धिकामस्य पुनाति समृद्ध्यै ‘सोमः[4] सूर्य्यस्य दुहिते’ति श्श्रद्धा वै सूर्य्यस्य दुहिता श्श्रद्धयैष सोमो भवति श्श्रद्धयैवैनः सोमङ्करोति ‘व्वारेण[5] शश्श्वता तने’ति व्वालेन ह्येषा पूयते ॥ ११ ॥ ‘ब्रह्म[6] क्षत्रम्पवत’ ऽइति पयः पुनाति । ब्ब्रह्मण ऽएव तत्क्ष-त्रञ्जनयति ब्ब्रह्मणो हि क्षत्रञ्जायते ‘तेजः[7] ऽइन्द्रिय’मिति तेज ऽएवास्मिन्निन्द्रियं व्वीर्य्यन्दधाति ‘सुरया[8] सोम’ ऽइति सुरया हि सोमः ‘सुतः[9] ऽआसुत’ ऽइत्यासुताद्धि सूयते ‘मदाये[10]’ति मदाय वाव सोमो मदाय सुरोभावेव सोमम-दुश्च सुरामदञ्चावरुन्द्धे ‘शुक्रेण[11] देव देवताः पिपृग्ग्धी’ति शुक्रेण देव देवताः प्प्रीणीहीत्त्येवैतदाह ‘रसेना[12]न्नं यज-मानाय धेही’ति रसमेवान्नं यजमाने दधाति पूर्वे पयो-ग्ग्रहा गृह्यन्तेऽपरे सुराग्ग्रहा व्विशन्तत्क्षत्रस्यानुवर्त्मानङ्क-रोति ॥ १२ ॥ ‘कुविदङ्ग[13] यवमन्तो यवञ्चि’दिति । पयो-ग्ग्रहान्गृह्णाति * सोमांशवो वै यवाः सोमः पयः

(१) शु० य० सं० १९. ३। (२) शु० य० सं० १९. ३। (३) शु० य०
सं० १९. ४।(४) शु० य० सं० १९. ४।(५) शु० य० सं० १९. ४।(६–१२) शु०
य० सं० १९. ५।(१३) शु० य० सं० १९. ६।

* का० श्रौ० सू० १९. २. १४।

सोमेनैवैनꣳ सोमङ्करोत्येकया गृह्णात्येकधैव यजमाने श्रियन्दधाति श्रीर्हि पयः ॥ १३ ॥ 'नाना हि वान्देवहितꣳ सदस्कृत'मिति। सुराग्रहान्गृह्णाति नाना हि सोमश्च सुरा च देवहितमिति देवहिते ह्येते नाना सदस्कृतमिति द्वे हि वेदी भवतो 'मा सꣳसृक्षाथाम्परमे व्योम'न्निति पाप्मनैवैनं व्यावर्त्तयति 'सुरा त्वमसि शुष्मिणी'ति सुरामेव सुराङ्करोति 'सोमँ एष'इति सोममेव सोमङ्करोति 'मा मा हिꣳसीः स्वां योनिमाविशन्ती'ति यथायोन्येवैनां व्यावर्त्तयत्यात्मनोऽहिꣳसाया एकया गृह्णात्येकधैव यजमाने यशो दधाति यशो हि सुरा ॥ १४ ॥ क्षत्रं वै पयोग्रहाः विट् सुराग्रहा यदुव्यतिषक्तान्गृह्णीयाद्विशं क्षत्राद्व्यवच्छिन्द्यात्क्षत्रं विशः पापवस्यसङ्कुर्याद्यजस्य व्यृद्धिं व्यतिषक्तान्गृह्णाति विशमेव क्षत्रेण सन्दधाति क्षत्रं विशा पापवस्यसस्य व्यावृत्त्यै यज्ञस्य समृद्ध्यै ॥ १५ ॥ प्राणा वै पयोग्रहाः। शरीरꣳ सुराग्रहा यदुव्यतिषक्तान्गृह्णीयाच्छरीरम्प्राणेभ्यो व्यवच्छिन्द्यात्प्राणाञ्छरीरात्प्रमायुको यजमानः स्याद्व्यतिषक्तान्गृह्णाति शरीरमेव प्राणैः सन्दधाति प्राणाञ्छरीरेणाथो ऽआयुरेवास्मिन्दधाति तस्मात्सौत्रामण्येजानः सर्वमायुरेत्यथो य ऽएवमेतद्वेद ॥ १६ ॥ सोमो वै पयोग्रहाः। अन्नꣳ सुराग्रहा यत्पयोग्रहाश्च सुराग्रहाश्च गृह्यन्ते सोमपीथञ्चैवान्नाद्यञ्चावरुन्द्धे

(१) शु० य० सं० १९. ७। (२) शु० य० सं० १९. ७। (३) शु० य० सं० १९. ७। (४) शु० य० सं० १९. ७। (५) शु० य० सं० १९. ७।

॥ १७ ॥ पशवो वै पयोग्ग्रहाः । अन्नꣳ सुराग्ग्रहा यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्यन्ते पशूꣳश्चैवान्नाद्यञ्चावरुन्द्धे ॥ १८ ॥ ग्राम्म्या वै पशवः पयोग्ग्रहाः । आरण्णयाः सुराग्ग्रहा यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्यन्ते ग्राम्म्याꣳश्चैव पशूनारण्णयाꣳश्चावरुन्द्धे ग्राम्म्येण चान्नेनारण्णयेन च पयोग्ग्रहाञ्छ्रीणाति तस्म्माद्ग्राम्म्याणाम्पशूनाङ्ग्राम्म्यञ्चैवान्नाद्यमारण्णयञ्चावरुद्धम् ॥ १९ ॥ तदाहुः । एतस्यै वा ऽएतदघलायै देवतायै रूपं यदेते घोरा ऽआरण्णयाः पशवो यदेतेषाम्पशूनाꣳल्लोमभिः पयोग्ग्रहाञ्छ्रीणीयाद्रुद्रस्यास्ये पशूनपिदद्ध्यादपशुर्य्यजमानः स्याद्यन्न श्रीणीयादनवरुद्धा ऽअस्य पशवः स्यू रुद्रो हि पशूनामीष्ट ऽइति सुराग्ग्रहानेवैतेषाम्पशूनाꣳल्लोमभिः श्रीणाति सुरायामेव तद्रौद्रन्दधाति तस्म्मात्सुराम्पीत्वा रौद्रमना ऽअथो ऽआरण्णयेष्ष्वेव पशुषु रुद्रस्य हेतिन्दधाति ग्राम्म्याणाम्पशूनामहिꣳसाया ऽअवरुद्धा ऽअस्य पशवो भवन्ति न रुद्रस्यास्ये पशूनपिदधाति ॥ २० ॥ '[1]यो व्याघ्रं विषूचिका । उभौ वृकञ्च रक्षति॥ श्येनम्पतत्रिणꣳ सिꣳहꣳ सेमम्पात्वꣳहसः' ॥ '[2]यदापिपेष मातरम्पुत्रः प्रमुदितो धयन् ॥ एतत्तदग्ने ऽअनृणो भवाम्म्यहतौ पितरौ मये'ति ॥ २१ ॥ अद्ध्वर्युश्च प्रतिप्रस्थाता च । जघनेन वेदिम्प्राञ्चमावृत्तं यजमानꣳ श्येनपत्राभ्यामूर्द्ध्वञ्चावाञ्चञ्च पावयतः प्राणोदानयोस्तद्रूपम्प्राणोदाना-

(१) शु० य० सं० १९. १०। (२) शु० य० सं० १९. ११।

वेवावरुन्द्ध ऽऊर्द्ध्वश्च ह्ययमवाङ् च प्प्राण ऽआत्मानमनु-सञ्चरति 'सम्पृच स्थ सम्मा भद्रेण पृङ्क्ते'ति पयोग्ग्रहा-न्त्सम्मृशति श्रियैवैनं य्यशसा समर्द्धयति 'विपृच स्त्थ वि मा पाप्प्मना पृङ्क्ते'ति सुराग्ग्रहान्न्पाप्प्मनैवैनं व्व्यावर्त्त-यति ॥ २२ ॥

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥



[ ग्रहभक्षणसुरापावनादि ]

इन्द्रस्य वै वृत्र । इन्द्रियाणि व्वीर्य्याणि व्व्युदक्रा-मँस्तानि देवा ऽएतेनैव यज्ञेन पुनः समदधुर्य्यत्पयं। ग्रहाश्च सुराग्ग्रहाश्च गृह्णन्त ऽइन्द्रियाण्ण्येवास्मिमँस्तद्वीर्य्याणि पुनः सन्दधत्युत्तरेऽग्नौ पयोग्ग्रहाञ्जुह्वति शुक्क्रेणैवैनन्तत्सो-मपीथेन समर्द्धयन्ति ॥ १ ॥ स जुहोति 'सुरावन्तम्बर्हिषदꣳ सुवीर'मिति सुरावान्न्वा ऽएष बर्हिषद्यज्ञो यत्सौत्रामणी बर्हिषैवैनं य्यज्ञेन समर्द्धयति 'यज्ञꣳ हिन्न्वन्ति महिषा नमोभि'रित्यृत्त्विजो वै महिषा यज्ञो नम ऽऋत्त्विग्भिरेव यज्ञꣳ समर्द्धयति यज्ञेन यजमान'न्दधानाः सोम'मिति सोम-पीथमेवास्मिन्दधति 'दिवि देवतास्वि'ति दिव्व्येवैनन्दे-वतासु दधति 'मदेमेन्द्र'मिति मदाय वाव सोमो मदाय सुरोभावेव सोममदञ्च सुरामदञ्चावरुन्द्धे 'यजमानाः

(३) शु० य० सं० १९. ११ । (४) शु० य० सं० १९. ११ । (५) शु० य० सं० १९ ३२ । (६) शु० य० सं० १९. ३२ । (७) शु० य० सं० १९. ३२ । (८) शु० य० सं० १९. ३२ । (९) शु० य० सं० १९. ३२ । (१०) शु० य० सं० १९. ३२ ।

स्वर्क्का' ऽइत्यर्क्को * वै देवानामन्नमन्नं यज्ञो यज्ञेनैवैनम-न्नाद्येन समर्द्धयति हुत्वा भक्षयन्ति समृद्धमेवास्य तद्वर्द्ध-यन्ति ॥ २ ॥ स भक्षयति । '[१]यमश्विना नमुचेरासुरा-दधी'त्यश्विनौ ह्येतन्नमुचेरध्याहरताथं 'सरस्व[२]त्यसुनोदि-न्द्रियाये'ति सरस्वती ह्येतमसुनोदिन्द्रियाये'म[३]न्तद्धं शुक्र-म्मधुमन्तमिन्दु'मिति शुक्रो वा ऽएष मधुमानिन्दुर्यत्सोमः 'सो[४]मं राजानमिह भक्षयामी'ति सोम ऽएवास्य राजा भक्षितो भवति दक्षिणेऽग्नौ सुराग्रहाञ्जुहोति पाप्मनैवैन-न्तद्व्यावर्त्तयन्ति ॥ ३ ॥ स जुहोति । 'य[५]स्ते रसः सम्भृत ऽओषधीष्वि'त्यपाञ्च वा ऽएष ऽओषधीनाञ्च रसो यत्सुरापाश्चैवै[६]नमेतदोषधीनाञ्च रसेन समर्द्धयति 'सोमंस्य शुष्मः सुरया सुतस्ये'ति य ऽएव सोमे शुष्मो यः सुरायान्तमेवावरुन्द्धे 'ते[७]न जिन्व यजमानम्मदेने'ति तेन प्प्रीणीहि यजमानम्मदेनेत्येवैतदाह 'सर[८]स्वतीमश्विनावि-न्द्रमग्नि'मिति देवताभिरेव यज्ञं समर्द्धयति देवताभिर्यज्ञेन यजमानं हुत्वा भक्षयन्ति ऽऽसमृद्धमेवास्य तत्समर्द्धयन्ति ॥४॥ स भक्षयति । 'यद[९]त्र रिप्तं रसिनः सुतस्ये'ति सुता-सुतयोरेव रसमवरुन्द्धे 'यदि[१०][११]न्द्रो ऽअपिबच्छचीभि'रितीन्द्रो ह्येतदपिबच्छचीभिर'हन्त[१२]दस्य मनसा शिवेने'त्यशिव ऽइव वा

---

* 'अर्कमन्नं भवत्यर्चति भूतानि' ( निरु० नै० का० ५. ४ )।

(१) शु० य० सं १९. ३४। (२) शु० य० सं० १९. ३४। (३) शु० य० सं० १९. ३४। (४) शु० य० सं० १९. ३४। (५) शु० य० सं० १९. ३३।

( ६ ) 'सुरापाश्चैन०' इति 'ग' 'ज' पुस्तकयोः पाठः।

( ७ ) शु० य० सं० १९. ३३।

( ८ ) शु० य० सं० १९. ३३। ( ९ ) शु० य० सं० १९. ३३। ( १० ) शु० य० सं० १९. ३५। ( ११ ) शु० य० सं० १९. ३५। ( १२ ) शु० य० सं० १९. ३५।

ऽएष भक्षो यत्सुरा ब्ब्राह्मणस्य शिवमेवैनमेतत्त्कृत्वात्मन्धत्ते ‘सोमँ् राजानमिह भक्षयामी’ति सोम ऽएवास्य राजा भक्षितो भवति ॥ ५ ॥ तद्धैतदुन्न्येऽद्ध्वर्य्यवः । राजन्न्यं व्वा व्वैश्यं व्वा परिक्क्रीणन्ति स ऽएतद्भक्षयिष्ष्यतीति तदु तथा न कुर्य्याद्यो ह व्वा ऽएतद्भक्षयति तस्य हैव-म्पितॄन्न्पितामहानेष स्सोमपीथोऽन्न्वेति दक्षिणस्यैवाग्ग्नेस्त्री-नङ्गारान्निर्व्वर्त्त्य बहिष्प्परिधि तदेताभिर्व्व्याहृतिभिर्ज्जुहुयात् ॥ ६ ॥ ‘पितृभ्भ्यः स्वधायिभ्भ्यः स्वधा नम’ ऽइति । पितॄनेव पितृलोके स्वधायान्दधाति ‘पितामहेभ्भ्यः स्वधा-यिभ्भ्यः स्वधा नम’ ऽइति पितामहानेव पितामहलोके स्वधायान्दधाति ‘प्प्रपितामहेभ्भ्यः स्वधायिभ्भ्यः स्वधा नम’ ऽइति प्प्रपितामहानेव प्प्रपितामहलोके स्वधायान्द-धाति ॥ ७ ॥ अप ऽआनीय निनयति । ‘अक्षँन्न्पितर’ ऽइत्त्यन्नाद्यमेवैषु दधात्य‘मीमदन्त पितर’ ऽइति मदयत्त्येवैनान‘तीतृपन्त पितर’ ऽइति तर्प्पयत्त्येवैना‘न्न्पितरः शुन्धद्ध्व’मित्यनुपूर्व्वमेवैनान्त्सर्व्वान्न्पावयति पवित्रं व्वै सौत्रा-मणी ॥ ८ ॥ त्रिभिः पवित्रैः पावयन्ति । त्रयो व्वा ऽइमे लोका ऽएभिरेवैनँल्लोकैः पुनन्ति ॥ ९ ॥ पावमानीभिः पावयन्ति । पवित्रं व्वै पावमान्न्यः पवित्रेणैवैनम्पुनन्ति ॥ १० ॥ तिसृभिस्तिसृभिः पावयन्ति । त्रयो व्वै प्प्राणाः

(१) शु० य० सं० १९. ३५। (२) शु० य० सं० १९. ३६। (३) शु० य० सं० १९. ३६। (४) शु० य० सं० १९. ३६। (५) शु० य० सं० १९. ३६। (६) शु० य० सं० १९. ३६। (७) शु० य० सं० १९. ३६। (८) शु० य० सं० १९. ३६।

प्प्राण ऽउदानो व्व्यानस्तैरेवैनम्पुनन्ति ॥ ११ ॥ नवभिः पावयन्ति । नव वै प्प्राणा प्प्राणैरेवैनम्पुनन्ति प्प्राणेषु पुनः पूतम्प्रतिष्ठापयन्ति ॥ १२ ॥ पवित्रेण पावयन्ति । अजाविकस्य वा ऽएतद्रूपं ग्यत्पवित्रमजाविकेनैवैनम्पुनन्ति ॥ १३ ॥ व्वालेन पावयन्ति । गोऽश्श्वस्य वा ऽएतद्रूपं ग्यद्वालो गोऽश्श्वेनैवैनम्पुनन्ति ॥ १४ ॥ हिरण्ण्येन पावयन्ति । देवानां व्वा ऽएतद्रूपं ग्यद्धिरण्ण्यन्देवाना-मेवैनꣳ रूपेण पुनन्ति ॥ १५ ॥ सुरया पावयन्ति । सुरा हि पूता पूतयैवैनम्पुनन्ति तद्यथा सुरा पूयमाना व्वल्कसेन व्विविच्च्यत ऽएवमेवैतद्यजमानः सर्व्वस्म्मात्पाप्प्मनो निर्म्मुच्च्यते य ऽएवं व्विद्वान्त्सौत्रामण्ण्या यजते यो वैतदेवं व्वेद ॥ १६ ॥ तदाहुः । याजयितव्व्यꣳ सौत्रामण्ण्या३ न याजयितव्व्या३मित्त्यनन्तरायꣳ ह्येवास्य[1] सर्व्वम्पाप्प्मान-मपघ्नन्तीति तदु ह स्म्माह रेवोत्तरा स्त्थपतिः पाटवश्चा-क्रोऽपि प्प्रदानम्प्रदाय याजयितव्व्यमेवात्त्मा वै यज्ञस्य यज-मानोऽङ्गान्न्यृत्विजो यत्र वा ऽआत्त्मा पूतः पूतानि तत्रा-ङ्गान्न्युभय ऽएव पुनत ऽउभये पाप्प्मानमपघ्नते तस्म्मा-दपि प्प्रदानम्प्रदाय याजयितव्व्यमेवेति ॥ १७ ॥ पितृलोकं व्वा ऽएतेऽन्ववयन्ति । ये दक्षिणेऽग्नौ चरन्त्याज्ज्याहुति-ञ्जुहोति यज्ञो वा ऽआज्ज्यं ग्यज्ञादेव यज्ञे प्प्रतितिष्ठन्ति ॥ १८ ॥ स जुहोति । 'ये[2] समानाः समनसः पितरो यम-राज्ज्ये ॥ तेषाँल्लोकः स्वधा नमो यज्ञो देवेषु कल्प्पता'मिति

( १ ) "ह्येवास्मात्" इति 'ग' 'ज' पुस्तकयोः । ( २ ) शु० य० सं० १९. ४५ ।

पितॄनेव यमे परिददात्त्यथो पितृलोकमेव जयति सर्व्वे यज्ञोपवीतानि कृत्त्वोत्तरमग्निमुपसमायन्त्ययं वै लोक ऽउत्तरोऽग्निरस्मिन्नेव लोके प्प्रतितिष्ठन्त्याज्याहुतिञ्जुहोति यज्ञो वा ऽआज्यं य्यज्ञादेव यज्ञे प्प्रतितिष्ठन्ति ॥ १९ ॥ स जुहोति । 'ये[1] समानाः समनसो जीवा जीवेषु मामकाः ॥ तेषाꣳ श्रीर्म्मयि कल्प्पतामस्मिँल्लोके शतꣳ समा' ऽइति स्वानामेव श्श्रियमवरुन्द्धेऽथो ज्ज्योग्ग्जीवातुमेवैषु दधाति पयः समन्न्वारब्धेषु जुहोति प्प्राणो वा ऽअन्नम्पयः प्प्राण ऽएवान्नाद्येऽन्ततः प्प्रतितिष्ठन्ति ॥२०॥ स जुहोति । 'द्वे[2] स्रुती ऽअश्शृणवम्पितॄणामह'मिति द्वे वाव स्रुती ऽइत्त्याहुर्द्देवानाञ्चैव पितॄणाञ्चेति 'ताभ्याम्[3] इदं व्विश्श्वमेजत्समेती'ति ताभ्याꣳ हीदꣳ सर्व्वमेजत्समेति 'यद[4]न्तरा पितरम्मातरञ्चे'त्त्यसौ वै पितेयम्माताभ्यामेव पितॄन्देवलोकमपिनयत्त्येकाकी हुतोच्छिष्टम्भक्षयत्त्येकधैव श्श्रियमात्त्मन्धत्ते श्श्रीर्हि पयः ॥ २१ ॥ स भक्षयति । 'इदꣳ[5] हविः प्प्रजननम्मे ऽअस्त्वि'ति प्प्रजननꣳ हि यदि पयो यदि सोमो 'दशवीर[6]'मिति प्प्राणा वै दश व्वीराः प्प्राणानेवात्त्मन्धत्ते 'सर्व्वगण[7]'मित्त्यङ्गानि वै सर्व्वे गणा ऽअङ्गान्न्येवात्त्मन्धत्ते 'स्वस्तय[8] ऽआत्त्मसनी'त्त्यात्त्मानमेव सनोति

(१) शु० य० सं० १९. ४६ । (२) शु० य० सं० १९. ४७ ! (३) शु० य० सं० १९. ४७ । (४) शु० य० सं० १९. ४७ । (५) शु० य० सं० १९. ४८ । (६) शु० य० सं० १९. ४८ । (७) शु० य० सं० १९. ४८ । (८) शु० य० सं० १९. ४८ । (९) शु० य० सं० १९. ४८ !

'[1]प्रजासनी'ति प्प्रजामेव सनोति 'पशुसनी[2]'ति पशूनेव सनोति 'लोकसनी[3]'ति लोकाय वै यजते तमेव जयत्य'भयसनी[4]'ति स्वर्ग्गो वै लोकोऽभयथं स्वर्ग्ग ऽएव लोकेऽन्ततः प्प्रतितिष्ठत्य'ग्निः [5]प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतोऽस्मासु धत्ते'ति तद्य ऽएवैनमेते याजयन्ति तानेतदाहैतन्मयि सर्वन्धत्तेति हिरण्येन मार्ज्जयन्तेऽमृतं वै हिरण्यममृत ऽएवान्ततः प्प्रतितिष्ठन्ति ॥ २२ ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या १२० ॥



[ सुरानिर्माणादि ]

प्रजापतिर्य्यज्ञमसृजत । तमाहरत्तेनायजत तेनेष्ट्वा रिरिचान ऽइवामन्न्यत स ऽएतं य्यज्ञक्क्रतुमपश्यत्सौत्रामणीन्तेनायजत ततो वै स पुनराप्प्यायत रिच्च्यत ऽइव वा ऽएष यः सोमेन यजते वीव ह्यस्य वित्तं व्वेदो हरन्ति ॥ १ ॥ सोमेनेष्ट्वा सौत्रामण्या यजेत यथा धेनुर्दुग्धा पुनराप्प्यायेतैवꣳ हैव पुनराप्प्यायत ऽआ प्प्रजया पशुभिः प्प्यायते प्प्रत्यस्मिँल्लोके तिष्ठत्यभि स्वर्गँल्लोकञ्जयति य ऽएवं विद्वान्त्सौत्रामण्या यजते यो वैतदेवं व्वेद ॥ २ ॥ तद्धैतदपप्रच्छ । सुप्प्ला सार्ञ्जयः प्प्रतीदर्शमैभावतं यन्न

(१) शु० य० सं० १९. ४८। (२) शु० य० सं० १९. ४८। (३) शु० य० सं० १९. ४८। (४) शु० य० सं० १९. ४८। (५) शु० य० सं० १९. ४८।

दीक्षयेव दीक्षते न सोमाꣳशव ऽइव न्न्युप्प्यन्तेऽथ कथꣳ सौत्रामणी सोमयज्ञो भवतीति ॥ ३ ॥ स होवाच । शिरो वा ऽएतद्यज्ञस्य यद्व्रतमात्त्मा दीक्षैतत्खलु वै व्रतस्य रूपꣳ यत्सत्त्यमेतद्दीक्षायै यच्छ्रद्धा मनो यजमानस्य रूपं व्वाग्ग्यज्ञस्येति ॥ ४ ॥ स यद्वाचा व्रतमुपैति । आत्मन्न्येवैतद्यज्ञस्य शिरः प्प्रतिदधाति सत्त्यꣳ श्रद्धायान्दधाति यजमानꣳ यज्ञे ॥ ५ ॥ तस्म्मादेतस्य यज्ञस्य । व्रतमेव दीक्षा व्वृषो वै व्रतं य्योषा दीक्षा वृषा सत्त्यं य्योषा श्श्रद्धा व्वृषा मनो योषा व्वाग्वृषा पत्न्यै यजमानस्तस्म्माद्यत्रैव पतिस्तत्र जायाथो यज्ञमुख ऽएव तन्न्मिथुनानि करोति प्प्रजात्यै ॥ ६ ॥ एते खलु वा ऽएतस्य यज्ञस्य । सोमाꣳशव ऽइत्त्याहुर्यच्छष्प्पाणि तोक्क्मानि लाजा ऽइति ॥ ७ ॥ प्रातःसवनस्यैतद्रूपम् । यच्छष्प्पाण्ययं व्वै लोकः प्प्रातःसवनꣳ स ऽआश्विन ऽआश्विनेन पयसा प्प्रथमाꣳ रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण प्प्रातःसवनेन समर्द्धयति ॥ ८ ॥ माद्ध्यन्दिनस्यैतत्सवनस्य रूपम् । यत्तोक्क्मान्न्यन्तरिक्षं व्वै माद्ध्यन्दिनꣳ सवनन्तत्सारस्वतꣳ सारस्वतेन पयसा द्वितीयाꣳ रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण माद्ध्यन्दिनेन सवनेन समर्द्धयति ॥ ९ ॥ तृतीयसवनस्यैतद्रूपम् । यल्लाजा द्यौर्व्वै तृतीयसवनꣳ सैन्द्रयैन्द्रेण पयसा तृतीयाꣳ रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण तृतीयसवनेन समर्द्धयति ॥ १० ॥

एकस्यै दुग्धेन । प्रथमाᳬं रात्रिम्परिषिञ्चति द्वयोर्दुग्धेन द्वितीयान्तिसृणान्दुग्धेन तृतीयां यथारूपमेवैनं यथा-देवतᳬं सवनैᳬं समर्द्धयति ॥ ११ ॥ 'परीतो षिञ्चता सुत'-मिति परिषिञ्चति सुत्यायै 'सोमो य ऽउत्तमᳬं हवि'-रित्युत्तमं व्वा ऽएतद्धविर्यत्सोम ऽउत्तममेवैनᳬं हविष्क-रोति 'दधन्न्वा यो नर्यो ऽअप्स्वन्तरे'त्यद्भिश्च ह्येषोऽ-न्तरेण च सूयते 'सुषाव सोममद्रिभि'रित्यद्रिभिर्वै सोमᳬं सूयतेऽद्रिभिरेवैनᳬं सुनोति सोमसुत्यायै ॥ १२ ॥ तदाहुᳬं । उभयोर्व्वा ऽएतद्रूपᳬं सुतस्य चासुतस्य च यत्सौत्रामण्य-पामेष ऽओषधीनाᳬं रसो यत्पयस्तत्सुतस्य रूपमन्नस्यै-ष रसो यत्परिस्रुत्तदासुतस्य रूपमुभाभ्यामेवैनᳬं सवा-भ्याᳬं सुनोत्युभाभ्याᳬं सवाभ्यामवरुन्द्धे ॥ १३ ॥ तदाहुᳬं । यद्ग्रावभिᳬं सोमᳬं सूयतेऽथ कथᳬं सौत्राम-णीति प्रैषाप्रीभिरिति ब्रूयाद्बार्हता वै प्रैषा बार्हता ग्रावाणो ग्रावभिर्वै सोमᳬं सूयते ग्रावभिरेवैनᳬं सुनोति सोमसुत्यायै ॥ १४ ॥ सर्वे पयस्वन्तो भवन्ति । पयसा हि सूयते सर्वे सोमवन्तो भवन्ति सोमरूपतायै सर्वे परिस्रुन्मन्तो भवन्ति परिस्रुता हि सूयते सर्वे घृतवन्तो भवन्त्येतद्वै प्रत्यक्षाद्यज्ञरूपं यद्घृतम्प्रत्यक्षादेवैनं यज्ञरू-पङ्करोति सर्वे मधुमन्तो भवन्त्येतद्वै प्रत्यक्षात्सोमरूपं यन्मधु प्रत्यक्षादेवैनᳬं सोमरूपङ्करोति ॥ १५ ॥ *

(१) शु० य० सं० १९. २। (२) शु० य० सं० १९. २। (३) शु० य० सं० १९. २। (४) शु० य० सं० १९. २।

* शतम् ६३००।

सर्व्वे ऽआश्विना भवन्ति । भैषज्याय सर्व्वे सारस्वता ऽअन्नाद्यस्यैवावरुद्ध्यै सर्व्वे ऽऐन्द्रा इन्द्रियस्यैव व्वीर्य्यस्यावरुद्ध्यै ॥ १६ ॥ यद्वेव सर्व्वे ऽआश्विना भवन्ति । सर्व्वे सारस्वताः सर्व्वे ऽऐन्द्रा ऽएता वा ऽएतन्देवता ऽअग्ग्रे यज्ञꣳ समभरँस्ताभिरेवैनꣳ सम्भरत्यथो ऽएता एवैतद्देवता भागधेयेन समर्द्धयति ॥ १७ ॥ सन्तता याज्यापुरोऽनुवाक्क्या भवन्ति । समानदेवत्त्याः प्प्रजानाꣳ सन्तत्त्या ऽअव्व्यवच्छेदाय सर्व्वा ऽआश्विन्न्यो भवन्ति सर्व्वाः सारस्वत्त्यः सर्व्वा ऽऐन्द्र्यः समानी बन्धुता ॥ १८ ॥ अनुष्टुभ ऽआप्प्रियो भवन्ति । व्वाग्ग्वा ऽअनुष्टुब्व्वाचो वै सोमः सूयते व्वाचैवैनꣳ सुनोति सोमसुत्त्यायै सर्व्वा ऽआश्विन्न्यो भवन्ति सर्व्वाः सारस्वत्त्यः सर्व्वा ऽऐन्द्र्यः समानी बन्धुता ॥ १९ ॥ जागता ऽअनुप्प्रैषा भवन्ति । इयं वै जगत्त्यनया वै सोमः सूयतेऽनयैवैनꣳ सुनोति सोमसुत्त्यायै सर्व्वे ऽआश्विना भवन्ति सर्व्वे सारस्वताः सर्व्वे ऽऐन्द्राः समानी बन्धुता ॥ २० ॥ स वा ऽएष प्प्रत्त्यक्षात्सोमयज्ञ ऽएव यत्सौत्रामणी तं रुयद्येकाकी यजमानो भक्षयेदिष्टिर्व्वैव स्यात्पशुबन्धो वा सर्व्वे ऽऋत्त्विजो भक्षयन्ति सर्व्वे वा ऽऋत्त्विजः सोमम्भक्षयन्ति सोमरूपतायै ॥ २१ ॥ आश्विनमद्ध्वर्य्यवो भक्षयन्ति । अश्विनौ वै देवानामद्ध्वर्य्यू स्वमेवैतद्भागधेयꣳ स्व ऽआयतने भक्षयन्ति ॥ २२ ॥ सारस्वतꣳ होता ब्ब्रह्मा मैत्त्रावरुणः । व्वाग्वै यज्ञस्य होता हृदयम्ब्रह्मा मनो मैत्त्रावरुणः स्वमेवैतद्भागधेयꣳ स्व

ऽआयतने भक्षयन्ति ॥ २३ ॥ ऐन्द्रं यजमानो भक्षयति । ऐन्द्रो वा ऽएष यज्ञो यत्सौत्रामणीन्द्रायतन ऽएष ऽएतर्हि यो यजते स्वमेवैतद्भागधेयꣳ स्व ऽआयतने भक्षयति ॥२४॥ चक्षुर्वा ऽआश्विनो ग्रहः । प्राणः सारस्वतो वागैन्द्र ऽआश्विनात्सारस्वतेऽवनयति चक्षुरेवास्य तत्प्राणैः सन्दधाति सारस्वतादैन्द्रे प्राणानेवास्य तद्वाचा सन्दधात्यथो प्राणानेवास्य तद्वाचि प्रतिष्ठापयति तस्मात्सर्वे प्राणा वाचि प्रतिष्ठिताः ॥२५॥ त्रय आश्विनम्भक्षयन्ति । अध्वर्युः प्रतिप्रस्थाताग्नीध्रस्त्रिवृद्वा ऽइदञ्चक्षुः शुक्लं कृष्णङ्कनीनका यथारूपमेवास्मिँश्चक्षुर्दधति ॥२६॥ त्रयः सारस्वतम् । होता ब्रह्मा मैत्रावरुणस्त्रेधाविहितो वा ऽअयम्प्राणः प्राण ऽउदानो व्यान ऽइति यथारूपमेवास्मिन्प्राणन्दधति ॥ २७ ॥ एकाक्ययैन्द्रं यजमानो भक्षयति । एकधा वा ऽएषा प्राणानाꣳ श्रीर्यद्वागेकधैव वाचꣳ श्रियमात्मन्धत्ते तस्मात्सौत्रामण्येजान ऽएकधा स्वानाꣳ श्रेष्ठो भवत्यथो य ऽएवमेतद्वेद ॥ २८ ॥ ऋतवो वा ऽऋत्विजः मासा भक्षाः षडृत्विजो भक्षयन्ति षड्वा ऽऋतव ऽऋत्विग्भिरेवऽर्तूनवरुन्द्धे ॥ २९ ॥ द्वादश भक्षा भवन्ति । द्वादश वै[2] मासा भक्षैरेव मासानवरुन्द्धे पुनः पुनरभिनिवर्त्तमृत्विजो भक्षयन्ति तस्मादृतवश्च मासाश्चान्योऽन्यमभिनिवर्त्तन्ते ॥ ३० ॥ त्रयोदशं यजमानो भक्षयति । यो ह वा ऽएष त्रयोदशो मास ऽएष ऽएव प्रत्य-

(१) 'ग' 'ज' पुस्तकयोः 'धा' इति । ( २ ) 'ग' 'ज' पुस्तकयोः "वै" इति नास्ति ।

क्षात्सँवत्सर ऽएतमेवाप्त्वावरुन्द्धे स वा ऽएष सँवत्सर ऽएव यत्सौत्रामणी तेन सर्वञ्जयति सर्वमवरुन्द्धे ॥ ३१ ॥ त्रयः पशवो भवन्ति । त्रयो वा ऽइमे लोका ऽइमानेव तैर्ल्लोकानवरुन्द्ध ऽइममेव लोकमाश्विनेनान्तरिक्षꣳ सारस्वतेन दिवमैन्द्रेण यथारूपमेव यथादेवतमिमाँल्लोकाञ्जयति चाव च रुन्द्धे ॥ ३२ ॥ त्रयः पुरोडाशा भवन्ति । त्रयो वा ऽऋतव ऽऋतूनेवं[1] तैरवरुन्द्धे ग्रीष्ममेवैन्द्रेण वर्षाः सावित्रेण हेमन्तं वारुणेन यथारूपमेव यथादेवतमृतूञ्जयति चाव च रुन्द्धे ॥ ३३ ॥ षड्ग्रहा भवन्ति । षड्वा ऽऋतव ऽऋतूनेवं[2] तैरवरुन्द्धे वसन्तग्रीष्मावेवाश्विनाभ्यां वर्षाशरदौ सारस्वताभ्याꣳ हेमन्तशिशिरावैन्द्राभ्यां यथारूपमेव यथादेवतमृतूञ्जयति चाव च रुन्द्धे ॥ ३४ ॥ सन्तता याज्यापुरोऽनुवाक्या भवन्ति । समानदेवत्या ऽऋतूनाꣳ सन्तत्या ऽअव्यवच्छेदाय सर्वाः पुरोऽनुवाक्या भवन्ति सर्वा याज्यास्तस्मादृतवः सर्वे पराञ्चः सर्वे प्रत्यञ्चः सर्वाः प्रथमा भवन्ति सर्वा मद्ध्यमाः सर्वा ऽउत्तमास्तस्मादृतवः सर्वे प्रथमाः सर्वे मद्ध्यमाः सर्व ऽउत्तमाः सर्वेषाङ्ग्रहाणान्द्वे याज्यापुरोऽनुवाक्ये भवतोऽहोरात्रयोस्तद्रूपमहोरात्रे ऽएवावरुन्द्धे तस्मादृतवश्च मासाश्चाहोरात्रयोरेव प्रतिष्ठिताः ॥ ३५ ॥ स वा ऽएष सँवत्सर ऽएव यत्सौत्रामणी । चन्द्रमा ऽएव प्रत्यक्षादादित्यो यजमानस्तस्येयमेव पृथिवी वेदिरन्तरिक्षमुत्तरवेदि

(१–२) "ऋतूनेवैतै॰" इति 'ग' 'ज' पुस्तकयोः ।

द्यौर्ब्बर्हिर्द्दिश ऽऋत्त्विजो व्वनस्प्पतय ऽइद्ध्म ऽआप ऽआज्ज्यमोषधय ऽआहुतयोग्ग्निरेवाग्ग्निः सँव्वत्सरः सꣳस्था तद्वा ऽइदꣳ सर्व्वꣳ सँव्वत्सर ऽएव यदिदङ्किञ्च तस्म्मात्सौत्रामण्ण्येजानः सर्व्वञ्जयति सर्व्वमवरुन्द्धे ॥ ३६ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ राज्ञोऽभिषेकादि ]

त्वष्टा हतपुत्त्रः । अभिचरणीयमपेन्द्रꣳ सोममाहरत्तस्येन्द्रो यज्ञवेशसङ्कृत्वा प्रासहा सोममपिबत्स व्विष्वङ्व्यार्च्छत्तस्य मुखात्प्राणेब्भ्यः श्रीयशसान्यूर्द्ध्वान्युदक्क्रामँस्तानि पशून्प्राविशँस्तस्म्मात्पशवो यशो यशो ह भवति य ऽएवं व्विद्वान्त्सौत्रामण्ण्याभिषिच्च्यते ॥ १ ॥ ततोऽस्म्मा ऽएतमश्श्विनौ च सरस्वती च । यज्ञꣳ समभरन्त्सौत्रामणीम्भैषज्ज्याय तयैनमब्भ्यषिञ्चँस्ततो वै स देवानाꣳ श्रेष्ठोऽभवच्छ्रेष्ठः स्वानाम्भवति य ऽएनयाभिषिच्च्यते ॥२॥ कृष्ण्णाजिनेऽभिषिञ्चति । यज्ञो वै कृष्ण्णाजिनं यज्ञ ऽएवैनमेतदभिषिञ्चति लोमतश्छन्दाꣳसि वै लोमानि च्छन्दःस्वेवैनमेतदभिषिञ्चति ॥ ३ ॥ आसन्द्यामभिषिञ्चति । आसन्दी सद्वै साम्म्राज्ज्यꣳ साम्म्राज्ज्येनैवैनꣳ साम्म्राज्ज्यङ्गमयति ॥ ४ ॥ औदुम्बरी भवति । ऊर्ग्वा ऽउदुम्बर ऽऊर्ज्जैवाद्ध्यभिषिच्च्यते जानुसम्मिता भवति जानुसम्मितो वा ऽअयँल्लोकोऽस्म्मा ऽउ वै लोकाय क्षत्त्रियोऽभिषिच्च्यते क्षत्त्रमु

वा ऽएष भवति यः सौत्रामण्याभिषिच्यते तस्मा-
ज्जानुसम्मितापरिमिता तिरश्ची ॥ ५ ॥ राष्ट्रं वा ऽआ-
सन्दी । अपरिमितसमृद्धमु वै राष्ट्रम्मुञ्जविवयना भवति
यज्ञिया हि मुञ्जा द्वा ऽउत्तरस्यां वेद्याम्पादौ भवतो द्वौ
दक्षिणस्यामयं वै लोक ऽउत्तरा वेदिर्द्दक्षिणा पितृलोकस्त-
देनमुभयोर्ल्लोकयोरध्यभिषिञ्चति ॥ ६ ॥ एतद्ध स्म वै
तद्विद्वानाह । गौरीवितिः शाक्त्यः क्षत्रमिवाह किल वय-
ममुष्मिँल्लोके भविता स्म ऽइति शश्वद्धास्मा ऽऋषभो
याज्ञतुरः प्रोवाच श्विक्नानाᳩ राजा ॥ ७ ॥ स ऽआस-
न्दीमास्तृणाति * । '[1]क्षत्रस्य योनिरसि क्षत्रस्य नाभिर-
सी'ति क्षत्रस्य वा ऽएषा योनिः क्षत्रस्य नाभिः ॥८॥ अथै-
नाङ्कृष्णाजिनेनास्तृणाति † । '[2]मा त्वा हिᳩसीन्मा मा
हिᳩसी'रिति यज्ञो वै कृष्णाजिनं यज्ञस्य चैवात्मनश्चा-
हिᳩसायै ॥ ९ ॥ अथाधिरोहति । वारुण्यर्चा वरुणो वै
देवानाᳩ राजा स्वयैवैनमेतद्देवतयाभिषिञ्चति '[3]निषसाद
धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतु'रिति ॥१०॥
अथ सुवर्णरजतौ रुक्मौ ‡ व्युपास्यति । '[4]मृत्योः पाहि
विद्योत्पाही'ति वृष्टिर्वै विराट् तस्या ऽएते घोरे तन्वौ विद्युच्च

* का० श्रौ० सू० १९. ४. ७ ।
( १ ) शु० य० सं० २०. १ ।
† का० श्रौ० सू० १९. ४. ८ ।
( २ ) शु० य० सं० २०. १ । ( ३ ) शु० य० सं० २०. २ ।
‡ मण्डलाकारो भूषणविशेषो रुक्मः । ( म० भा० )
( ४ ) शु० य० सं० २०. २ ।

ह्रादुनिश्च ततः सुवर्ण्णं ऽएव रुक्क्मो विद्युतो रूपꣳ रजतो ह्रादुनेस्ताभ्यामेवास्म्मै देवताभ्याꣳ शर्म्म यच्छति तस्म्मात्सौत्रामण्ण्येजानस्यैताभ्यान्देवताभ्यान्न शङ्का भवत्यथो य ऽएवमेतद्वेद ॥ ११ ॥ पशूनां वसयाभिषिञ्चति । श्रीर्व्वै पशूनां वसा * श्रियैवैनमेतत्पशूनाꣳ रसेनाभिषिञ्चत्यथो परमं वा ऽएतदन्नाद्यं यद्वसा परमेणैवैनमेतदन्नाद्येनाभिषिञ्चति ॥ १२ ॥ शफग्ग्रहा भवन्ति । शफैर्व्वै पशवः प्रतितिष्ठन्ति प्रतिष्ठामेवैनङ्गमयति त्रयस्त्रिꣳशद्ग्रहा भवन्ति त्रयस्त्रिꣳशद्वै सर्व्वा देवताः सर्व्वाभिरेवैनमेतद्देवताभिरभिषिञ्चति जगतीभिर्ज्जुहोति जागता वै पशवो जगत्यैवास्म्मै पशूनवरुन्द्धे षोडशभिर्ऋग्भिर्ज्जुहोति षोडशकला वै पशवोऽनुकलमेवास्स्मिञ्छ्रियन्दधाति ॥ १३ ॥ 'सीसेन[2] तन्त्रम्मनसा मनीषिण' ऽइति । द्वौ द्वौ[†] समासꣳ हुत्वा सते सꣳस्रवान्त्समवनयत्यहोरात्राण्ण्येवैतदर्द्धमासान्मासानृतून्त्सँवत्सरे प्रतिष्ठापयति तानीमान्यहोरात्राण्ण्यर्द्धमासा मासा ऽऋतवः सँवत्सरे प्रतिष्ठिताः ॥ १४ ॥ वैतसः सतो भवति । अप्सुयोनिर्व्वै वेतस ऽआपो वै सर्व्वा देवताः सर्व्वाभिरेवैनमेतद्देवताभिरभिषिञ्चति ॥१५॥ सर्व्वसुरभ्युन्मर्द्दनम्भवति परमो वा ऽएष गन्धो यत्सर्व्वसुरभ्युन्मर्द्दनङ्गन्धेनैवैनमेतदभिषिञ्चति ॥ १६ ॥ पुरस्तात्प्रत्यङ्ङभिषिञ्चति । पुरस्ताद्धि प्रत्यगन्नमद्यते शीर्षतः शीर्षतो ह्यन्नमद्यत ऽआ मुखादन्ववस्रावयति

---

* मांसपाकभाण्डे स्थितः स्नेहात्मको द्रवविशेषो वसाशब्देनोच्यते ।

† "द्वौ द्वौ हुत्वा शेषान्त्सते करोति" ( का० श्रौ० सू० १९. ४. १३ )

( १ ) 'ग' 'ज' पुस्तकयोः "दधति" इति । ( २ ) शु० य० सं० १९. ८० ।

मुखेन ह्यन्नमद्यते सर्व्वतः परिक्क्रामᳪ सर्व्वाब्भ्य ऽएवास्मिन्नेतद्दिग्भ्योऽन्नाद्यन्दधाति तस्मात्सौत्रामण्ण्येजानस्य सर्व्वासु दिक्ष्वन्नाद्यमवरुद्धम्भवत्त्यथो य ऽएवमेतद्वेद ॥ १७ ॥
आश्विनेन प्प्रथमेन यजुषाभिषिञ्चति । अथ सारस्वतेनाथैन्द्रेणैताभिरेवैनमेतद्देवताभिरभिषिञ्चति तᳪ हैक ऽएताभिश्च देवताभिरभिषिञ्चन्ति भूर्ब्भुवः स्वरित्त्येताभिरु च व्व्याहृतिभिरेता वै व्व्याहृतय ऽइदᳪ सर्व्वन्तदेनमनेन सर्व्वेणाभिषिञ्चाम ऽइति न तथा कुर्य्यादेताभिरेवैनन्देवताभिरभिषिञ्चेदेता ऽउ ह्येव देवता इदᳪ सर्व्वम् ॥ १८ ॥
पुरस्तात्त्स्विष्टकृतोऽभिषिञ्चति । क्षत्रं व्वै स्विष्टकृत्क्षत्रेणैवैनमेतदभिषिञ्चत्त्यन्तरा व्वनस्प्पतिञ्च स्विष्टकृतञ्चाभिषिञ्चति सोमो वै व्वनस्प्पतिरग्निः स्विष्टकृदग्नीषोमाब्भ्यामेवैनमेतत्त्परिगृह्याभिषिञ्चति तस्माद्ये चैतद्विदुर्ये च न त ऽआहुः क्षत्त्रियो वाव क्षत्त्रियस्याभिषेक्तेति ॥ १९ ॥ अथैनञ्जानुमात्त्रे धारयन्ति । अथ नाभिमात्त्रेऽथ मुखमात्त्र ऽएष्ष्वेवास्म्मा ऽएतल्लोकेष्ष्वायतनानि कल्प्पयत्त्यभिषेको व्वा ऽएष यद्राजपेयमभिषेकः सौत्रामणी तद्यथैवादो व्वाजपेये यूपᳪ रोहति तदेवैतद्रूपङ्क्रियते ॥ २० ॥ [अर्धः प्रपाठकः ॥५६॥] तदाहुः । प्प्रेव व्वा ऽएषोऽस्म्माल्लोकाच्च्यवते यः सौत्रामण्ण्याभिषिच्च्यत ऽइति कृष्ण्णाजिने प्प्रत्त्यवरोहति यज्ञो वै कृष्ण्णाजिनं स्वज्ञ ऽएवान्ततः प्प्रतितिष्ठति ॥ २१ ॥ 'प्रति क्षत्रे प्प्रतितिष्ठामि राष्ट्रे' ऽइति । क्षत्त्र

(१) शु॰ य॰ सं॰ २०. १०।

ऽएव राष्ट्रे प्प्रतितिष्ठति क्षत्राद्राष्ट्रादप्रभ्रꣳशाय 'प्प्रत्य-श्वेषु[1] प्प्रतितिष्ठामि गोषु'ति गोऽश्वव ऽएव प्प्रतिति-ष्ठति गोऽश्वादप्रभ्रꣳशाय 'प्प्रत्यङ्गेषु[2] प्रतितिष्ठाम्म्या-त्म'न्नित्यङ्गेष्वेवात्मन्प्रतितिष्ठत्यङ्गेभ्य ऽआत्मनोऽप्रभ्रꣳ-शाय 'प्प्रति प्प्राणेषु[3] प्प्रतितिष्ठामि पुष्ट' ऽइति प्प्राणे-ष्वेव पुष्टे प्प्रतितिष्ठति प्प्राणेभ्यः पुष्टादप्रभ्रꣳशाय 'प्प्रति द्यावापृथिव्व्योः[4] प्प्रतितिष्ठामि यज्ञ' ऽइति तदनयो-र्द्यावापृथिव्व्योः प्प्रतितिष्ठति ययोरिदꣳ सर्वमधि ॥ २२ ॥ अथ साम गायति । क्षत्रं वै साम क्षत्रेणैवैनमेतदभिषि-ञ्चत्यथो साम्म्राज्यं वै साम साम्म्राज्येनैवैनꣳ साम्म्राज्य-ङ्गमयति सर्वेषां वा ऽएष वेदानाꣳ रसो यत्साम सर्वेषा-मेवैनमेतद्वेदानाꣳ रसेनाभिषिञ्चति ॥ २३ ॥ बृहत्याङ्गा-यति । बृहत्यां वा ऽअसावादित्यः श्रियाम्प्रतिष्ठायाम्प्रतिष्ठि-तस्तपति बृहत्यामेवैनमेतच्छ्रियाम्प्रतिष्ठायाम्प्रतिष्ठापयति ॥२४॥ ऐन्द्र्याम्बृहत्याङ्गायति *। ऐन्द्रो वा ऽएष यज्ञो यत्सौ-त्रामणीन्द्रायतन ऽएष ऽएतर्हि यो यजते स्व ऽएवैनमेत-दायतनेऽभिषिञ्चति ॥ २५ ॥ अथ यस्म्मात्सꣳशानानि नाम । एतैर्वै सामभिर्देवा ऽइन्द्रमिन्द्रियाय वीर्याय समश्यꣳस्तथो ऽएवैतमृत्विजो यजमानमेतैरेव सामभिरि-न्द्रियाय वीर्याय सꣳश्यन्ति सꣳश्रवसे विश्रवसे सत्य-

---

(१) शु० य० सं० २०. १० । (२) शु० य० सं० २०. १० । (३) शु० य० सं० २०. १० । (४) शु० य० सं० २०. १० ।

* का० श्रौ० सू० १९. ५. २ ।

इश्रवसे इश्रवस ऽइति सामानि भवन्त्येष्वेवैनमेतल्लोकेषु इश्रावयन्ति चतुर्न्निधनम्भवति चतस्रो वै दिशः सर्व्वास्वे-वैनमेतद्दिक्षु प्प्रतिष्ठापयन्ति सर्व्वे निधनमुपावयन्ति संविदाना ऽएवास्मिञ्छ्रियन्दधति ॥ २६ ॥ तदाहुः । यदेत-त्साम गीयतेऽथ क्वैतस्य साम्म्न ऽउक्क्थङ्का प्प्रतिष्ठा व्यृद्धꣳ हि तद्यत्स्तुतमननुशस्तमिति ॥ २७ ॥ त्रया देवा ऽएकादशेति । एतद्वा ऽएतस्य साम्म्न ऽउक्क्थमेषा प्प्रतिष्ठा ॥ २८ ॥ अथो 'त्रया[1] देवा ऽएकादशे'ति । त्रयस्त्रिꣳशङ्गृह्णुहोति त्रया हि देवा ऽएकादश 'त्रयस्त्रि[2]ꣳ-शाः सुराधस'[3] ऽइति त्रयस्त्रिꣳशद्धि देवा 'बृह[4]स्प्पतिपुरो-हिता' ऽइति ब्रह्म वै बृहस्प्पतिर्ब्रह्मपुरोहिता ऽइत्त्येवैतदाह 'देव[5]स्य सवितुः सव' ऽइति देवेन सवित्रा प्प्रसूता ऽइत्त्ये-वैतदाह 'देवा[7] देवैरवन्तु मे'ति देवा ह्येतन्देवैरभिषिञ्चन्ति ॥ २९ ॥ 'प्रथ[6]मा द्वितीयै'रिति । प्प्रथमा ह्येतन्द्द्वितीयैर-भिषिञ्चन्ति 'द्वितीया[8]स्तृतीयै'रिति द्वितीया ह्येतन्तृतीयै-रभिषिञ्चन्ति 'तृतीया[9]ः सत्त्येने'ति तृतीया ह्येतꣳ सत्त्ये-नाभिषिञ्चन्ति 'स[10]त्त्यं यज्ञेने'ति सत्त्यꣳ ह्येतं यज्ञेना-भिषिञ्चति 'यज्ञो य[11]जुर्भि'रिति यज्ञो ह्येतं यजुर्भिर-भिषिञ्चति 'य[11]जूꣳषि सामभि'रिति यजूꣳषि ह्येतꣳ साम-

(१) शु० य० सं० २०. ११। (२) शु० य० सं० २०. ११। (३) शु० य० सं० २०. ११। (४) शु० य० सं० २०. ११। (५) शु० य० सं० २०. ११। (६) शु० य० सं० २०. १२। (७) शु० य० सं० २०. १२। (८) शु० य० सं० २०. १२। (९) शु० य० सं० २०. १२। (१०) शु० य० सं० २०. १२। (११) शु० य० सं० २०. १२।

भिरभिषिञ्चन्ति '[1]सामान्यृग्भि'रिति सामानि ह्येतमृग्भि-
रभिषिञ्चन्त्यृ'चः पुरो[2]ऽनुवाक्याभि'रित्यृचो ह्येतम्पुरोऽनु-
वाक्याभिरभिषिञ्चन्ति 'पुरोऽ[3]नुवाक्या याज्याभि'रिति
पुरोऽनुवाक्या ह्येतं य्याज्याभिरभिषिञ्चन्ति '[4]य्याज्या
वषट्कारै'रिति य्याज्या ह्येतं वषट्कारैरभिषिञ्चन्ति 'व[5]षट्-
कारा ऽआहुतिभि'रिति वषट्कारा ह्येतमाहुतिभिरभिषिञ्च-
न्त्या'हु[6]तयो मे कामान्त्समर्द्धयन्तु भूः स्वाहे'ति तदेनमेता-
भिर्द्देवताभिः परोऽवरमभिषिच्याथास्मा ऽआहुतिभिः
सर्व्वान्कामान्त्समर्द्धयत्यथर्त्विक्षूपहवमिष्ट्वा भक्षयत्यृतवो
वा ऽऋत्विज ऽऋतुष्वेवैतदुपहवमिच्छते ॥ ३० ॥ स भक्ष-
यति । '[7]लोमानि प्प्रयतिर्म्मम त्वङ्म ऽआनतिरागतिः ॥
माꣳसम्म ऽउपनतिर्व्वस्वस्थि मज्जा म ऽआनति'रिति प्प्रेव
वा ऽएष लोकाꣳश्च देवताश्च विशति यः सौत्रामण्या-
भिषिच्यते तदेतदवान्तरामात्मानमुपह्वयते तथा कृत्स्न ऽएव
सर्व्वतनूः साङ्गः सम्भवति ॥ ३१ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इत्यष्टमोऽध्यायः ॥ ८ ॥

[ सौत्रामणीशेषः ]

एतस्माद्वै यज्ञात्पुरुषो जायते । स यद्ध वा ऽअ-
स्मिँल्लोके पुरुषोऽन्नमत्ति तदेनममुष्मिँल्लोके प्प्रत्यत्ति स

(१) शु० य० सं० २०. १२। (२) शु० य० सं० २०. १२। (३) शु० य० सं० २०. १२। (४) शु० य० सं० २०. १२। (५) शु० य० सं० २०. १२। (६) शु० य० सं० २०. १२। (७) शु० य० सं० २०. १३।

वा ऽएष परिस्रुतो यज्ञस्तायतेऽनाद्या वै ब्राह्मणेन परि-
स्रुत्स ऽएतस्मादनाद्याज्जायते तद्ध हामुष्मिँल्लोकेऽन्नन्न
प्रत्यत्ति तस्मादेष ब्राह्मणयज्ञ ऽएव यत्सौत्रामणी ॥ १ ॥
तस्य लोमान्येव शष्पाणि । त्वक्तोक्मानि माꣳसँल्लाजा
ऽअस्थि कारोतरो मज्जा मासरꣳ रसः परिस्रुन्नग्नहुल्लो-
हितꣳ रेतः पयो मूत्रꣳ सुरोवध्यं बल्कसम् ॥ २ ॥ हृदय-
मेवास्यैन्द्रः पुरोडाशः । यकृत्सावित्रः क्लोमा वारुणो
मतस्ने ऽएवास्याश्वत्थश्च पात्रमौदुम्बरश्च पित्तन्नैयग्रोध-
मान्त्राणि स्थाल्यो गुदा ऽउपशयानि श्येनपत्रे प्लीहा-
सन्दी नाभिः कुम्भो वनिष्ठुः प्लाशिः शतातृण्णा तद्यत्सा
बहुधा वितृण्णा भवति तस्मात्प्लाशिर्बहुधा विकृत्तो
मुखꣳ सतञ्जिह्वा पवित्रञ्चप्प्यम्पायुर्वस्तिर्वालः ॥ ३ ॥
अङ्गान्येवास्याश्विनः पशुः । आत्मा सारस्वतो रूपमैन्द्र
ऽऋषभस्तस्मादाहुर्गावः पुरुषस्य रूपमित्यायुर्हिरण्य-
न्तच्छतमानम्भवति तस्माच्छतायुः पुरुषः ॥ ४ ॥ चक्षुषी
ऽएवास्याश्विनौ ग्रहौ । पक्ष्माणि गोधूमसक्तवश्च
कुवलसक्तवश्च नासिके ऽएवास्य सारस्वतौ ग्रहावथ
यानि नासिकयोर्ल्लोमानि तान्युपवाकसक्तवश्च बदरसक्त-
वश्च श्रोत्रे ऽएवास्यैन्द्रौ ग्रहावथ यानि कर्ण्णयोर्ल्लोमानि
यानि च भ्रुवोस्तानि यवसक्तवश्च कर्कन्धुसक्तवश्च
॥ ५ ॥ अथ यान्युपस्थे लोमानि । यानि चाधस्तात्तानि

(१) 'सर्जत्वक्त्रिफलाशुण्ठीपुनर्नवाचतुर्जातकपिप्पलीगजपिप्पलीवंशायकावृहच्छत्राचित्रकेन्द्र-
वारुण्यश्वगन्धाधान्यकयवानीजीरकद्वयहरिद्राद्वयमिस्र्यवव्रीहय एकीकृता नग्नहुः' (म० भा०)।

ठ्वृकलोमान्न्यथ यान्न्युरसि लोमानि यानि च निकक्ष-योस्तानि ठ्याग्घलोमानि केशाश्च श्म्मश्रूणि च सिह्ह-लोमानि ॥ ६ ॥ त्रयः पशवो भवन्ति । त्रेधाविहितो वा ऽअयम्पुरुषस्यात्मात्मानमेवास्य तैः स्पृणोति यदुवाङ्ना-भेस्तदाश्श्विनेन यदूर्द्ध्वन्नाभेरवाचीनह्ह शीर्ष्णस्तत्सारस्वतेन शिर ऽऐन्द्रेण यथारूपमेव यथादेवतमात्मानम्मृत्यो स्पृत्वा-मृतङ्कुरुते ॥ ७ ॥ त्रयः पुरोडाशा भवन्ति । त्रेधाविहितं वा ऽइदम्पुरुषस्य व्वयो व्वय ऽएवास्य तैः स्पृणोति पूर्ववयसमे-वैन्द्रेण मद्ध्यमवयसह्ह सावित्रेणोत्तमवयसं वारुणेन यथा-रूपमेव यथादेवतं व्वयो मृत्यो स्पृत्वामृतङ्कुरुते ॥ ८ ॥ षड्ग्रहा भवन्ति । षड्वा ऽइमे शीर्षन्प्राणाः प्प्राणानेवास्य तैः स्पृणोति चक्षुषी ऽएवाश्श्विनाभ्यान्नासिके सारस्व-ताभ्याᳬं श्रोत्रे ऽऐन्द्राभ्यां य्यथारूपमेव यथादेवत-म्प्राणान्म्मृत्यो स्पृत्वामृतान्कुरुते ॥ ९ ॥ सन्तता याज्या-पुरोऽनुवाक्क्या भवन्ति । समानदेवत्याः प्प्राणानाᳬं सन्तत्या ऽअव्व्यवच्छेदाय सर्व्वाः पुरोऽनुवाक्क्या भवन्ति सर्व्वा याज्यास्तस्म्मात्प्राणाः सर्व्वे पराञ्चः सर्व्वे प्प्रत्यञ्चः सर्व्वाः प्प्रथमा भवन्ति सर्व्वा मद्ध्यमाः सर्व्वा ऽउत्तमास्त-स्म्मात्प्राणाः सर्व्वे प्प्रथमाः सर्व्वे मद्ध्यमाः सर्व्व ऽउत्तमाः सर्व्वेषाङ्ग्रहाणान्द्वे याज्यापुरोऽनुवाक्क्ये भवतः प्प्राणो दानयोस्तद्रूपम्प्राणोदानावेवावरुन्द्धे तस्म्मात्सर्व्वे प्प्राणा प्प्राणोदानयोरेव प्प्रतिष्ठिताः ॥ १० ॥ स वा एष ऽआ

---

(१) "मात्मानम्मृत्यो स्पृत्वामृतङ्कुरुते" इति 'ग' 'ज' पुस्तकयोः ।

त्मैव यत्सौत्रामणी। मन ऽएव प्रत्यक्षाद्वाग्यजमानस्त-स्यात्मैव वेदिः प्रजोत्तरवेदिः पशवो बर्हिरङ्गान्यृत्विजो-ऽस्थीनीद्ध्म ऽआज्यम्मज्जा मुखमग्निरन्नमाहुतिर्वयः सᳫंस्था तस्मात्सौत्रामण्येजानो वय ऽउपगच्छति ॥११॥ तद्यौ ह वा ऽइमौ पुरुषाविवाक्ष्योः। एतावेवाश्विनावथ यत्कृष्णन्तत्सारस्वतं यच्छुक्लन्तदैन्द्रन्तद्यदाश्विने पशौ सत्यथैता देवताः सह यजत्येतान्न्येवैतत्सार्द्धं꣡ङ्कृत्वात्मन्धत्ते ॥ १२ ॥ मन ऽएवेन्द्रः। वाक्सरस्वती श्रोत्रे ऽअश्विनौ यद्वै मनसा ध्यायति तद्वाचा वदति यद्वाचा वदति तत्कर्णाभ्याᳫंशृणोति तद्यत्सारस्वते पशौ सत्यथैता देवताः सह यजत्येतान्न्येवैतत्सार्द्धं꣡ङ्कृत्वात्मन्धत्ते ॥ १३ ॥ प्राण ऽएवेन्द्रः। जिह्वा सरस्वती नासिके ऽअश्विनौ यद्वै प्राणेनान्नमात्मन्प्रणयते तत्प्राणस्य प्राणत्वञ्जिह्वया वा ऽअन्नस्य रसं विजानाति नासिके ऽउ वै प्राणस्य पन्थास्तद्यदैन्द्रे पशौ सत्यथैता देवताः सह यजत्येता-न्न्येवैतत्सार्द्धं꣡ङ्कृत्वात्मन्धत्ते ॥ १४ ॥ हृदयमेवेन्द्रः। यकृ-त्सविता क्लोमा वरुणस्तद्यदैन्द्रे पुरोडाशे सत्यथैता देवताः सह यजत्येतान्न्येवैतत्सार्द्धं꣡ङ्कृत्वात्मन्धत्ते ॥ १५ ॥ प्राण ऽएव सविता। व्यानो वरुणः शिश्नमिन्द्रो यद्वै प्राणेनान्नमत्ति तद्व्यानेन व्यनिति शिश्नेन वा ऽअन्नस्य रसः रेतः सिञ्चति तद्यत्सावित्रे पुरोडाशे सत्यथैता देवताः सह यजत्येतान्न्येवैतत्सार्द्धं꣡ङ्कृत्वात्मन्धत्ते ॥ १६ ॥ योनिरेव वरुणः। रेत ऽइन्द्रः सवितैव रेतसः प्रजनयिता

तद्यद्वारुणे पुरोडाशे सत्यथैता देवताः सह यजत्येताभ्य एवैतत्सार्द्धं संवत्सरमन्धत्ते स य एवमेतद्वेदैता एव देवता अनुसम्भवत्येता देवता अनु प्रजायत आ प्रजया पशुभिः प्यायते प्रत्यस्मिँल्लोके तिष्ठत्यभि स्वर्गँल्लोकञ्जयति य एवं विद्वान्त्सौत्रामण्या यजते यो वैतदेवं वेद ॥ १७ ॥

नवमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अवभृथेष्टिः ]

अवभृथमिष्ट्वा यन्ति । अवभृथं वै सोमनेष्ट्वा यन्ति सोम एष यत्सौत्रामणी ॥ १ ॥ 'यद्देवा देवहेडन'मिति । देवकृतादेवैनमेनसो मुञ्चति 'यदि दिवा यदि नक्त'मिति यदेवाहोरात्राभ्यामेनः करोति तस्मादेवैनम्मुञ्चति 'यदि जाग्रद्यदि स्वप्न' इति मनुष्या वै जागरितम्पितरः सुप्तस्मनुष्यकिल्बिषाच्चैवैनम्पितृकिल्बिषाच्च मुञ्चति ॥ २ ॥ 'यद्ग्रामे यदरण्य' इति । ग्रामे वा ह्यरण्ये वैनः क्रियते तस्मादेवैनम्मुञ्चति 'यत्सभाया'मिति सभ्यादेवैनमेनसो मुञ्चति 'यदिन्द्रिय' इति दैवादेवैनमेनसो मुञ्चति 'यच्छूद्रे यदर्ये यदेनश्चकृमा वयं यदेकस्याधि धर्म्मणि तस्यावयजनमसी'ति सर्वस्मादेवैनमेतस्मादेनसो मुञ्चति ॥ ३ ॥ 'यदापो अघ्न्या इति । वरुणेति

(१) शु० य० सं० २०. १४। (२) शु० य० सं० २०. १५। (३) शु० य० सं० २०. १६। (४) शु० य० सं० २०. १७। (५) शु० य० सं० २०. १७। (६) शु० य० सं० २०. १७। (७) शु० य० सं० २०. १७। (८) शु० य० सं० २०. १८।

शपामहे ततो वरुण नो मुञ्चे'ति वरुण्याद्देवैनमेनसो मुञ्चत्य-
'वभृथ निचुम्पुण निचेरुरसि निचुम्पुण' ऽइति यो ह वा ऽअ-
यमपामावर्त्तः स हावभृथः स हैष वरुणस्य पुत्रो वा भ्राता
वा तमेवैतत्स्तौत्य'वे देवैर्देवकृतमेनो यक्षी'ति देवकृतमेवैनो-
ऽवयजते'ऽव मर्त्यैर्म्मर्त्यकृत'मिति मर्त्यकृतमेवैनोऽवयजते
'पुरुराव्णो देव रिषस्पाही'ति सर्व्वाभ्यो मार्त्तिभ्यो
गोपायेत्येवैतदाह ॥ ४ ॥ 'समुद्रे ते हृदयमप्स्वन्त'रिति ।
आपो वै समुद्रो रसो वा ऽआपस्तदेनमेनेन रसेन
सꣳसृजति 'सन्त्वा विशन्त्वोषधीरुताप' ऽइति तदेन-
मेतेनोभयेन रसेन सꣳसृजति यश्चौषधिषु यश्चाप्सु
द्वौ विक्रमा ऽउदङ्ङुत्क्रामत्येतावती वै मनुष्ये जूति-
र्य्यावान्विक्रमस्तद्यावत्येवास्मिञ्जूतिस्तयैव पाप्मानं विज-
हाति ॥ ५ ॥ 'सुमित्रिया न ऽआप ऽओषधयः सन्त्वि'ति ।
अञ्जलिनाप ऽउपाचति वज्रो वा ऽआपो वज्रेणैवैतन्मित्र-
धेयङ्कुरुते 'दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि
यञ्च वयन्द्विष्म' ऽइति यामस्य दिशन्द्वेष्यः स्यात्तान्दि-
शम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ ६ ॥ 'द्रुपदादिव
मुमुचानः । स्विन्नः स्नातो मलादिव ॥ पूतम्पवित्रेणेवाज्य-
मापः शुन्धन्तु मैनस' ऽइति वासोऽपप्लावयति यथे-
षीकाम्मुञ्जाद्विवृहेदेवमेनꣳ सर्व्वस्मात्पाप्मनो विवृहति

(१) शु० यं० सं० २०. १८ । (२) शु० य० सं० २०. १८ । (३) शु० यं० सं० २०. १८ । (४) शु० यं० सं० २०. १८ । (५) शु० य० सं० २०. १९. (६) शु० यं० सं० २०. १९ । (७) शु० यं० सं० २०. १९. (८) शु० यं० सं० २०. १९ । (९) शु० यं० सं० २०. २

स्न्नाति तम ऽएवापहते ॥ ७ ॥ 'उद्वयन्तमसस्प्परी'ति । पाप्प्मा वै तमः पाप्प्मानमेव तमोऽपहते 'स्वः पश्श्यन्त ऽउत्तर'मित्त्ययं वै लोकोऽद्धथ ऽउत्तरोऽस्म्मिन्नेव लोके प्प्रतितिष्ठति 'देवन्देवत्रा सूर्य्यमगन्म ज्योतिरुत्तम'मिति स्वर्ग्गो वै लोकः सूर्य्यो ज्योतिरुत्तमꣳ स्वर्ग्ग ऽएव लोकेऽन्ततः प्प्रतितिष्ठत्त्यनपेक्षमेत्त्याहवनीयमुपतिष्ठते ॥ ८ ॥ 'अपो ऽअद्यान्वचारिष'मिति । अपामेव रसमवरुन्द्धे 'रसेन समसृक्ष्महि'त्त्यपामेव रसमात्त्मन्धत्ते 'पयस्वानग्न ऽआगमन्तम्मा सꣳसृज वर्च्चसा प्प्रजया च धनेन चे'त्त्याशिषमेवैतद्वाशास्ते ॥ ९ ॥ 'एधोऽस्येधिषीमही'ति समिधमादत्ते * । एधो ह वा ऽअग्नेः समि'त्त्समिदसि तेजोऽसि तेजो मयि धेही'त्त्याहवनीये समिधमब्भ्यादधात्त्यग्निमेवैतया समिन्द्धे स ऽएनꣳ समिद्धस्तेजसा समिन्द्धे ॥ १० ॥ आदित्त्यञ्चरुं ष्वक्ष्यमाणो निर्व्वपति । आदित्त्यमीजान ऽइयं वा अदितिरस्यामेव यज्ञन्तनुतेऽस्यामिष्ट्वा प्प्रतितिष्ठति धेनुर्द्दक्षिणेयं वै धेनुरिमामेव सर्व्वान्कामान्दुहे वत्त्सम्पूर्व्वस्यान्दुदाति मातरमुत्तरस्यां ष्वदा वै वत्त्सो मातरन्धयत्त्यथ सा प्प्रत्ता दुहे प्प्रत्तामेवेमाꣳ सर्व्वान्कामान्दुहे ॥ ११ ॥ तदाहुः । प्रेव वा ऽएषोऽस्म्मा-

(१) शु० य० सं० २०. २१ । (२) शु० य० सं० २०. २१ । (३) शु० य० सं० २०. ११ । (४) शु० य० सं० २०. २२ । (५) शु० य० सं० २०. २२ । (६) शु० य० सं० २०. २२ । (७) शु० य० सं० २०. २३ । (८) शु० य० सं० २०. २३ ।

* का० श्रौ० सू० १९. ५. १९ ।

ल्लोकाच्च्यवते योऽपोऽवभृथमभ्यवैतीत्यवभृथादुदेत्य मैत्रावरुण्या पयस्यया यजतेऽयं वै लोको मित्रोऽसौ वरुणो यदेवेदमन्तरेण तत्पयस्या तद्यन्मैत्रावरुण्या पयस्यया यजत ऽएष्वेवैतल्लोकेषु प्रतितिष्ठति प्राणो वै मित्रोऽपानो वरुणोऽन्नमेव पयस्या तद्यन्मैत्रावरुण्या पयस्यया यजते प्राण ऽएवान्नाद्येऽन्ततः प्रतितिष्ठति ॥१२॥

नवमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ सौत्रामण्यर्थवादः ]

दुष्टरीतुर्ह पौᳬंसायनः । दशपुरुषᳬं राज्यादपरुद्ध ऽआस रेवोत्तरसमु ह पाटवञ्चाक्रᳬं स्थपतिᳬं सृञ्जया ऽअपरुरुधुः ॥ १ ॥ स होवाच । दुष्टरीतुम्पौᳬंसायनᳬं सौत्रामण्या त्वा याजयानि यदिदᳬं सृञ्जयेषु राष्ट्रन्त्वयि धास्यामीति तथेति तयैनमयाजयत् ॥ २ ॥ तदु ह बल्हिकः प्रातिपीयः शुश्राव । कौरव्यो राजा यो ह वा ऽअयन्दुष्टरीतुः पौᳬंसायनो दशपुरुषᳬं राज्यादपरुद्धोऽभूत्तमयञ्चाक्रः स्थपतिः सौत्रामण्या याजयिष्यति यदिदᳬं सृञ्जयेषु राष्ट्रन्तद्धास्मिन्धास्यतीति ॥ ३ ॥ स होवाच । तन्वा ऽअहन्तं वेदिष्यामि यदि स तस्मिन्राष्ट्रन्धास्यति बहिर्द्धा वैनᳬं राष्ट्राद्धास्यतीति स ऽआजगाम यस्यां वेलायाᳬं ग्रहा गृह्यन्ते ॥ ४ ॥ स होवाच । स्थपते चाक्र नाहवनीये सुरा होतव्येत्या-

हुर्नान्यत्राहवनीयाद्यद्याहवनीये सुराꣳ होष्यसि पाप-
वस्यसङ्करिष्यसि जामि यज्ञस्य यद्यन्यत्राहवनीयाद्बहि-
र्धैनꣳ राष्ट्राद्धास्यसि नैनꣳ राष्ट्रे धास्यसि नास्मि-
न्राष्ट्रन्धास्यसीति ॥ ५ ॥ स होवाच । नाहवनीये सुराꣳ
होष्यामि नान्यत्राहवनीयान्न पापवस्यसङ्करिष्यामि
न जामि यज्ञस्य नैनम्बहिर्द्धा राष्ट्राद्धास्यामि राष्ट्र
ऽएनन्धास्यामि राष्ट्रमस्मिन्धास्यामीति ॥ ६ ॥ स
होवाच । कथꣳ हि करिष्यसी३ ऽइति स हैतदुवा-
चासुरेषु वा ऽएषोऽग्रे यज्ञ आसीत्सौत्रामणी स
देवानुपप्रेत्याऽप ऽआगच्छत्तमापः प्रत्यनन्दँस्तस्मादु
श्रेयाꣳसमागतम्प्रत्येव नन्दन्ति तꣳ होचुरेह्येव
भगव ऽइति ॥ ७ ॥ स होवाच । बिभेमि वै प्रणयत
मेति कस्माद्भगवो बिभेषीत्यसुरेभ्य ऽइति तथेति तमापः
प्राणयँस्तस्माद्यो वधत्रो भवति स बिभ्यतम्प्रण-
यति यदापः प्राणयँस्तस्मादापः प्रणीतास्तत्प्रणीतानाम्प्र-
णीतात्वम्प्रति ह तिष्ठति य ऽएवमेतत्प्रणीतानाम्प्रणीतात्वं
वेद ॥ ८ ॥ तदिष्टाः प्रयाजा ऽआसुः । अपर्य्यग्निकृत-
मथासुरा ऽअन्वाजग्मुस्ते देवाः पर्य्यग्निनैवासुरान्त्स-
पत्नान्भ्रातृव्यान्यज्ञादन्तरायँस्तथो ऽएवैष ऽएतत्पर्य्य-
ग्निनैव द्विषन्तम्भ्रातृव्यं यज्ञादन्तरेति ॥ ९ ॥ देवयो-
निर्वा ऽएष यदाहवनीयः । तस्यैतावमृतपक्षौ यावेताव-
भितोऽग्नी तद्यदाहवनीये यजन्तन्न्वते देवयोनावेवैतद्देवे-
भ्यो यजन्तन्न्वत ऽउप हैनम्पुनर्य्यज्ञो नमति नास्माद्यज्ञो

व्यवच्छिद्यते य ऽएवमेतद्वेद यस्य चैवं विदुष ऽएतत्कर्म्म
क्रियते ॥ १० ॥ उत्तरेऽग्नौ पयोग्रहाञ्जुह्वति । उत्तरेऽग्नौ
पशूंश्रपयन्ति पशूनेव तन्मर्त्यान्त्सतोऽमृतयोनौ दधाति
मर्त्यान्त्सतोऽमृतयोनेः प्रजनयत्यप ह वै पशूनाम्पुन-
र्म्मृत्युञ्जयति नास्माद्यज्ञो व्यवच्छिद्यते य ऽएवमेतद्वेद
यस्य चैवं विदुष ऽएतत्कर्म्म क्रियते ॥ ११ ॥ दक्षिणेऽग्नौ
सुराग्रहाञ्जुह्वति । दक्षिणेऽग्नौ पावयन्ति पवित्राभिस्त्रिपं-
स्युक्ताभिः पितॄनेव तन्मर्त्यान्त्सतोऽमृतयोनौ दधाति
मर्त्यान्त्सतोऽमृतयोनेः प्रजनयत्यप ह वै पितॄणाम्पुनर्म्मृ-
त्युञ्जयति नास्माद्यज्ञो व्यवच्छिद्यते य ऽएवमेतद्वेद
यस्य चैवं विदुष ऽएतत्कर्म्म क्रियते ॥ १२ ॥ तद्यदेता-
वग्नी ऽआहवनीयाद्विह्रियेते । तेनाहवनीयावथ यदाहव-
नीयम्पुनर्न्नाऽन्ववाते तेनानाहवनीयौ । तेनोभौ होमा ऽउपा-
प्नोति यश्चाहवनीये यश्चानाहवनीये यच्च हुतं यच्चाहुत-
म्पुनर्हायमित्वोवाच न तदस्ति यत्सृञ्जयानाꣳ राष्ट्रन्दुष्टरी-
तास्तदद्य तथायश्चाक्रस्थपतिर्य्यज्ञेऽकरिति ॥ १३ ॥ उत्तरेऽग्नौ
पशुभिः पुरोडाशैः पयोग्रहैरिति चरन्ति । यदु चान्यत्तेन
देवानेव तद्देवलोके प्रीणाति त ऽएनम्प्रीताः प्रीणन्त्यथो
देवलोकमेव जयति ॥ १४ ॥ दक्षिणेऽग्नौ सुराग्रहाञ्जु-
ह्वति । दक्षिणेऽग्नौ पावयन्ति पवित्राभिस्त्रिपंस्युक्ताभिः
पितॄनेव तत्पितृलोके प्रीणाति त ऽएनम्प्रीताः प्रीण-
न्त्यथो पितृलोकमेव जयति ॥ १५ ॥ स वा ऽएष
आत्मैव यत्सौत्रामणी । तस्मात्सा निरुक्ता निरुक्तो ह्यात्मा

लोको वयोधास्तस्मात्सोऽनिरुक्तोऽनिरुक्तो हि लोक ऽआत्मा वै यज्ञस्य सौत्रामणी बाहू ऽऐन्द्रश्च वयोधाश्च तद्यदेतावभितः पशू भवतस्तस्मादिमावात्मानमभितो बाहू यथो वै पशुरेवं यूपस्तद्यदेतः सौत्रामणिकं यूपमेतौ यूपावभितो भवतस्तस्मादिमावात्मानमभितो बाहू ॥ १६ ॥

नवमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ११२ ॥

इति नवमोऽध्यायः ॥ ९ ॥

मध्यमनाम द्वादशं काण्डं समाप्तम्* ॥ १२ ॥



* अस्मिन्काण्डे कण्डिकासंख्या ४५९ ।

# अथाश्वमेधनाम त्रयोदशं काण्डम्

[ अस्मिन्काण्डे प्रतिपाद्या विषयाः—अश्वमेधः, तद्गतं प्रायश्चित्तम्, पुरुषमेधः, सर्वमेधः, दशरात्रः, पितृमेधः ]



[ ब्रह्मौदनपाकः ]

॥ ॐ ॥* ब्रह्मौदनम्पचति । रेत ऽएव तद्धत्ते यदाज्य-मुच्छिष्यते तेन रशनामभ्यज्याद्धत्ते तेजो वा ऽआज्य-म्प्राजापत्योऽश्वः प्रजापतिमेव तेजसा समर्द्धयत्यपूतो वा ऽएषोऽमेध्यो यदश्वः ॥ १ ॥ दर्भमयी रशना भवति । पवित्रं वै दर्भाः पुनात्येवैनम्पूतमेवैनम्मेध्यमालभते ॥ २ ॥ अश्वस्य वा ऽआलब्धस्य । रेत ऽउदक्रामत्तत्सुवर्ण्णꣳ हिरण्यमभवद्यत्सुवर्ण्णꣳ हिरण्यन्ददात्यश्वमेव रेतसा समर्द्धयति ॥ ३ ॥ † प्रजापतिर्यज्ञमसृजत । तस्य महि-मापाक्रामत्स महर्त्विजः प्राविशत्तम्महर्त्विग्भिरन्वैच्छत्त-म्महर्त्विग्भिरन्वविन्दद्यन्महर्त्विजो ब्ब्रह्मौदनम्प्राश्नन्ति महिमानमेव तद्यज्ञस्य यजमानोऽवरुन्द्धे ब्ब्रह्मौदने सुव-र्ण्णꣳ हिरण्यन्ददाति रेतो वा ऽओदनो रेतो हिरण्यꣳ रेतसैवास्मिँस्तद्रेतो दधाति शतमानम्भवति शतायुर्वै पुरुषः शतेन्द्रिय आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते चतुष्टयीरपो

* ब्राह्मणेभ्य ऋत्विग्भ्यो देय ओदनः ब्रह्मौदनः ।

† अत्र शतम् ६४०० ।

(१) 'क' इति 'ज' पुस्तके ।

वसतीवरीर्म्मध्यमायाह्ने गृह्णाति ता दिग्भ्यः समाहृता भवन्ति दिक्षु वा ऽअन्नमन्नमापोऽन्नेनैवास्म्मा ऽअन्नमवरुन्द्धे ॥ ४ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अश्वस्य बन्धनप्रोक्षणादि ]

ऽर्धृद्धमु वा ऽएतद्यज्ञस्य । यदयजुष्क्केण क्रियत 'ऽइमामगृब्भ्णन्न्रशनामृतस्ये'त्यश्श्वाभिधानीमादत्ते यजुष्कृत्यै यज्ञस्य समृद्धयै द्वादशारत्निर्भ्भवति द्वादश मासाः सँवत्सरः सँवत्सरमेव यज्ञमाप्नोति ॥ १ ॥ तदाहुः । द्वादशारत्नी रशना कार्य्या३ त्रयोदशारत्नी३रित्त्वृषभो वा ऽएष ऽऋतूनां ऽयत्सँवत्सरस्तस्य त्रयोदशो मासो विष्टप वृषभ ऽएष यज्ञानां ऽयदश्श्वमेधो यथा वा ऽऋषभस्य विष्टपमेवमेतस्य विष्टपन्त्रयोदशमरत्निः रशनायामुपादद्ध्यात्तद्यथर्षभस्य* विष्टपः संस्क्रियते तादृक्तत् ॥ २ ॥ 'अभिधा ऽअसी'ति । तस्म्मादश्श्वमेधयाजी सर्व्वा दिशोऽभिजयति 'भुवनमसी'ति भुवनन्तज्जयति 'यन्तासि धर्त्ते'ति यन्तारमेवैनन्धर्त्तारङ्करोति' 'स त्वमग्निं वैश्श्वानर'मित्यग्निमेवैनं वैश्श्वानरङ्गमयति 'सप्प्रथसङ्गच्छे'ति प्प्रजयैवैनम्पशुभिः प्प्रथयति 'स्वाहाकृत' ऽइति वषट्कार

(१) शु० य० सं० २२. २ ।

* '०थ ऽऋृषभस्य' इति 'ग' 'ज' पुस्तकयोः ।

(२) शु० य० सं० २२. ३ । (३) शु० य० सं० २२. ३ । (४) शु० य० सं० २२. ३ । (५) शु० य० सं० २२. ३ । (६) शु० य० सं० २२. ३ । (७) शु० य० सं० २२. ३ ।

ऽएवास्यैष 'स्वगा[1] त्वा देवेब्भ्य' ऽइति देवेब्भ्य ऽएवै-नꣳ स्वगा करोति 'प्प्रजापतय'[2] ऽइति प्प्राजापत्त्योऽश्श्वः स्वयैवैनन्देवतया समर्द्धयति ॥ ३ ॥ ईश्श्वरो वा ऽएषः । आर्त्तिमार्त्तोरुर्यो ब्ब्रह्मणे देवेब्भ्योऽप्प्रतिप्प्रोच्च्याश्श्वम्ब-द्ध्नाति 'ब्ब्रह्मन्नश्श्वम्भन्त्स्यामि[3] देवेब्भ्यः प्प्रजापतये तेन राद्ध्यास'मिति ब्ब्रह्माणमामन्त्रयते ब्ब्रह्मण ऽएवैनम्प्रति-प्प्रोच्च्य बद्ध्नाति नार्त्तिमाच्छ्र्छति 'तम्बधान[4] देवेब्भ्यः प्प्रजापतये तेन राद्ध्नुही'ति ब्ब्रह्मा प्प्रसौति स्वयैवैनन्देवतया समर्द्धयत्त्यथ प्प्रोक्षत्त्यसावेव बन्धुः ॥ ४ ॥ स प्प्रोक्षति । 'प्प्रजापतये[5] त्वा जुष्टम्प्रोक्षामी'ति प्प्रजापतिर्वै देवानां व्वीर्य्य-वत्तमो व्वीर्य्यमेवास्म्मिन्दधाति तस्म्मादश्श्वः पशूनां व्वीर्य्य-वत्तमः ॥५॥ 'इन्द्राग्ग्निब्भ्यान्त्वा[6] जुष्टम्प्रोक्षामी'ति । इन्द्राग्ग्नी वै देवानामोजस्स्वितमा ऽओज ऽएवास्म्मिन्दधाति तस्म्मा-दश्श्वः पशूनामोजस्स्वितमः ॥ ६ ॥ 'वायवे[7] त्वा जुष्टम्प्रो-क्षामी'ति । वायुर्वै देवानामाशिष्ठो जवमेवास्म्मिन्दधाति तस्म्मादश्श्वः पशूनामाशिष्ठः ॥ ७ ॥ 'विश्श्वेब्भ्यस्त्वा[8] देवेब्भ्यो जुष्टम्प्रोक्षामी'ति । विश्श्वे वै देवा देवानां य्यशस्स्वितमा यश ऽएवास्म्मिन्दधाति तस्म्मादश्श्वः पशूनां य्यशस्स्वितमः 'सर्वेब्भ्यस्त्वा[9] देवेब्भ्यो जुष्टम्प्रोक्षामी'ति ॥ ८ ॥ तदाहुः । यत्प्राजापत्त्योऽश्श्वोऽथ कथाप्प्यन्न्याब्भ्यो

---

(१) शु० य० सं० २२. ४। (२) शु० य० सं० २२. ४। (३) शु० य० सं० २२. ४। (४) शु० य० सं० २२. ४। (५) शु० य० सं० २२. ५। (६) शु० य० सं० २२. ५। (७) शु० य० सं० २२. ५। (८) शु० य० सं० २२. ५। (९) शु० य० सं० २२. ५।

देवताभ्यः प्रोक्षतीति सर्वा वै देवता ऽअश्वमेधेऽन्वायत्ता यदाह सर्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामीति सर्वा ऽएवा-स्मिन्देवता ऽअन्वायातयति तस्मादश्वमेधे सर्वा देवता ऽअन्वायत्ताः पाप्मा वा ऽएतम्भ्रातृव्य ऽईप्सति योऽ-श्वमेधेन यजते वज्रोऽश्वः 'परो मर्त्तः परः श्वे'ति श्वानञ्चतुरक्षꣳ हत्वाधस्पदमश्वस्योपप्लावयति वज्रेणै-वैनमवक्रामति नैनम्पाप्मा भ्रातृव्य ऽआप्नोति ॥ ९ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

— ❖ —

[ सहस्राहुतयः ]

यथा वै हविषोऽहुतस्य स्कन्देत्। एवमेतत्पशोः स्कन्दति यन्निक्तमनालब्धमुत्सृजन्ति यत्स्तोकीया जुहोति सर्वहुतमेवैनञ्जुहोत्यस्कन्दायास्कन्नꣳ हि तद्यद्धुतस्य स्क-न्दति सहस्रञ्जुहोति सहस्रसम्मितो वै स्वर्गो लोकः स्वर्गस्य लोकस्याभिजित्यै ॥ १ ॥ तदाहुः। यन्मिता जुहुयात्परिमितमवरुन्धीतेत्यमिता जुहोत्यपरिमितस्यैवा-वरुद्ध्यै। ऽउवाच ह प्रजापति स्तोकीयासु वा ऽअहम-श्वमेधꣳ सꣳस्थापयामि तेन सꣳस्थितेनैवात ऽऊर्द्ध्व-ञ्चरामीति ॥ २ ॥ 'अग्नये स्वाहे'ति। अग्नय ऽएवैनञ्जु-होति 'सोमाय स्वाहे'ति सोमायैवैनञ्जुहो'त्यपाम्मोदाय

(१) शु० य० सं० २२.५। (२) शु० य० सं० २२.६। (३) शु० य० सं० २२.६। (४) शु० य० सं० २२.६।

स्वाहे'त्यद्भ्य ऽएवैनञ्जुहोति 'सवित्रे स्वाहे'ति सवित्र ऽएवैनञ्जुहोति 'वायवे स्वाहे'ति वायव ऽएवैनञ्जुहोति 'विष्णवे स्वाहे'ति विष्णव ऽएवैनञ्जुहोती'न्द्राय स्वाहे'-तीन्द्रायैवैनञ्जुहोति 'बृहस्पतये स्वाहे'ति बृहस्पतय ऽएवै-नञ्जुहोति 'मित्राय स्वाहे'ति मित्रायैवैनञ्जुहोति 'वरुणाय स्वाहे'ति वरुणायैवैनञ्जुहोत्येतावन्तो वै सर्वे देवास्तेभ्य ऽएवैनञ्जुहोति पराचीर्जुहोति पराङिव वै स्वर्गो लोकः स्वर्गस्य लोकस्याभिजित्यै ॥ ३ ॥ ईश्वरो वा ऽएषः । पराङ् प्रदघोर्र्षः पराचीराहुतीर्जुहोति पुनरावर्त्ततेऽस्मिन्-न्नेव लोके प्रतितिष्ठत्येताᳫं ह वाव स यज्ञस्य सᳫंस्थिति-मुवाचास्कन्दायास्कन्नᳫं हि तद्यद्धुतस्य स्कन्दति ॥ ४ ॥ यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशो स्कन्दति यम्प्रोक्षितमनालब्धमुत्सृजन्ति यद्रूपाणि जुहोति सर्व्व-हुतमेवैनञ्जुहोत्यस्कन्दायास्कन्नᳫं हि तद्यद्धुतस्य स्कन्दति 'हिङ्काराय स्वाहा हिङ्कृताय स्वाहे'त्येतानि वा ऽअश्वस्य रूपाणि तान्येवावरुन्द्धे ॥ ५ ॥ तदाहुः । अनाहुतिर्वै रूपाणि नैता होतव्या ऽइत्यथो खल्वाहुरत्र वा ऽअश्व-मेधः सन्तिष्ठते यद्रूपाणि जुहोति होतव्या ऽएवेति बहिर्द्धा वा ऽएतमायतनात्करोति भ्रातृव्यमस्मै जन-यति यस्यानायतनेऽन्यत्राग्नेराहुतीर्जुहोति ॥ ६ ॥ सावित्र्या

---

(१) शु० य० सं० २२. ६ । (२) शु० य० सं० २२. ६ । (३) शु० य० सं० २२. ६ । (४) शु० य० सं० २२. ६ । (५) शु० य० सं० २२. ६ । (६) शु० य० सं० २२. ६ ।

(७) शु० य० सं० २२. ६ । (८) शु० य० सं० २२. ७ ।

ऽएवेष्टेः । पुरस्तादनुद्रुत्य सकृदेव रूपाण्याहवनीये जुहोत्यायतन ऽएवाहुतीर्जुहोति नास्मै भ्रातृव्यञ्जनयति यज्ञमुखे यज्ञमुखे जुहोति यज्ञस्य सन्तत्या ऽअव्यवच्छेदाय ॥ ७ ॥ तदाहुः । यद्यज्ञमुखे यज्ञमुखे जुहुयात्पशुभिर्व्यृध्येत पापीयान्त्स्यात्सकृदेव होतव्या न पशुभिर्व्यृध्यते न पापीयान्भवत्यष्टाचत्वारिंशतञ्जुहोत्यष्टाचत्वारिंशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्द्ध ऽएकमतिरिक्तञ्जुहोति तस्मादेकः प्रजास्वर्द्धुकः ॥ ८ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ सावित्र्य इष्टयः ]

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टः पराङैत्स दिशोऽनुप्राविशत्तन्देवाः प्रैषमैच्छँस्तमिष्टिभिरनुप्रायुञ्जत तमिष्टिभिरन्वैच्छँस्तमिष्टिभिरन्वविन्दन्यदिष्टिभिर्यजतेऽश्वमेव तन्मेध्यं यजमानोऽन्विच्छति ॥ १ ॥ सावित्र्यो भवन्ति । इयं वै सविता यो वा ऽअस्यान्निलयते योऽन्यत्रेत्यस्यां वाव तमनुविन्दन्ति न वा ऽइमाङ्कश्चन तिर्यङ्नोर्द्ध्वोऽत्येतुमर्हति यत्सावित्र्यो भवन्त्यश्वस्यैवानुवित्त्यै ॥ २ ॥ तदाहुः । प्र वा ऽएतदश्वो मीयते यत्पराङेति न ह्येनम्प्रत्यावर्त्तयन्तीति यत्सायन्धृतीर्जुहोति क्षेमो वै धृतिः क्षेमो रात्रिः क्षेमेणैवैनन्दाधार तस्मात्सायम्मनुष्याश्च पशवश्च क्षेम्या भवन्त्यथ यत्प्रातरिष्टि

भिर्यजत ऽइच्छत्त्येवैनन्तत्तस्म्मादिवा नष्ट्वैष ऽएति यद्वत्र सायन्धृतीर्जुहोति प्प्रातरिष्टिभिर्यजते योगक्षेममेव तद्यजमानः कल्प्पयते तस्म्माद्यत्रैतेन यज्ञेन यजन्ते क्क्लृप्प्तः प्प्रजानां य्योगक्षेमो भवति ॥ ३ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ गाथागानम् ]

अप वा ऽएतस्म्मात् । श्री राष्ट्रङ्क्रामति योऽश्वमेधेन यजते यदा वै पुरुषः श्रियङ्गच्छति व्वीणास्म्मै वाद्यते ब्ब्राह्मणौ व्वीणागाथिनौ सँव्वत्त्सरङ्गायतः श्रियै वा ऽएतद्रूपं य्यद्वीणा श्रियमेवास्म्मिँस्तद्धत्तः ॥ १ ॥ तदाहुः । यदुभौ ब्ब्राह्मणौ गायेतामपास्म्मात्क्षत्रङ्क्रामेद्ब्रह्मणो वा ऽएतद्रूपं य्यद्ब्राह्मणो न वै ब्रह्मणि क्षत्रꣳ रमत ऽइति ॥ २ ॥ यदुभौ राजन्न्यौ । अपास्म्माद्ब्रह्मवर्च्चसङ्क्रामेत्क्षत्रस्य वा ऽएतद्रूपं य्यद्राजन्न्यो न वै क्षत्रे ब्ब्रह्मवर्च्चसꣳ रमत ऽइति ब्ब्राह्मणोऽन्न्यो गायति राजन्न्योऽन्न्यो ब्ब्रह्म वै ब्ब्राह्मणः क्षत्रꣳ राजन्न्यस्तदस्य ब्ब्रह्मणा च क्षत्त्रेण चोभयतः श्रीः परिगृहीता भवति ॥ ३ ॥ तदाहुः । यदुभौ दिवा गायेतामप्प्रब्भ्रꣳशुकास्म्माच्छ्रीः स्याद्ब्रह्मणो वा ऽएतद्रूपं य्यदहर्य्यदा वै राजा कामयतेऽथ ब्ब्राह्मणञ्जिनाति पापीयाँस्तु भवति ॥ ४ ॥ यदुभौ नक्तम् । अपास्म्माद्ब्रह्मवर्च्चसङ्क्रामेत्क्षत्रस्य वा ऽएतद्रूपं य्यद्रात्रिर्न्न वै क्षत्रे

ब्ब्रह्मवर्च्चसेन रमत ऽइति दिवा ब्ब्राह्मणो गायति नक्तꣳ राजन्न्यस्तथो हास्य ब्ब्रह्मणा च क्षत्रेण चोभयतः श्रीः परिगृहीता भवतीति ॥ ५ ॥ अयजतेत्त्यददादिति ब्ब्राह्मणो गायतीष्टापूर्त्तं व्वै ब्ब्राह्मणस्येष्टापूर्त्तेनैवैनꣳ स समर्द्धयतीत्त्ययुद्ध्यतेत्त्यमुꣳ सङ्ग्राममजयदिति राजन्न्यो युद्धं व्वै राजन्न्यस्य व्वीर्य्यं व्वीर्य्येणैवैनꣳ स समर्द्धयति तिस्रोऽन्न्यो गाथा गायति तिस्रोऽन्न्यः षट् सम्पद्यन्ते षड्डृतवः सँवत्सर ऽऋतुष्ष्वेव सँवत्सरे प्प्रतितिष्ठति ताब्भ्याꣳ शतन्ददाति शतायुर्व्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते ॥ ६ ॥

प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ अश्वकर्णे जपः, धृतिहोमश्च ]

'विभूर्म्मात्रा प्प्रभूः पित्रे'[1]ति । इयं व्वै मातासौ पिताब्भ्यामेवैनम्परिददा'त्त्यश्वोऽसि हयोऽसी'[2]ति शास्त्येवैनन्तत्तस्म्माच्छिष्टाः प्प्रजा जायन्ते'ऽत्योऽसि मयोऽसी'[3]त्त्यत्येवैनन्नयति तस्म्मादश्वः पशूनत्त्येति तस्म्मादश्वः पशूनाꣳ श्रैष्ठ्यङ्गच्छ'त्त्यर्वासि सप्तिरसि व्वाज्यसी'[4]ति यथायजुरेवैत'द्वृषासि नृमणा ऽअसी'[5]ति मिथुनत्त्वाय 'ययुर्न्नामासि शिशुर्न्नामासी'[6]त्त्येतद्वा ऽअश्वस्य प्प्रियन्नाम-

(१) शु० य० सं० २२. १९। (२) शु० य० सं० २२. १९। (३) शु० य० सं० २२. १९। (४) शु० य० सं० २२. १९। (५) शु० य० सं० २२. १९। (६) शु० य० सं० २२. १९।

धेयम्प्रियेणैवैनन्नाम्म्नाभिवदति तस्म्मादुप्प्यामित्रौ सङ्गत्य नाम्म्ना चेदभिवदतोऽन्न्योऽन्न्यᳩ समेव जानाते ॥ १ ॥ 'आदित्यानाम्पत्वान्न्विही'ति। आदित्यानेवैनङ्गमयति 'देवा ऽआशापाला ऽएतन्देवेब्भ्योऽश्श्वम्मेधाय प्प्रोक्षितᳩ रक्षते'ति शतं वै तल्प्या राजपुत्त्रा ऽआशापालास्तेब्भ्य ऽएवैनम्परिददाती'ह रन्तिरिह रमतामिह धृतिरिह स्वधृतिᳩ स्वाहे'ति सँवत्सरमाहुतीर्ज्जुहोति षोडश नवतीरेता वा ऽअश्श्वस्य बन्धनन्ताभिरेवैनम्बद्ध्नाति तस्म्मादश्श्वᳩ प्प्रमुक्तो बन्धनमागच्छति षोडश नवतीरेता वा ऽअश्श्वस्य बन्धनन्ताभिरेवैनम्बद्ध्नाति तस्म्मादश्श्वᳩ प्प्रमुक्तो बन्धनन्न जहाति ॥ २ ॥ राष्ट्रं वा ऽअश्श्वमेधᳩ। राष्ट्र ऽएते व्व्यायच्छन्ते येऽश्श्वᳩ रक्षन्ति तेषां य्य ऽउदृचङ्गच्छन्ति राष्ट्रेणैव ते राष्ट्रम्भवन्त्यथ ये नोदृचङ्गच्छन्ति राष्ट्रात्ते व्व्यवच्छिद्यन्ते तस्म्माद्राष्ट्र्यश्श्वमेधेन यजेत परा वा ऽएष सिच्च्यते योऽबलोऽश्श्वमेधेन यजते यद्यमित्त्रा ऽअश्श्वं विन्देरन्न्यज्ञोऽस्य विच्छिद्येत पापीयान्त्स्याच्छतङ्कवचिनो रक्षन्ति यज्ञस्य सन्तत्या ऽअव्व्यवच्छेदाय न पापीयान्भवत्यथान्न्यमानीय प्प्रोक्षेयुᳩ सैव तत्र प्प्रायश्चित्तिᳩ ॥ ३ ॥

प्रथमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥



(१) शु० य० सं० २२. १९। (२) शु० य० सं० २२. १९। (३) शु० य० सं० २२. १९।

[ औद्ग्रभणहोमः ]

प्रजापतिरकामयत । अश्श्वमेधेन यजेयेति सोऽश्श्राम्म्यत्स तपोऽतप्यत तस्य श्श्रान्तस्य तप्तस्य सप्तधात्मनो देवता ऽअपाक्क्रामन्त्सा दीक्षाभवत्स ऽएतानि वैश्श्वदेवान्यपश्श्यत्तान्न्यजुहोत्तैर्वै स दीक्षामवारुन्द्ध यद्वैश्श्वदेवानि जुहोति दीक्षामेव तैर्य्यजमानोऽवरुन्द्धेऽन्न्वहञ्जुहोत्त्यन्न्वहमेव दीक्षामवरुन्द्धे सप्त जुहोति सप्त वै ता देवता ऽअपाक्क्रामँस्ताभिरेवास्म्मै दीक्षामवरुन्द्धे ॥ १ ॥ अप वा ऽएतेब्भ्यः प्प्राणाः क्क्रामन्ति । ये दीक्षामतिरेचयन्ति सप्ताहम्प्रचरन्ति सप्त वै शीर्षण्ण्याः प्प्राणाः प्प्राणा दीक्षा प्प्राणैरेवास्म्मै प्प्राणान्दीक्षामवरुन्द्धे त्रेधा विभज्य देवताञ्जुहोति त्र्यावृतो वै देवास्त्र्यावृत ऽइमे लोका ऽऋद्ध्यामेव वीर्य्य ऽएषु लोकेषु प्प्रतितिष्ठति ॥ २ ॥ एकविꣳशतिꣳ सम्पद्यन्ते । द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्त्य ऽएकविꣳशस्तद्दैवं क्षत्रꣳ सा श्श्रीस्तदाधिपत्त्यन्तद्ब्रद्ध्नस्य विष्टपन्तत्स्वाराज्यमश्नुते । ॥ ३ ॥ त्रिꣳशतमौद्ग्रभणानि जुहोति । त्रिꣳशदक्षरा विराड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै यत्त्वारौद्ग्रभणानि जुहोति त्रीणि वैश्श्वदेवानि सप्त सम्पद्यन्ते सप्त वै शीर्षण्ण्याः प्प्राणाः प्प्राणा दीक्षा प्प्राणैरेवास्म्मै प्प्राणान्दीक्षामवरुन्द्धे पूर्ण्णाहुतिमुत्तमाञ्जुहोति प्प्रत्युत्तब्ध्यै सयुक्त्वाय ॥ ४ ॥

प्रथमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

प्रजापतिरश्वमेधमसृजत । स सृष्टः प्प्रऽर्चमम्लीनात्प्र साम तं वैश्वदेवान्युदयच्छन्न्यद्वैश्वदेवानि जुहोत्यश्वमेधस्यैवोद्यत्यै ॥ १ ॥ '[1]काय स्वाहा । कस्मै स्वाहा कतमस्मै स्वाहे'ति प्प्राजापत्यम्मुख्यङ्करोति प्प्रजापतिमुखाभिरेवैनन्देवताभिरुद्यच्छति ॥ २ ॥ '[2]स्वाहाधिमाधीताय स्वाहा । मनः प्प्रजापतये स्वाहा चित्तं विज्ञाताये'ति यदेव पूर्वासाम्ब्राह्मणन्तदत्र ॥ ३ ॥ '[3]अदित्यै स्वाहा । अदित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहे'तीयं वाऽअदितिरनयैवैनमुद्यच्छति ॥ ४ ॥ '[4]सरस्वत्यै स्वाहा । सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहे'ति वाग्वै सरस्वती वाचैवैनमुद्यच्छति ॥ ५ ॥ '[5]पूष्णे स्वाहा । पूष्णे प्प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहे'ति पशवो वै पूषा पशुभिरेवैनमुद्यच्छति ॥ ६ ॥ '[6]त्वष्ट्रे स्वाहा । त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहे'ति त्वष्टा वै पशूनाम्मिथुनानाꣳ रूपकृद्रूपैरेवैनमुद्यच्छति ॥ ७ ॥ '[7]विष्णवे स्वाहा । विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहे'ति यज्ञो वै विष्णुर्यज्ञेनैवैनमुद्यच्छति '[8]विश्वो देवस्य नेतु'रिति पूर्णाहुतिमुत्तमाञ्जुहोतीयं वै पूर्णाहुतिरस्यामेवान्ततः प्प्रतितिष्ठति ॥ ८ ॥

प्रथमाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥



(१) शु० य० सं० २२. २०। (२) शु० य० सं० २२. २०। (३) शु० य० सं० २२. २०। (४) शु० य० सं० २२. २०। (५) शु० य० सं० २२. २०। (६) शु० य० सं० २२. २०। (७) शु० य० सं० २२. २०। (८) शु० य० सं० २२. २१।

[ अध्वर्युकर्तृकजपः ]

'ओं ब्ब्रह्मन् । ब्राह्मणो ब्ब्रह्मवर्च्चसी जायता'मिति ब्ब्राह्मण ऽएव ब्ब्रह्मवर्च्चसन्दधाति तस्म्मात्पुरा ब्ब्राह्मणो ब्ब्रह्मवर्च्चसी जज्ञे ॥ १ ॥ 'ओं राष्ट्रे राजन्न्यः । शूर ऽइषव्व्योऽतिव्व्याधी महारथो जायता'मिति राजन्न्य ऽएव शौर्य्यम्महिमानन्दधाति तस्म्मात्पुरा राजन्न्यः शूर ऽइषव्व्योऽतिव्व्याधी महारथो जज्ञे ॥ २ ॥ 'दोग्ध्री धेनु'-रिति । धेन्न्वामेव पयो दधाति तस्म्मात्पुरा धेनुर्द्दोग्ग्ध्री जज्ञे ॥ ३ ॥ 'व्वोढानड्वा'निति । अनडुह्येव बलन्दधाति तस्म्मात्पुरानड्वान्व्वोढा जज्ञे ॥ ४ ॥ 'आशुः सप्ति'रिति । अश्श्व ऽएव जवन्दधाति तस्म्मात्पुराश्श्वः सर्त्ता जज्ञे ॥ ५ ॥ 'पुरन्धिर्य्योषे'ति । योषित्येव रूपन्दधाति तस्म्माद्रूपिणी युवतिः प्प्रिया भावुका ॥ ६ ॥ 'जिष्णू रथेष्ठा' ऽइति । राजन्न्य ऽएव जैत्रम्महिमानन्दधाति तस्म्मात्पुरा राजन्न्यो जिष्णुर्ज्जज्ञे ॥ ७ ॥ 'सभेयो युवे'ति । एष वै सभेयो युवा यः प्प्रथमवयसी तस्म्मात्प्रथमवयसी स्त्रीणाम्प्रियो भावुकः ॥ ८ ॥ 'ओऽस्य यजमानस्य व्वीरो जायता'-मिति । यजमानस्यैव प्प्रजायां व्वीर्य्यन्दधाति तस्म्मात्पुरेजानस्य व्वीरो जज्ञे ॥९॥ [अर्धः प्रपाठकः ॥५४॥] 'निकामे-निकामे नः पर्ज्जन्न्यो व्वर्षत्वि'ति । निकामे-निकामे वै तत्र पर्ज्जन्न्यो

(१) शु० य० सं० २२. २२। (२) शु० य० सं० २२. २२। (३) शु० य० सं० २२. २२। (४) शु०.य० सं० २२. २२। (५) शु० य० सं० २२. २२। (६) शु० य० सं० २२. २२। (७) शु० य० सं० २२. २२। (८) शु० य० सं० २२. २२। (९) शु० य० सं० २२. २२। (१०) शु० य० सं० २२. २२।

वर्षति यत्रैतेन यज्ञेन यजन्ते 'फलवत्यो न ऽओषधयः पच्यन्ता'मिति फलवत्यो वै तत्रौषधयः पच्यन्ते यत्रैतेन यज्ञेन यजन्ते 'योगक्षेमो नः कल्पता'मिति योगक्षेमो वै तत्र कल्पते यत्रैतेन यज्ञेन यजन्ते तस्माद्यत्रैतेन यज्ञेन यजन्ते क्लृप्तः प्रजानां ँयोगक्षेमो भवति ॥ १० ॥

प्रथमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

[ आज्यसक्तुधानालाजहोमः ]

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत् । स ऽआत्मन्न-श्वमेधमधत्त ते देवाः प्रजापतिमब्रुवन्नेष वै यज्ञो यद-श्वमेधोऽपि नोऽत्रास्तु भाग ऽइति तेभ्य ऽएतानन्न-होमानकल्पयद्यदन्नहोमाञ्जुहोति देवानेव तत्प्रीणाति ॥१॥ आज्येन जुहोति । तेजो वा ऽआज्यन्तेजसैवास्मिँस्तत्तेजो दधात्याज्येन जुहोत्येतद्वै देवानाम्प्रियन्धाम यदाज्य-म्प्रियेणैवैनान्धाम्ना समर्द्धयति ॥ २ ॥ सक्तुभिर्जुहोति । देवानां व्वा ऽएतद्रूपं ँयत्सक्तवो देवानेव तत्प्रीणाति ॥ ३ ॥ धानाभिर्जुहोति । अहोरात्राणां व्वा ऽएतद्रूपं ँयद्धाना ऽअहोरात्राण्येव तत्प्रीणाति ॥ ४ ॥ लाजैर्जुहोति । नक्षत्राणां व्वा ऽएतद्रूपं ँयल्लाजा नक्षत्राण्येव तत्प्रीणाति 'प्राणाय स्वाहापानाय स्वाहे'ति नामग्राहञ्जुहोति नाम-

(१) शु० य० सं० २२. २२। (२) शु० य० सं० २२. २२। (३) शु० य० सं० २२. २३।

ग्राहमेवैनाँस्तत्प्रीणा'त्येकस्मै स्वाहा द्वाभ्याᳬं स्वाहा शताय स्वाहैकशताय स्वाहे'त्यनुपूर्वं जुहोत्यनुपूर्वमेवैनाँस्तत्प्रीणात्येकोत्तरा जुहोत्येकवृद्वै स्वर्गो लोक ऽएकधैवैनᳬं स्वर्गँल्लोकङ्गमयति पराचीर्ज्जुहोति पराङिव वै स्वर्गो लोकः स्वर्गस्य लोकस्याभिजित्यै ॥५॥ ईश्वरो वा ऽएषः । पराङ् प्रदघोरूर्ध्वः पराचीराहुतीर्ज्जुहोति नैकशतमत्येति यदेकशतमतीयादायुषा यजमानं व्यर्द्धयेदेकशतञ्जुहोति शतायुर्वै पुरुष ऽआत्मैकशत आयुष्येवात्मन्प्रतितिष्ठति 'व्युष्ट्यै स्वाहा स्वर्गाय स्वाहे'त्युत्तमे ऽआहुती जुहोति रात्रिर्वै व्युष्टिरहः स्वर्गोऽहोरात्रे ऽएव तत्प्रीणाति ॥ ६ ॥ तदाहुः । यदुभे दिवा वा नक्तं वा जुहुयादहोरात्रे मोहयेद्व्युष्ट्यै स्वाहेत्यनुदित ऽआदित्ये जुहोति स्वर्गाय स्वाहेत्युदितेऽहोरात्रयोरव्यतिमोहाय ॥ ७ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ पर्यङ्गपशुनिरूपणम् ]

राजा वा ऽएष यज्ञानां यदश्वमेधः । यजमानो वा ऽअश्वमेधो यजमानो यज्ञो यदश्वे पशून्नियुनक्ति यज्ञ ऽएव तद्यज्ञमारभते ॥ १ ॥ अश्वन्तूपरङ्गोमृगमिति । तान्मध्यमे यूप ऽआलभते सेनामुखमेवास्यैतेन सᳬंश्यति तस्माद्राज्ञः सेनामुखम्भीष्ममम्भावुकम् ॥ २ ॥ कृष्णग्रीवमाग्नेयᳬं रराटे पुरस्तात् । पूर्वाग्निमेव तत्कुरुते

(१) शु० य० स० २२, ३४ । (२) शु० य० सं० २२, ३४ ।

तस्माद्राजा पुरोगामुकः ॥ ३ ॥ सारस्वतीम्मेषीमधस्ताद्धन्वोः । स्त्रीरेव तदनुगाः कुरुते तस्मात्स्त्रियः पुᳬसोऽनुवर्त्मानो भावुकाः ॥ ४ ॥ आश्विनावधोरामौ बाह्वोः । बाह्वोरेव बलन्धत्ते तस्माद्राजा बाहुबली भावुकः ॥ ५ ॥ सौमापौष्णᳬ श्यामन्नाभ्याम् । प्रतिष्ठामेव ताङ्कुरुत ऽइयं वै पूषास्यामेव प्प्रतितिष्ठति ॥ ६ ॥ सौर्य्ययामौ श्वेतञ्च कृष्णञ्च पार्श्वयोः । कवचे ऽएव ते कुरुते तस्माद्राजा सन्नद्धो वीर्य्यङ्करोति ॥७॥ त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः । ऊर्वोरेव बलन्धत्ते तस्माद्राजोरुबली भावुकः ॥ ८ ॥ वायव्यᳬ श्वेतम्पुच्छे । उत्सेधमेव तङ्कुरुते तस्मादुत्सेधम्प्रजा भयेऽभिसᳬश्रयन्तीन्द्राय स्वपस्याय वेहतं यज्ञस्य सेन्द्रतायै वैष्णवो वामनो यज्ञो वै विष्णुर्य्यज्ञ ऽएवान्ततः प्प्रतितिष्ठति ॥ ९ ॥ ते वा ऽएते । पञ्चदश पर्य्यङ्ग्याः पशवो भवन्ति पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैवैतद्वीर्य्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ १० ॥ पञ्चदश–पञ्चदशो ऽएवेतरेषु । पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैवैतद्वीर्य्येण यजमानोऽभितः पाप्मानमपहते ॥ ११ ॥ तदाहुः । अपाहैवैतैः पाप्मानᳬ हता ऽइत्यकृत्स्नञ्च त्वै प्प्रजापतिᳬ संस्करोति न चेदᳬ सर्वमवरुन्द्धे ॥ १२ ॥ सप्तदशैव * पशून्मध्यमे यूप ऽआलभेत । सप्तदशो वै प्प्रजापतिः

* त्रयोऽश्वतूपरगोमृगाः द्वौ चाग्नेयावैकादशिनौ द्वादश रोहितादयः, एवं सप्तदश पशवो मध्यमे यूपे भवन्ति ।

प्प्रजापतिरश्श्वमेधोऽश्श्वमेधस्यैवाप्प्त्यै षोडश–षोडशेतरेषु षोडशकलं व्वा ऽइदꣳ सर्व्वन्तदिदꣳ सर्व्वमवरुन्द्धे ॥ १३ ॥ तान्त्कथमाप्प्रीणीयादित्त्याहुः । 'समिद्धो ऽअञ्जन्कृदरम्मती-ना'मिति वार्हदुक्क्थीभिराप्प्रीणीयाद्वृहदुक्क्थो ह व्वै व्वामदेव्व्योऽश्श्वो वा सामुद्रिरश्श्वस्याप्प्रीर्द्ददर्श ता ऽएतास्ताभिरेव्वैनमेतदाप्प्रीणीम ऽइति व्वदन्तो न तथा कुर्य्याज्जामदग्ग्नीभिरेव्वाप्प्रीणीयात्प्रजापतिर्व्वै जमदग्ग्निः सोऽ-श्श्वमेधः स्व्वयैव्वैनन्देव्वतया समर्द्धयति तस्म्माज्जामदग्ग्नी-भिरेव्वाप्प्रीणीयात् ॥ १४ ॥ तद्धैके । एतेषाम्पर्य्यङ्ग्याणा-न्नाना याज्यापुरोऽनुव्वाक्क्याः कुर्व्वन्ति व्विन्दाम ऽएतेषा-मविर्य्येतरेषान्न कुर्म्म ऽइति न तथा कुर्य्यात्क्षत्त्रं व्वा ऽअश्श्वो व्विडितरे पशवः प्प्रतिप्प्रतिर्न्नीथं ह ते प्प्रत्युद्या-मिनीङ्क्षत्त्राय व्विशङ्कुर्व्वन्त्त्यथो ऽआयुषा यजमानं व्व्यर्द्ध-यन्ति ये तथा कुर्व्वन्ति तस्म्मात्प्राजापत्त्य ऽएव्वाश्श्वो देव्व-देव्वत्त्या ऽइतरे क्षत्त्रायैव तद्विशङ्कृतानुकरामनुवर्त्मानङ्करो-त्त्यथो ऽआयुषैव यजमानꣳ समर्द्धयति ॥ १५ ॥ हिरण्मयोऽ-श्श्वस्य शासो भवति । लोहमयाः पर्य्यङ्ग्याणामायसा ऽइतरेषाञ्ज्योतिर्व्वै हिरण्यꣳ राष्ट्रमश्श्वमेधो ज्योतिरेव तद्राष्ट्रे दधात्त्यथो हिरण्यज्योतिषैव यजमानः स्वर्ग्गँ-ल्लोकमेत्त्यथो ऽअनूकाशमेव तत्कुरुते स्वर्ग्गस्य लोकस्य समष्ट्यै ॥ १६ ॥ अथो क्षत्त्रं व्वा ऽअश्श्वः । क्षत्त्रस्यैतद्रूपं यद्धिरण्यं क्षत्त्रमेव तत्क्षत्त्रेण समर्द्धयति ॥ १७ ॥ अथ

(१) शु० य० सं० २९. १ ।

यल्लोहमयाः परुर्षङ्ग्याणाम् । यथा वै राज्ञोऽराजानो राज-कृतः सूतग्रामण्य ऽएवं वा ऽएतेऽश्वस्य यत्परुर्षङ्ग्या ऽएवमु वा ऽएतद्धिरण्यस्य यल्लोहथं स्वेनैवैनाँस्तद्रूपेण समर्द्धयति ॥ १८ ॥ अथ यदायसा ऽइतरेषाम् । विड्वा ऽइतरे पशवो विश ऽएतद्रूपं यदयो विशमेव तद्विशा समर्द्धयति वैतस ऽइटसून ऽउत्तरतोऽश्वस्यावद्यन्त्या-नुष्टुभो वा ऽअश्व ऽआनुष्टुभैषा दिक्स्वायामेवैनन्तद्दिशि दधात्यथ यद्वैतस ऽइटसूनेऽप्सुयोनिर्वा ऽअश्वोऽप्सुजा वेतसः स्वयैवैनं योन्या समर्द्धयति ॥ १९ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ उद्गात्रन्वारम्भः ]

देवा वा ऽअश्वमेधे पवमानम् । स्वर्गँल्लोकन्न प्प्राजानँस्तमश्वः प्प्राजानाद्यदश्वमेधेऽश्वेन पवमानाय सर्प्पन्ति स्वर्ग्गस्य लोकस्य प्प्रज्ञात्यै पुच्छमन्वारभन्ते स्वर्ग्गस्यैव लोकस्य समष्ट्यै न वै मनुष्यः स्वर्ग्गँल्लोक-मञ्जसा वेदाश्वो वै स्वर्ग्गँल्लोकमञ्जसा वेद ॥ १ ॥ यदुद्गा-तोद्गायेत् । यथाक्षेत्रज्ञोऽन्येन पथा नयेत्तादृक्तदथ यदु-द्गातारमपरुध्याश्वमुद्गीथाय व्वृणीते यथा क्षेत्रज्ञोऽञ्जसा नयेदेवमेवैतद्यजमानमश्वः स्वर्ग्गँल्लोकमञ्जसा नयति हिङ्करोति सामैव तद्धिङ्करोत्युद्गीथ ऽएव स वडवा ऽउप-

(१) 'च' इति 'ग' 'ज' पुस्तकयोः ।

रुन्धन्ति सꣳशिञ्जते सुथोपगातार ऽउपगायन्ति तादृक्त-द्धिरण्यन्दक्षिणा सुवर्ण्णꣳ शतमानन्तस्योक्तम्ब्राह्मणम् ॥२॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ ग्राम्यपश्वालम्भः, आरण्यपशूनामुत्सर्गश्च ]

प्रजापतिरकामयत । उभौ लोकावभिजयेयन्देवलो-कञ्च मनुष्यलोकञ्चेति स ऽएताम्पशूनपश्यद्ग्राम्म्याँश्चा-रण्याँश्च तानालभत तैरिमौ लोकाववारुन्द्ध ग्राम्म्यै-रेव पशुभिरिमँल्लोकमवारुन्द्धारण्यैरमुमयं वै लोको मनु-ष्यलोकोऽथासौ देवलोको यद्ग्राम्म्यान्पशूनालभत ऽइममेव तैर्ल्लोकं यजमानोऽवरुन्द्धे यदारण्यानमुन्तैः ॥१॥ स यद्ग्राम्म्यैः सꣳस्थापयेत् । समद्धानः क्रामेयुः सम-न्तिकङ्ग्रामयोर्ग्ग्रामान्तौ स्याताम्नऽर्क्षीकाः पुरुषव्याघ्राः परिमोषिण ऽआव्याधिन्न्यस्तस्करा ऽअरण्येष्वाजायेर-न्यदारण्यैर्व्युद्धानः क्रामेयुर्व्विदूरङ्ग्रामयोर्ग्ग्रामान्तौ स्या-तामृक्षीकाः पुरुषव्याघ्राः परिमोषिण ऽआव्याधिन्न्य-स्तस्करा ऽअरण्येष्वाजायेरन् ॥ २ ॥ तदाहुः । अपशुर्व्वा ऽएष यदारण्यो नैतस्य होतव्यं यज्जुहुयात्क्षिप्रं यज-मानमरण्यम्मृतꣳ हरेयुररण्यभागा ह्यारण्याः पशवो यन्न जुहुयाद्यज्ञवेशसꣳ स्यादिति पर्य्यग्निकृतानेवोत्सृजन्ति तन्नैव हुतन्नाहुतन्न यजमानमरण्यम्मृतꣳ हरन्ति न यज्ञवेशसम्भवति ॥ ३ ॥ ग्राम्म्यैः सꣳस्थापयति । वि पितापुत्राववस्यतः समद्धानः क्रामन्ति समन्तिकङ्ग्राम-

योग्ग्रामान्तौ भवतो नऽक्षीकाः पुरुषव्व्याग्घ्राः परिमोषिण ऽआव्व्याधिन्न्यस्तस्कराऽअरण्येष्ष्वाजायन्ते ॥ ४ ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ पश्वेकादशिनी ]

प्रजापतिरश्श्वमेधमसृजत । सोऽस्म्मात्सृष्टः पराङैत्स पङ्क्तिर्ब्भूत्त्वा सँवत्सरम्प्राविशत्तेऽर्द्धमासा ऽअभवँस्तम्पञ्चदशिभिरनुप्प्रायुङ्क्त तमाप्नोत्तमाप्त्वा पञ्चदशिभिरवारुन्द्धार्द्धमासानां वा ऽएषा प्प्रतिमा यत्पञ्चदशिनो यत्पञ्चदशिन ऽआलभतेऽर्द्धमासानेव तैर्यजमानोऽवरुन्द्धे ॥ १ ॥ तदाहुः । अनवरुद्धो वा ऽएतस्य सँवत्सरो भवति योऽन्न्यत्र चातुर्म्मास्येभ्यः सँवत्सरन्तनुत ऽइत्त्येष वै साक्षात्सँवत्सरो यच्चातुर्म्मास्यानि यच्चातुर्म्मास्यान्न्पशूनालभते साक्षादेव तत्सँवत्सरमवरुन्द्धे वि वा ऽएष प्प्रजया पशुभिर्ऋद्ध्यतेऽप स्वर्ग्गँल्लोकꣳ राद्ध्नोति योऽन्न्यत्रैकादशिनेभ्यः सँवत्सरन्तनुत ऽइत्त्येष वै सम्प्रति स्वर्ग्गो लोको यदेकादशिनी प्प्रजा वै पशव ऽएकादशिनी यदैकादशिनान्न्पशूनालभते न स्वर्ग्गँल्लोकमपराद्ध्नोति न प्प्रजया पशुभिर्व्यृद्ध्यते ॥ २ ॥ प्रजापतिर्विराजमसृजत । सास्म्मात्सृष्टा पराच्च्यैत्साश्श्वम्मेद्ध्यम्प्राविशत्तान्दशिभिरनुप्प्रायुङ्क्त तामाप्नोत्तामाप्त्वा दशिभिरवारुन्द्ध यद्दशिन ऽआलभते विराजमेव तैर्यजमानोऽवरुन्द्धे शतमालभते शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं वीर्य्यमात्मन्धत्ते ॥ ३ ॥

एकादश दशत ऽआलभते । एकादशाक्षरा वै त्रिष्टुविन्द्रियमु वै वीर्यन्त्रिष्टुविन्द्रियस्यैव वीर्यस्यावरुद्ध्या ऽएकादश दशत ऽआलभते दश वै पशोः प्प्राणा ऽआत्मैकादशः प्प्राणैरेव पशून्त्समर्द्धयति वैश्वदेवा भवन्ति वैश्वदेवो वा ऽअश्वोऽश्वस्यैव सर्वत्वाय बहुरूपा भवन्ति तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नानारूपाः पशवः ॥ ४ ॥

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

[ अश्वस्य नियोजनाञ्जनमणिबन्धनादि ]

'युञ्जन्ति[1] ब्रध्नमरुषञ्चरन्त'मिति । असौ वा ऽआदित्यो ब्रध्नोऽरुषोऽमुमेवास्म्मा ऽआदित्यं युनक्ति स्वर्ग्गस्य लोकस्य समष्ट्यै ॥ १ ॥ तदाहुः । पराङ्वा ऽएतस्माद्यज्ञ ऽएति यस्य पशुरुपाकृतोऽन्न्यत्र वेदेरेती'त्येतꣳ स्तोत[2]रनेन पथा पुनरश्वमावर्त्तयासि न' ऽइति वायुर्वै स्तोता तमेवास्म्मा ऽएतत्परस्ताद्दधाति तथा नात्येति ॥२॥ अप वा ऽएतस्म्मात् । तेज ऽइन्द्रियम्पशवः श्रीः क्रामन्ति योऽश्वमेधेन यजते ॥ ३ ॥ 'वसव[3]स्त्वाञ्जन्तु । गायत्रेण च्छन्दसे'ति महिष्यभ्यनक्ति तेजो वा ऽआज्यन्तेजो गायत्री तेजसी ऽएवास्मिन्त्समीची दधाति ॥ ४ ॥ 'रुद्रां[4]स्त्वाञ्जन्तु । त्रैष्टुभेन च्छन्दसे'ति वावाता तेजो वा ऽआज्य-

(१) शु० य० सं० २३.५। (२) शु० य० सं० २३.७। (३) शु० य० सं० २३.८। (४) शु० य० सं० २३.८।

मिन्द्रियन्त्रिष्टुप्प्तेजश्चैवास्मिन्निन्द्रियञ्च समीची दधाति ॥ ५ ॥ 'आदित्यास्त्वाञ्जन्तु । जागतेन च्छन्दसे'ति परिवृक्ता तेजो वा ऽआज्यम्पशवो जगती तेजश्चैवास्मिन्पशुँश्च समीची दधाति ॥ ६ ॥ पत्न्योऽभ्यञ्जन्ति * । श्रियै वा ऽएतद्रूपं यत्पत्न्यः श्रियमेवास्मिँस्तद्दधति नास्मात्तेज ऽइन्द्रियम्पशवः श्रीरपक्रामन्ति ॥ ७ ॥ यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशो स्कन्दति यस्य निक्तस्य लोमानि शीयन्ते यत्काचानावयन्ति लोमान्येवास्य सम्भरन्ति हिरण्मया भवन्ति तस्योक्तम्ब्राह्मणमेकशतमेकशतङ्काचानावयन्ति शतायुर्वै पुरुष ऽआत्मैकशत ऽआयुष्येवात्मन्प्रतितिष्ठति 'भूर्भुवः स्व'रिति प्राजापत्याभिरावयन्ति प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयन्ति 'लाजी३ञ्छाची३न्यव्ये गव्य' ऽइत्यतिरिक्तमन्नमश्वायोपावहरति प्रजामेवान्नादीङ्कुरुत 'ऽएतदन्नमत्त देवा ऽएतदन्नमद्धि प्रजापत' ऽइति प्रजामेवान्नाद्येन समर्द्धयति ॥ ८ ॥ अप वा ऽएतस्मात् । तेजो ब्रह्मवर्चसङ्क्रामति योऽश्वमेधेन यजते होता च ब्रह्मा च ब्रह्मोद्यं वदत ऽआग्नेयो वै होता बार्हस्पत्यो ब्रह्मा ब्रह्म बृहस्पतिस्तेजश्चैवास्मिन्ब्रह्मवर्चसञ्च समीची धत्तो यूपसम्मितौ वदतो यजमानो वै यूपो यजमानमेवैतत्तेजसा

---

(१) शु० य० सं० २३. ८।
* का० श्रौ० सू० २०. ५. ५५।
(२) शु० य० सं० २३. ८। (३) शु० य० सं० २३. ८। (४) शु० य० सं० २३. ८।

च ब्रह्मवर्च्चसेन चोभयतः परिधत्तः ॥ ९ ॥ ‘कः[1] स्विदेकाकी चरती’ति । असौ वा ऽआदित्य ऽएकाकी चरत्येष ब्रह्मवर्च्चसम्ब्रह्मवर्च्चसमेवास्मिँस्तद्धत्तः ॥ १० ॥ ‘क[2] ऽउ स्विज्जायते पुन’रिति । चन्द्रमा वै जायते पुनरायुरेवास्मिँस्तद्धत्तः ॥ ११ ॥ ‘किꣳ[3] स्विद्धिमस्य भेषज’मिति । अग्निर्वै हिमस्य भेषजन्तेज ऽएवास्मिँस्तद्धत्तः ॥ १२ ॥ * ‘किँ[4]स्वावपनम्मह’दिति । अयं वै लोक ऽआवपनम्महदस्मिन्नेव लोके प्रतितिष्ठति ॥ १३ ॥ ‘का[5] स्विदासीत्पूर्वचित्ति’रिति । द्यौर्वै वृष्टिः पूर्वचित्तिर्दिवमेव वृष्टिमवरुन्द्धे ॥ १४ ॥ ‘किꣳ[6] स्विदासीद्बृहद्वय’ ऽइति । अश्वो वै बृहद्वय ऽआयुरेवावरुन्द्धे ॥ १५ ॥ ‘काँ[7] स्विदासीत्पिलिप्पिले’ति । श्रीर्वै पिलिप्पिला श्रियमेवावरुन्द्धे ॥१६॥ ‘का[8] स्विदासीत्पिशङ्गिले’ति अहोरात्रे वै पिशङ्गिले ऽअहोरात्रयोरेव प्रतितिष्ठति ॥ १७ ॥

द्वितीयाऽध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ १०८ ॥



(१) शु० य० सं० २३. ९ । (२) शु० य० सं० २३. ९ । (३) शु० य० सं० २३. ९ ।

* अत्र शतम् ६५०० ।

(४) शु० य० सं० २३. ९ । (५) शु० य० सं० २३. ११ । (६) शु० य० सं० २३. ११ । (७) शु० य० सं० २३. ११ । (८) शु० य० सं० २३. ११ ।

[ अश्वस्य प्रोक्षणादि ]

नियुक्तेषु पशुषु । प्रोक्षणीरद्ध्वर्य्युरादत्ते ऽश्श्वम्प्रोक्षिष्यन्नन्वारब्धे यजमान ऽआद्ध्वरिकं य्यजुरनुद्रुत्याश्श्वमेधिकं य्यजुः प्प्रतिपद्यते ॥ १ ॥ 'वायुष्ट्वा[1] पचतैरवत्त्वि'ति । वायुरेवैनम्पच 'त्यसितग्ग्रीवश्छागै'[2]रित्यग्ग्निर्वा ऽअसितग्ग्रीवोऽग्ग्निरेवैनञ्छागैः पचति ॥ २ ॥ 'न्यग्ग्रोधश्चमसै'[3]रिति । यत्र वै देवा यज्ञेनायजन्त त ऽएताँश्चमसान्न्यौब्जँस्ते न्न्यञ्चोऽरोहँस्तस्मान्न्यञ्चो न्न्यग्ग्रोधा रोहन्ति ॥ ३ ॥ 'शल्म्मलिर्व्वृद्ध्ये'[4]ति । शल्म्मलौ व्वृद्धिन्दधाति तस्म्माच्छल्म्मलिर्व्वनस्प्पतीनां व्वर्षिष्ठं वर्द्धते ॥४॥ 'एष[5] स्य राथ्थ्यो व्वृषे'ति । अश्श्वेनैव रथं सम्पादयति तस्म्मादश्श्वो नान्न्यद्रथाद्वहति ॥ ५ ॥ 'पड्भिश्चतुर्भिरेदग'[6]न्निति । तस्म्मादश्श्वस्त्रिभिस्तिष्ठँस्तिष्ठत्यथ युक्तः सर्वैः पद्भिः समममायुते ॥ ६ ॥ 'ब्रह्माँकृष्णश्च नोऽवत्त्वि'[7]ति । चन्द्रमा वै ब्रह्माकृष्णश्चन्द्रमस ऽएवैनम्परिददाति 'नमोऽग्ग्नय'[8] ऽइत्त्यग्ग्नय ऽएव नमस्करोति ॥ ७ ॥ 'सँशितो[9] रश्म्मिना रथ' ऽइति । रश्म्मिनैव रथं सम्पादयति तस्म्माद्रथः परियुतो दर्शनीयतमो भवति ॥ ८ ॥ 'सँशितो[10] रश्म्मिना हय' ऽइति । रश्म्मिनैवाश्श्वं सम्पादयति तस्म्मादश्श्वो रश्म्मिना प्प्रतिहतो भूयिष्ठं रोचते ॥ ९ ॥ 'सँशितो[11]

---

(१) शु० य० सं० २३. १३ । (२) शु० य० सं० २३. १३ । (३) शु० य० सं० २३. १३ । (४) शु० य० सं० २३. १३ । (५) शु० य० सं० २३. १३ । (६) शु० य० सं० २३. १३ । (७) शु० य० सं० २३ १३ । (८) शु० य० सं० २३. १३ । (९) शु० य० २३. १४ । (१०) शु० य० सं० २३. १४ । (११) शु० य० सं० २३. १४ ।

ऽअप्प्स्वप्प्सुजा' ऽइति । अप्प्सुयोनिर्वा ऽअश्श्वः स्वयैवैनं
रूपोण्या समर्द्धयति 'ब्ब्रह्मा सोमपुरोगव' ऽइति सोमपुरोगव-
मेवैनꣳ स्वर्ग्गँल्लोकङ्गमयति ॥१०॥ 'स्वयं वाजिँस्तन्वङ्कल्प्पय-
स्वे'ति । स्वयꣳ रूपङ्कुरुष्व यादृशमिच्छसीत्त्येवैनन्तदाह 'स्वयं
ऽयजस्वे'ति स्वाराज्यमेवास्मिन्दधाति 'स्वयञ्जुषस्वे'ति स्वयँ-
ल्लोकꣳ रोचयस्व यावन्तमिच्छसीत्त्येवैनन्तदाह 'महिमा तेऽ-
न्न्येन न सन्नश' ऽइत्त्यश्श्वमेव महिम्म्ना समर्द्धयति ॥११॥
'न वा ऽउ ऽएतन्म्रियसे न रिष्ष्यसी'ति । प्प्रश्श्वासय-
त्त्येवैनन्त'द्देवाँ२॥ ऽइदेषि पथिभिः सुगेभि'रिति देवयाना-
नेवैनम्पथो दर्शयति 'यत्रासते सुकृतो यत्र ते ययु'रिति
सुकृद्भिरेवैनꣳ सलोकङ्करोति 'तत्र त्त्वा देवः सविता दधा-
त्वि'ति सवितैवैनꣳ स्वर्ग्गे लोके दधाति 'प्प्रजापतये
त्त्वा जुष्ट्टम्प्प्रोक्षामी'त्त्युपाꣳश्वथोपगृह्णाति ॥ १२ ॥ 'अग्निः
पशुरासीत् । तेनायजन्त स ऽएतँल्लोकमजयद्यस्मिन्नग्निः
स ते लोको भविष्ष्यति तञ्जेष्ष्यसि पिबैता ऽअप' ऽइति
यावानग्नेर्व्विजयो यावाँल्लोको यावदैश्श्वर्य्यन्तावाँस्ते व्विज-
यस्तावाँल्लोकस्तावदैश्श्वर्य्यम्भविष्ष्यतीत्त्येवैनन्तदाह ॥ १३ ॥
'वायुः पशुरासीत् । तेनायजन्त स ऽएतँल्लोकमजयद्य-
स्मिन्वायुः स ते लोको भविष्ष्यति तञ्जेष्ष्यसि पिबैता

(१) शु० य० सं० २३. १४। (२) शु० य० सं० २३. १५। (३) शु० य०
सं० २३. १५। (४) शु० य० सं० २३. १५। (५) शु० य० सं० २३. १५। (६)
शु० य० सं० २३. १६। (७) शु० य० सं० २३. १६। (८) शु० य० सं० २३.
१६। (९) शु० य० सं० २३. १६। (१०) शु० य० सं० २२. ५। (११) शु०
य० सं० २३. १७। (१२) शु० य० सं० २३. १७।

ऽअप' ऽइति यावान्वायोर्व्विजयो यावाँल्लोको यावदैश्वर्य्य-न्तावाँस्ते व्विजयस्तावाँल्लोकस्तावदैश्वर्य्यम्भविष्यतीत्त्ये-वैनन्तदाह ॥ १४ ॥ 'सूर्य्यः पशुरासीत् । तेनायजन्त स ऽएतँल्लोकमजयद्यस्मिन्त्सूर्य्यः स ते लोको भविष्यति तञ्जेष्यसि पिबैता ऽअप' ऽइति यावान्त्सूर्य्यस्य व्विजयो यावाँल्लोको यावदैश्वर्य्यन्तावाँस्ते व्विजयस्तावाँल्लोकस्ता-वदैश्वर्य्यम्भविष्यतीत्त्येवैनन्तदाह तर्प्पयित्वाऽश्वम्पुनः सं-स्कृत्य प्प्रोक्षणीरितरान्पशून्प्प्रोक्षति तस्यातः ॥ १५ ॥

द्वितीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



[ मृतस्याऽश्वस्य परिक्रमणादि ]

देवा वा ऽउदश्वः । स्वर्ग्गँल्लोकन्न प्प्राजानँस्तमश्वः प्प्राजानाद्यदश्वेनोदश्वो यन्ति स्वर्ग्गस्य लोकस्य प्प्रज्ञात्त्यै व्वासोऽधिवासः हिरण्यमित्त्यश्वायोपस्तृणन्ति यथा नान्न्यस्म्मै पशवे तस्म्मिन्नेनमधि सञ्ज्ञपयन्त्त्यन्न्यैरेवैनन्तत्पशु-भिर्व्व्यावर्त्तयन्ति ॥१॥ घ्नन्ति वा ऽएतत्पशुम् । यदेनः सञ्ज्ञपय न्ति 'प्प्राणाय स्वाहापानाय स्वाहा व्व्यानाय स्वाहे'ति सञ्ज्ञ-प्प्यमान ऽआहुतीर्ज्जुहोति प्प्राणानेवास्म्मिन्नेतद्दधाति तथो हास्यैतेन जीवतैव पशुनेष्टम्भवति ॥२॥ 'अम्बे * ऽअम्बिकेऽ-म्बालिके । न मा नयति कश्चने'ति पत्नीरुदानयत्त्यह्वैते-

(१) शु० य० सं० २३. १७। (२) शु० य० सं० २३. १८। (३) शु० य० सं० २३. १८।

* 'आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालिकेऽम्बिके पूर्वे' (पा० सू० ६. १. ११८) इति प्रकृतिभावः।

वैना ऽएतदुथो मेध्या ऽएवैनाᳬ करोति ॥ ६ ॥ 'गणानान्त्वा गणपतिᳫं हवामह' ऽइति । पत्न्यᳬ परियन्त्यपह्नुवत ऽएवास्मा ऽएतदुतो न्न्येवास्मै ह्नुवतेऽथो धुवत ऽएवैनन्त्रिᳬ परियन्ति त्रयो वा ऽइमे लोका ऽएभिरेवैनँल्लोकैर्द्धुवते त्रिᳬ पुनᳬ परियन्ति षट् सम्पद्यन्ते षड्वा ऽऋतव ऽऋतुभिरेवैनन्धुवते ॥ ७ ॥ अप वा ऽएतेभ्यᳬ प्प्राणाᳬ क्क्रामन्ति । ये यज्ञे धुवनन्तन्न्वते नव कृत्वᳬ परियन्ति नव वै प्प्राणाᳬ प्प्राणानेवात्मन्दधते नैभ्यᳬ प्प्राणा ऽअपक्क्रामन्त्या'हमजानि गर्ब्भधमात्त्वमजासि गर्ब्भध'मिति प्प्रजा वै पशवो गर्ब्भᳬ प्प्रजामेव पशूनात्मन्धत्ते 'तौ ऽउभौ चतुरᳬ पदᳬ सम्प्रसारयावे'ति मिथुनस्यावरुद्ध्यै 'स्वर्ग्गे लोके प्प्रोर्ण्णुवाथा'मित्त्येष वै स्वर्ग्गो लोको यत्र पशुᳫं संज्ञपयन्ति तस्मादेवमाह 'व्वृषा वाजी रेतोधा रेतो दधात्वि'ति मिथुनस्यैवावरुद्ध्यै ॥ ५ ॥

द्वितीयाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

[ संवादः ]

अप वा ऽएतस्मात् । श्री राष्ट्रङ्क्रामति योऽश्श्वमेधेन यजते ॥ १ ॥ 'ऊर्द्ध्वामेनामुच्छ्रापये'ति । श्श्रीर्वै राष्ट्रमश्श्वमेधᳬ श्श्रियमेवास्मै राष्ट्रमूर्द्ध्वमुच्छ्रयति ॥ २ ॥ 'गिरौ

(१) शु० य० सं० २३. १९। (२) शु० य० सं० २३. १९। (३) शु० य० सं० २३. २०। (४) शु० य० सं० २३. २०। (५) शु० य० सं० २३. २०। (६) शु० य० सं० २३. २६। (७) शु० य० सं० २३. २६।

भारꣳ हरन्निवे'ति । श्रीर्वै राष्ट्रस्य भारꣳ श्रियमेवास्मै राष्ट्रꣳ सन्नह्यत्यथो श्रियमेवास्मिन्राष्ट्रमधिनिदधाति ॥ ३ ॥ 'अथास्यै मद्ध्यमेधता'मिति । श्रीर्वै राष्ट्रस्य मद्ध्यꣳ श्रियमेव राष्ट्रे मद्ध्यतोऽन्नाद्यन्दधाति ॥ ४ ॥ 'शीते वाते पुनन्निवे'ति । क्षेमो वै राष्ट्रस्य शीतं क्षेममेवास्मै करोति ॥ ५ ॥ 'यकासकौ शकुन्तिके'ति । विड्वै शकुन्तिका'हुलगिति वञ्चती'ति विशो वै राष्ट्राय वञ्चन्त्या'हन्ति गभे पसो निगल्गलीति धारके'ति विड्वै गभो राष्ट्रम्पसो † राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशङ्घातुकः ॥ ६ ॥ 'माता च ते पिता च त' ऽइति । इयं वै मातासौ पिताभ्यामेवैनꣳ स्वर्गँल्लोकङ्गमयत्य'ग्रं व्वृक्षस्य रोहत' ऽइति श्रीर्वै राष्ट्रस्याग्रꣳ श्रियमेवैनꣳ राष्ट्रस्याग्रङ्गमयति 'प्रतिलामीति ते पिता गभे मुष्टिमतꣳसय'दिति विड्वै गभो राष्ट्रम्मुष्टी राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशङ्घातुकः ॥ ७ ॥ 'यद्धरिणो यवमत्ती'ति विड्वै यवो राष्ट्रꣳ हरिणो विशमेव राष्ट्रायाद्याङ्करोति तस्माद्राष्ट्री विशमत्ति 'न पुंष्ट्रम्पशु मन्न्यत' ऽइति तस्माद्राजा पशून्न पुष्यति 'शूद्रा यदर्य्यजारा *

---

(१) शु० य० सं० २३. २६ । (२) शु० य० सं० २३. २६ । (३) शु० य० सं० २३. २२ । (४) शु० य० सं० २३. २२ । (५) शु० य० सं० २३. २२ ।

† 'पस इति पसतेः स्पृशतिकर्मणः' ( निरु० ५. १६ ) इति यास्कः ।

(६) शु० य० सं० २३. २४ । (७) शु० य० सं० २३. २४ । (८) शु० य० सं० २३. २४ । (९) शु० य० सं० २३. ३० ।

(१०) शु० य० सं० २३. ३० । (११) शु० य० सं० २३. ३० ।

* 'अर्यः स्वामिवैश्ययोः' ( पा० ३. १. १०३ ) इति निपातनादर्यो वैश्यो जार उपपतिर्यस्याः सा अर्यजारा ।

न पोषाय धनायती'ति तस्म्माद्वैशीपुत्त्रन्नाभिषिञ्चति ॥ ८ ॥ अप वा ऽएतेब्भ्यः प्प्राणाः क्क्रामन्ति । ये यज्ञेऽपूतां व्वाचं व्वदन्ति 'दधिक्क्राव्व्णो ऽअकारिष'मिति सुरभिमतीमृचमन्ततोऽन्न्वाहुर्व्वाचमेव पुनते नैब्भ्यः प्प्राणा ऽअपक्क्रामन्ति ॥ ९ ॥

द्वितीयाध्याये नवमं ब्राह्मणम् ॥ ९ ॥



[ अश्वशरीरे सूचीभिर्वितोदः ]

यदसिपथान्न्कल्प्पयन्ति । सेतुमेव तत् सङ्क्रमणं यजमानः कुरुते स्वर्ग्गस्य लोकस्य समष्ट्यै ॥१॥ सूचीभिः कल्प्पयन्ति । व्विशो वै सूच्च्यो राष्ट्रमश्वमेधो व्विशञ्चैवास्मिन्न्राष्ट्रञ्च समीची दधति हिरण्मय्यो भवन्ति तस्योक्तम्ब्राह्मणम् ॥ २ ॥ त्त्रय्यः सूच्च्यो भवन्ति । लोहमय्यो रजता हरिण्यो दिशो वै लोहमय्योऽवान्तरदिशो रजता ऽऊर्द्ध्वा हरिण्यस्ताभिरेवैनङ्कल्प्पयन्ति तिरश्चीभिश्चोर्द्ध्वाभिश्च वहुरूपा भवन्ति तस्म्माद्बहुरूपा दिशो नानारूपा भवन्ति तस्म्मान्नानारूपा दिशः ॥ ३ ॥

द्वितीयाध्याये दशमं ब्राह्मणम् ॥ १० ॥



( ३ ) शु० य० सं० २३. ३२ ।
( ४ ) 'ग' 'ज' पुस्तकयोः "हिरण्यमय्यो" इति पाठः ।

[ परिपशव्याहुती ]

प्रजापतिरकामयत । महान्भूयान्त्स्यामिति स ऽएता-वश्वमेधे महिमानौ ग्रहावपश्यत्तावजुहोत्ततो वै स महा-न्भूयानभवत्स यः कामयेत महान्भूयान्त्स्यामिति स ऽएतावश्वमेधे महिमानौ ग्रहौ जुहुयान्महान्हैव भूया-न्भवति ॥ १ ॥ वपामभितो जुहोति । यजमानो वा ऽअश्वमेधो राजा महिमा राज्येनैवैनमुभयतः परि-गृह्णाति पुरस्तात्स्वाहाकृतयो वा ऽअन्ये देवा ऽउपरिष्टा-त्स्वाहाकृतयोऽन्ये तानेवैतत्प्रीणाति 'स्वाहा देवेभ्यो देवेभ्यः स्वाहे'ति राज्ञा वपाम्परियजति ये चैवास्मिँल्लोके देवा य ऽउ चामुष्मिँस्तानेवैतत्प्रीणाति त ऽएनमुभये देवाः प्रीताः स्वर्गँल्लोकमभिवहन्ति ॥ ३ ॥

द्वितीयाध्याये एकादश ब्राह्मणम् ॥ ११ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ अश्वस्यावदानम् ]

प्रजापतेरक्ष्यश्वयत् । तत्परापतत्ततोऽश्वः समभव-द्यदश्वयत्तदश्वस्याश्वत्वन्तद्देवा ऽअश्वमेधेनैव प्रत्यद-धुरेष ह वै प्रजापतिः सर्वङ्करोति योऽश्वमेधेन यजते सर्व ऽएव भवति सर्वस्य वा ऽएषा प्रायश्चित्तिः सर्वस्य भेषजं सर्वं वा ऽएतेन पाप्मानन्देवा ऽअतरन्नपि वा ऽएतेन ब्रह्महत्यामतरँस्तरति सर्वम्पाप्मानन्तरति ब्रह्महत्यां

(१) शु० [illegible] ६. ११

ऽष्यो ऽश्वमेधेन यजते ॥ १ ॥ उत्तरं वै तत्प्रजापतेरक्ष्य-श्वयत् । तस्मादुत्तरतो ऽश्वस्यावद्यन्ति दक्षिणतो ऽन्येषा-म्पशूनाम् ॥ २ ॥ वैतसः कटो भवति । अप्सुयोनिर्वा ऽअश्वो ऽप्सुजा वेतसः स्वयैवैनं योन्या समर्द्धयति ॥ ३ ॥ चतुष्टोम स्तोमो भवति । सरड्वा ऽअश्वस्य सक्थ्यावृहत्तद्देवाश्चतुष्टोमेनैव स्तोमेन प्रत्यदधुर्यच्च-तुष्टोम स्तोमो भवत्यश्वस्यैव सर्वत्वाय सर्वस्तोमोऽति-रात्र ऽउत्तममहर्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्व-मश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ४ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ वपाप्रचारः ]

परमेण वा ऽएष स्तोमेन जित्वा । चतुष्टोमेन कृते-नायानामुत्तरे ऽहन्नेकविꣳशे प्रतिष्ठायाम्प्रतितिष्ठत्येकविꣳ-शात्प्रतिष्ठाया ऽउत्तरमहर्ऋतूनन्वारोहत्यृतवो वै पृष्ठा-न्यृतवः सँवत्सर ऽऋतुष्वेव सँवत्सरे प्रतितिष्ठति ॥ १ ॥ शक्वर्यः पृष्ठम्भवन्ति । अन्यदन्यच्छन्दो ऽन्येऽन्ये वा ऽअत्र पशव ऽआलभ्यन्त ऽउतेव ग्राम्या ऽउतेवारण्या यच्छक्वर्यः पृष्ठम्भवन्त्यश्वस्यैव सर्वत्वायान्ये पशव ऽआलभ्यन्तेऽन्येऽन्ये हि स्तोमाः क्रियन्ते ॥ २ ॥ नैते सर्वे पशवो यदजावयश्चारण्याश्चैते वै तदाहुः । नैते सर्वे पशवो यद्गव्या ऽइति गव्यानुत्तमेऽहन्नालभत

(१) "गव्या ऽउत्तमे॰" इति 'ग' 'ज' पुस्तकयोः पाठः ।

ऽएते वै सर्वे पशवो यद्गव्याः सर्वानेव पशूनालभते वैश्वदेवा भवन्ति वैश्वदेवो वा ऽअश्वोऽश्वस्यैव सर्वत्वाय बहुरूपा भवन्ति तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नानारूपाः पशवः ॥ ३ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—०—

[ यूपैकविंशतिः ]

यत्तिस्रोऽनुष्टुभो भवन्ति । तस्मादश्वस्त्रिभिस्तिष्ठँस्तिष्ठति यच्चतस्रो गायत्र्यस्तस्मादश्वः सर्वैः पद्भिः प्रतिदधत्पलायते परमं वा ऽएतच्छन्दो यदनुष्टुप्परमोऽश्वः पशूनाम्परमश्चतुष्टोम स्तोमानाम्परमेणैवैनम्परमताङ्गमयति ॥ १ ॥ शक्वर्यः पृष्ठम्भवन्ति । अन्यदन्यच्छन्दोऽन्येऽन्ये हि स्तोमाः क्रियन्ते यच्छक्वर्यः पृष्ठम्भवन्त्यश्वस्यैव सर्वत्वाय ॥ १ ॥ एकविंशमग्निष्टोममहर्भवति । असौ वा ऽआदित्य ऽएकविंशः सोऽश्वमेधः स्वेनैवैनथं स्तोमेन स्वायान्देवतायाम्प्रतिष्ठापयति ॥ ३ ॥ वामदेव्यम्मैत्रावरुणसाम भवति । प्रजापतिर्वै वामदेव्यम्प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयति ॥४॥ पार्थुरश्मम्ब्रह्मसाम भवति । रश्मिना वा ऽअश्वो यत ऽईश्वरो वा ऽअश्वोऽयतोऽधृतोऽप्रतिष्ठितः परापरावतङ्गन्तोर्यत्पार्थुरश्मम्ब्रह्मसाम भवत्यश्वस्यैव धृत्यै ॥ ५ ॥ सङ्कृत्यच्छावाकसाम भवति । उत्सन्नयज्ञ ऽइव वा ऽएष यदश्वमेधः किं वा ह्येतस्य क्रियते किं वा न यस्स

ङ्क्त्यच्छावाकसाम भवत्यश्वस्यैव सर्वत्वाय सर्वस्तोमोऽतिरात्र ऽउत्तममहर्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ६ ॥ एकविꣳशोऽग्निर्भवति । एकविꣳश स्तोम ऽएकविꣳशतिर्यूपा यथा वा ऽऋषभा वा वृषाणो वा सꣳस्फुरेरन्नेवमेते स्तोमाः समृच्छन्ते यदेकविꣳशास्तान्न्यत्समर्प्पयेदार्त्तिमार्च्छेद्यजमानो हन्न्येतास्य यज्ञः ॥ ७ ॥ द्वादश ऽएवाग्निः स्यात् । एकादश यूपा यद्द्वादशोऽग्निर्भवति द्वादश मासाः सँवत्सरः सँवत्सरमेव यज्ञमाप्नोति यदेकादश यूपा विराड्वा ऽएषा सम्मीयते यदेकादशिनी तस्यै य ऽएकादश स्तन ऽएवास्यै स दुह ऽएवैनान्तेन ॥ ८ ॥ तदाहुः । यद्द्वादशोऽग्निः स्यादेकादश यूपा यथा स्थूरिणा यायात्तादृक्तदित्येकविꣳश ऽएवाग्निर्भवत्येकविꣳश स्तोम ऽएकविꣳशतिर्यूपास्तद्यथा प्रष्टिभिर्यायात्तादृक्तत् ॥ ९ ॥ शिरो वा ऽएतद्यज्ञस्य यदेकविꣳशः । यो वा ऽअश्वमेधे त्रीणि शीर्षाणि वेद शिरो ह राज्ञाम्भवत्येकविꣳशोऽग्निर्भवत्येक विꣳश स्तोम ऽएकविꣳशतिर्यूपा ऽएतानि वा ऽअश्वमेधे त्रीणि शीर्षाणि तानि य ऽएवं वेद शिरो ह राज्ञाम्भवति यो वा ऽअश्वमेधे तिस्रः ककुदो वेद ककुद्ध राज्ञाम्भवत्येकविꣳशोऽग्निर्भवत्येकविꣳश स्तोम ऽएकविꣳशतिर्यूपा ऽएता वा ऽअश्वमेधे तिस्रः ककुदस्ता य ऽएवं वेद ककुद्ध राज्ञाम्भवति ॥ १० ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ अश्वस्य लोहितश्रपणादि ]

सर्वाभ्यो वै देवताभ्योऽश्व ऽआलभ्यते । यत्प्राजापत्यङ्कुर्य्याद्या देवता ऽअपिभागास्ता भागधेयेन व्यर्द्धये'च्छोदन्दद्भिरवकान्दन्तमूलै'रित्याज्यमवद्याना कृत्वा प्रत्याख्यायन्देवताभ्य ऽआहुतीर्ज्जुहोति या ऽएव देवता ऽअपिभागास्ता भागधेयेन समर्द्धयत्यरण्येऽनूच्यान्हुत्वा द्यावापृथिव्यामुत्तमामाहुतिञ्जुहोति द्यावापृथिव्योर्वै सर्वा देवताः प्रतिष्ठितास्ता ऽएवैतत्प्रीणाति देवासुराः संयत्ता ऽआसन् ॥ १ ॥ तेऽब्रुवन् । अग्नयः स्विष्टकृतोऽश्वस्य वयमुद्धारमुद्धरामहै तेनासुरानभिभविष्याम ऽइति ते लोहितमुदहरन्त भ्रातृव्याभिभूत्यै यत्स्विष्टकृद्भ्यो लोहितञ्जुहोति भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य ऽएवं वेद ॥ २ ॥ गोमृगकण्ठेन प्रथमामाहुतिञ्जुहोति । पशवो वै गोमृगा रुद्रः स्विष्टकृत्पशूनेव रुद्रादन्तर्द्दधाति तस्माद्यत्रैषाऽश्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः पशूनभिमन्यते ॥ ३ ॥ अश्वशफेन द्वितीयामाहुतिञ्जुहोति । पशवो वा ऽएकशफा रुद्रः स्विष्टकृत्पशूनेव रुद्रादन्तर्द्दधाति तस्माद्यत्रैषाऽश्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः पशूनभिमन्यते ॥ ४ ॥ अयस्मयेन चरुणा तृतीयामाहुतिञ्जुहोति । आयास्या[2] वै प्रजा रुद्रः स्विष्टकृत्प्रजा ऽएव रुद्रादन्तर्द्दधाति तस्माद्य-

(१) शु० य० सं० २५. १

(२) "आयस्यो" इति 'ग' 'ज' पुस्तकयोः पाठः ।

त्रैषाश्श्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः प्प्रजा ऽअभिमन्न्यते ॥ ५ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

—०—

[ अश्वमेधेनापमृत्युनिरासः ]

सर्वेषु वै लोकेषु । मृत्त्यवोऽन्न्वायत्तास्तेब्भ्यो यदाहुतीर्न्न जुहुयाल्लोके लोक ऽएनम्मृत्त्युर्व्विन्देद्यन्म्मृत्युब्भ्य ऽआहुतीर्ज्जुहोति लोके लोक ऽएव मृत्त्युमपजयति ॥ १ ॥

तदाहुः । यदमुष्म्मै स्वाहामुष्म्मै स्वाहेति जुह्वत्सञ्चक्षीत बहुम्मृत्त्युममित्रङ्कुर्व्वीत मृत्त्यव ऽआत्मानमपिदद्ध्यादिति 'मृत्त्यवे स्वाहे'त्येकस्म्मा ऽएवैकामाहुतिञ्जुहोत्त्येको ह वा ऽअमुष्मिँल्लोके मृत्त्युरशनायैव तमेवामुष्मिँल्लोकेऽपजयति ॥२॥ [ अर्धः प्रपाठकः कण्डिकाः ५६ ] '[2]ब्रह्महत्त्यायै स्वाहे'ति द्वितीयामाहुतिञ्जुहोति। अमृत्युर्ह वा ऽअन्न्यो ब्ब्रह्महत्त्यायै मृत्त्युरेष ह वै साक्षान्म्मृत्त्युर्य्यद्ब्रह्महत्त्या साक्षादेव मृत्त्युमपजयति ॥ ३ ॥

एताछं ह वै मुण्डिभ ऽऔदन्न्यः । ब्रह्महत्त्यायै प्प्रायश्चित्तिं विदाञ्चकार यद्ब्रह्महत्त्याया ऽआहुतिञ्जुहोति मृत्त्युमेवाहुत्त्या तर्प्पयित्त्वा परिपाणङ्कृत्त्वा ब्ब्रह्मघ्ने भेषजङ्करोति तस्म्माद्यस्यैषाश्श्वमेध ऽआहुतिर्हूयतेऽपि योऽस्यापरीषु प्प्रजायाम्ब्राह्मणछं हन्ति तस्म्मै भेषजङ्करोति ॥ ४ ॥

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

—०—

(१) शु० य० सं० ३९.१३। (२) शु० य० सं० ३९.१३।

[ अश्वस्तोमीयहोमः ]

अश्श्वस्य वा ऽआलब्धस्य । मेध ऽउदक्क्रामत्तदश्श्वस्तोमीयमभवद्यदश्श्वस्तोमीयञ्जुहोत्त्यश्श्वमेव मेधसा समर्द्धयति ॥ १ ॥ आज्ज्येन जुहोति । मेधो वा ऽआज्ज्यम्मेधोऽश्श्वस्तोमीयम्मेधसैवास्मिँमस्तन्मेधो दधात्त्याज्ज्येन जुहोत्त्येतद्वै देवानाम्प्प्रियन्धाम यदाज्ज्यम्प्प्रियेणैवैनान्धाम्म्ना समर्द्धयति ॥ २ ॥ अश्श्वस्तोमीयꣳ हुत्त्वा द्विपदा जुहोति । अश्श्वो वा ऽअश्श्वस्तोमीयम्पुरुषो द्विपदा द्विपाद्वै पुरुषो द्विप्प्रतिष्ठस्तदेनम्प्रतिष्ठया समर्द्धयति ॥ ३ ॥ तदाहुः । अश्श्वस्तोमीयम्पूर्वꣳ होतव्याँ३ द्विपदा३ ऽइति पशवो वा ऽअश्श्वस्तोमीयम्पुरुषो द्विपदा यदश्श्वस्तोमीयꣳ हुत्त्वा द्विपदा जुहोति तस्म्मात्पुरुष ऽउपरिष्टात्पशूनधितिष्ठति ॥ ४ ॥ षोडशाश्श्वस्तोमीया जुहोति । षोडशकला वै पशवः सा पशूनाम्मात्त्रा पशूनेव मात्त्रया समर्द्धयति यत्कनीयसीर्वा भूयसीर्वा जुहुयात्पशून्मात्त्रया व्व्यर्द्धयेत्षोडश जुहोति षोडशकला वै पशवः सा पशूनाम्मात्त्रा पशूनेव मात्त्रया समर्द्धयति नान्न्यामुत्तमामाहुतिञ्जुहोति यदन्न्यामुत्तमामाहुतिञ्जुहुयात्प्रतिष्ठायै च्च्यवेत द्विपदा ऽउत्तमा जुहोति प्प्रतिष्ठा वै द्विपदाः प्प्रत्त्येव तिष्ठति 'जुम्बकाय स्वाहे'त्त्यवभृथ ऽउत्तमामाहुतिञ्जुहोति व्वरुणो वै जुम्बकः साक्षादेव व्वरुणमवयजते शुक्क्लस्य खलतेर्व्विक्लिधस्य पिङ्गाक्षस्य मूर्द्धनि जुहोत्येतद्वै व्वरुणस्य रूपꣳ

(१) शु० य० मं० २५. ९।

रूपेणैव व्वरुणमवयजते ॥ ५ ॥ द्वादश ब्ब्रह्मौदनानुत्थाय निर्व्वपति । द्वादशभिर्व्वैष्टिभिर्य्यजते तदाहुर्य्यज्ञस्य वा ऽएतद्रूपं यदिष्टयो यदिष्टिभिर्य्यजेतोपनामुक ऽएनं यज्ञः स्यात्पापीयाँस्तु स्याद्यातयामानि वा ऽएतदीजानस्य च्छन्दाᳩसि भवन्ति तानि किमेतावदाशु प्प्रयुञ्जीत सर्व्वा वै सᳩस्थिते यज्ञे व्वागाप्यते सात्राप्ता यातयाम्नी भवति क्रूरीकृतेव हि भवत्यरुष्कृता व्वाग्वै यज्ञस्तस्मान्न प्प्रयुञ्जीतेति ॥ ६ ॥ द्वादशैव ब्ब्रह्मौदनानुत्थाय निर्व्वपेत् । प्रजापतिर्व्वा ऽओदनः प्प्रजापतिः सँवत्सरः प्प्रजापतिर्य्यज्ञः सँवत्सरमेव यज्ञमाप्नोत्युपनामुक ऽएनं यज्ञो भवति न पापीयान्भवति ॥ ७ ॥

तृतीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

—○—

[ अश्वमेधमहिमा ]

एष वै प्प्रभूर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव प्प्रभूतम्भवति ॥ १ ॥ एष वै विभूर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव विभूतम्भवति ॥ २ ॥ एष वै व्व्यष्टिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव व्व्यष्टम्भवति ॥ ३ ॥ एष वै विधृतिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव विधृतम्भवति ॥ ४ ॥ एष वै व्व्यावृत्तिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव व्व्यावृत्तम्भवति ॥ ५ ॥ एष वा ऽऊर्ज्जस्वान्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेवोर्ज्जस्वद्भवति ॥ ६ ॥ एष वै

पयस्वान्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव पयस्वद्भवति ॥ ७ ॥ एष वै ब्रह्मवर्च्चसी नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ ब्राह्मणो ब्रह्मवर्च्चसी जायते ॥ ८ ॥ एष वा ऽअतिव्याधी नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ राजन्न्योऽतिव्याधी जायते ॥ ९ ॥ एष वै दीर्घो नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ दीर्घारण्यञ्जायते ॥ १० ॥ एष वै क्लृप्तिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव क्लृप्तम्भवति ॥ ११ ॥ एष वै प्रतिष्ठा नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव प्रतिष्ठितम्भवति ॥ १२ ॥

तृतीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

—०—

[ अश्वमेधप्रायश्चित्तम् ]

अथातः प्रायश्चित्तीनाम् । यद्यश्वो वडवाᳫं स्कन्देद्वायव्यम्पयोऽनुनिर्व्वपेद्वायुर्वै रेतसां विकर्त्ता प्राणो वै वायुः प्राणो हि रेतसां विकर्त्ता रेतसैवास्मिँस्तद्रेतो दधाति ॥ १ ॥ अथ यदि स्रामो विन्देत् । पौष्णञ्चरुमनुनिर्व्वपेत्पूषा वै पशूनामीष्टे स यस्यैव पशवो यः पशूनामीष्टे तमेवैतत्प्रीणात्यगदो हैव भवति ॥ २ ॥ अथ यद्यक्षतामयो विन्देत् । वैश्वानरन्द्वादशकपालम्भूमिकपालम्पुरोडाशमनुनिर्व्वपेदियं वै वैश्वानर ऽइमामेवैतत्प्रीणात्यगदो हैव भवति ॥ ३ ॥ अथ यद्यक्ष्यामयो विन्देत् । सौर्य्यञ्चरुमनुनिर्व्वपेत्सूर्य्यो वै प्रजानाञ्चक्षुर्यदा ह्येवैष ऽउ-

देत्यथेदꣳ सर्वञ्चरति चक्षुषैवास्मिꣳस्तच्चक्षुर्दधाति स यच्च-रुर्भवति चक्षुषा ह्ययमात्मा चरति ॥ ४ ॥ अथ यद्युदके म्रियेत । वारुणं यवमयञ्चरुमनुनिर्वपेद्वरुणो वा ऽएत-ङ्गृह्णाति योऽप्सु म्रियते स्वयैवैनन्देवता गृह्णाति तामे-वैतत्प्रीणाति सास्मै प्रीताश्वमालम्भायानुमन्यते तया-नुमतमालभते स यद्यवमयो भवति वरुण्या हि यवाः ॥ ५ ॥ अथ यदि नश्येत् । त्रिहविषमिष्टिमनुनिर्वपेद् द्यावापृथिव्यमेककपालम्पुरोडाशं वायव्यम्पयः सौर्यञ्चरुं यद्वै किञ्च नश्यत्यन्तरैव तद्द्यावापृथिवी नश्यति तद्वायुरुपवात्यादित्योऽभितपति नैताभ्यो देवताभ्य ऽऋते किञ्चन नश्यति सैषा पृथगेव नष्टवेदनी स यद्यस्याप्य-श्वन्नश्येदेतयैव यजेतानु हैवैनद्विन्दत्यथ यद्यमित्रा ऽअश्वं विन्देरन्यदि वा म्रियेत यदि वाप्स्वश्वमानीय प्रोक्षेयुः सैव तत्र प्रायश्चित्तिः ॥ ६ ॥

तृतीयाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥

—०—

[ अश्वमेधारम्भकालादि ]

प्रजापतिरकामयत । सर्वान्कामानाप्नुयाꣳ सर्वा व्यष्टीर्व्यश्नुवीयेति स ऽएतमश्वमेधन्त्रिरात्रं यज्ञ-क्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वा सर्वान्कामानाप्नो-त्सर्वा व्यष्टीर्व्याश्नुत सर्वान्ह वै कामानाप्नोति सर्वा व्यष्टीर्व्यश्नुते योऽश्वमेधेन यजते ॥ १ ॥ तदाहुः ।

कस्मिन्नृतावभ्यारम्भ ऽइति ग्रीष्मऽएवाभ्यारभेतेत्यु हैक ऽआहुर्ग्रीष्मो वै क्षत्रियस्यर्त्तुः क्षत्रिययज्ञ ऽउ वा ऽएष यदश्वमेध ऽइति ॥ २ ॥ तद्वै वसन्त ऽएवाभ्यारभेत । वसन्तो वै ब्राह्मणस्यर्त्तुर्य्य ऽउ वै कश्च यजते ब्राह्मणी-भूयेवैव यजते तस्माद्वसन्त ऽएवाभ्यारभेत ॥ ३ ॥ सा यासौ फाल्गुनी पौर्णमासी भवति । तस्यै पुरस्तात्षडहे वा सप्ताहे वर्त्विज ऽउपसमायन्त्यध्वर्युश्च होता च ब्रह्मा चोद्गाता चैतान्वा ऽअन्वन्य ऽऋत्विजः ॥ ४ ॥ तेभ्योऽध्वर्युश्चातुष्प्राश्यम्ब्रह्मौदनन्निर्वपति । तस्योक्तम्ब्रा-ह्मणश्चतुरः पात्रांश्चतुरोऽञ्जलींश्चतुरः प्रसृतान्द्वादशविध-न्द्वादश मासाः संवत्सरः सर्वः संवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ५ ॥ तमेते चत्वार ऽऋत्विजः प्राश्नन्ति । तेषामुक्तम्ब्राह्मणन्तेभ्यश्चत्वारि सहस्राणि ददाति सर्वं वै सहस्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै चत्वारि च सुवर्णानि शतमानानि हि-रण्यानि तस्यो ऽएवोक्तम् ॥ ६ ॥ अथास्मा ऽअध्वर्यु-र्न्निष्कम्प्रतिमुञ्चन्न्वाचयति * । 'तेजोऽसि शुक्रममृत'-मिति तेजो वै शुक्रममृतः हिरण्यन्तेज ऽएवास्मि-ञ्छुक्रममृतन्दधा'त्यायुष्पा ऽआयुर्म्मे पाही'त्यायुरेवा-स्मिन्दधात्यथैनमाह वाचं यच्छेति वाग्वै यज्ञो यज्ञस्यै-

* 'निष्कं प्रतिमुञ्चन्वाचयति तेजोऽसीति' ( का० श्रौ० सू० २०, १. ९ ) । चतुःसुवर्ण-मितं आभरणविशेषो निष्कः ।

( १ ) शु० य० सं० २२. १ । ( २ ) शु० य० सं० २२. १ ।

वाग्यमनायाभ्यारम्भाय ॥७॥ चतस्रो जाया ऽउपक्लृप्ता भवन्ति । महिषी वावाता परिवृक्ता पालागली सर्वा निष्किण्योऽलङ्कृता मिथुनस्यैव सर्वत्वाय ताभिः सहाग्न्यगारम्प्रपद्यते पूर्वया द्वारा यजमानो दक्षिणया पत्न्यः ॥ ८ ॥ सायमाहुत्याᳬ हुतायाम् । जघनेन गार्हपत्यमुदङ्वावातया सह संविशति तदेवापीतराः संविशन्ति सोऽन्तरोरू ऽअसंवर्त्तमानः शेतेऽनेन तपसा स्वस्ति सँवत्सरस्योदृचः समश्नवा ऽइति ॥ ९ ॥ प्रातराहुत्याᳬ हुतायाम् । अद्ध्वर्युः पूर्णाहुतिञ्जुहोति सर्वं वै पूर्णः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै तस्यां वरेण वाचं विसृजते * वरन्ददामि ब्रह्मण ऽइति सर्वं वै वरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ १० ॥ † अथ योऽस्य निष्कः प्रतिमुक्तो भवति । तमद्ध्वर्यवे ‡ ददात्यद्ध्वर्यवे ददमृतमायुरात्मन्धत्तेऽमृतᳬ ह्यायुर्हिरण्यम् ॥ ११ ॥ अथाग्नेयीमिष्टिन्निर्वपति । पथश्च कामाय यज्ञमुखस्य चाच्छम्बट्कारायाथो ऽअग्निमुखा ऽउ वै सर्वा देवताः सर्वे कामा ऽअश्वमेधे मुखतः सर्वान्देवान्प्रीत्वा सर्वाञ्कामानाप्नवानीति ॥ १२ ॥ तस्यै पञ्चदश सामिधेन्यो भवन्ति । पञ्चदशो वै वज्रो वीर्यं वज्रो वज्रेणैवैतद्वीर्येण यजमानः

(१) महिषी — प्रथमपरिणीता स्त्री । वावाता = [illegible] । परिवृक्ता = [illegible] । पालागली = [illegible]

(२) 'निष्किण्यो०' इति 'ग' 'ज' पुस्तकयोः पाठः ।

* तथा चोक्तं सूत्रकृता—'आ वरदानाद्वाग्यमनम्' ( का० श्रौ० सू० २०।१।११ ) ।

† [illegible] ६६०० ।

‡ 'अध्वर्यवे न प्रतिमुक्तं निष्कम्' ( का० श्रौ० सू० २०।१।२० ) ।

पुरस्तात्पाप्मानमपहते वार्त्रघ्नावाज्यभागौ पाप्मा वै वृत्रः पाप्मनोऽपहत्या 'ऽअग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाᳯं रेताᳯंसि जिन्वति' 'भुवो यज्ञस्य रजसश्च नेते'त्युपांशु हविषो याज्यानुवाक्ये मूर्द्धन्वत्यन्न्या भवति सद्वत्यद्ध्येष वै मूर्द्धा य ऽएष तपत्येतस्यैवा-वरुद्ध्या ऽअथ यत्सद्वती सदेवावरुन्द्धे विराजौ सँय्याज्ये सर्व्वदेवत्यं वा ऽएतच्छन्दो यद्विराट् सर्व्वे कामा ऽअश्वमेधे सर्व्वान्देवान्प्रीत्वा सर्व्वान्कामानाप्नवानीति हिरण्यन्दक्षिणा सुवर्णᳯं शतमानन्तस्योक्तम्ब्राह्मणम् ॥ १३ ॥ अथ पौष्णं चरुन्निर्व्वपति । पूषा वै पथीनामधिपतिरश्वायैवैतत्स्वस्त्ययनङ्क-रोत्यथो ऽइयं वै पृथिवी पूषेमामेवास्मा ऽएतद्गोप्त्रीङ्करोति तस्य हि नार्त्तिरस्ति न ह्वला यमियमद्धन्गोपायतीमामे-वास्मा ऽएतद्गोप्त्रीङ्करोति ॥ १४ ॥ तस्यै सप्तदश सामिधेन्न्यो भवन्ति । सप्तदशो वै प्रजापतिः प्रजा-पतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै वृधन्वन्तावाज्यभागौ यजमानस्यैव वृद्ध्यै 'पूषँस्तव व्रते वयम्पथस्पथः परिपतिं वचस्ये'त्युपांशु हविषो याज्यानुवाक्ये व्रतवत्यन्न्या भवति पथन्वत्यन्न्या वीर्य्यं वै व्रतं वीर्य्यस्याप्त्यै वीर्य्य-स्यावरुद्ध्या ऽअथ यत्पथन्वत्यश्वायैवैतत्स्वस्त्ययनङ्करोत्य-नुष्टुभौ सँय्याज्ये वागवा ऽअनुष्टुब्वाग्वै प्रजापतिः प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै वासः शतन्दक्षिणा रूपं वा ऽएतत्पुरुषस्य यद्वासस्तस्माद्यमेव कञ्च सुवास समाहुः को न्वयमिति रूपसमृद्धो हि भवति रूपेणैवैनᳯं

(१) शु० य० सं० १३. १४-१५। (२) शु० य० सं० ३४. ४१-४२।

समर्द्धयति शतम्भवति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयु-
रेवेन्द्रियं वीर्य्यमात्मन्धत्ते ॥ १५ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—o—

[ ब्राह्मणद्वयेन सावित्र्य इष्टयः, पारिप्लवाशंसनादि च निरूप्यन्ते ]

एतस्यान्तायमानायाम् । अश्श्वन्निक्त्वोदानयन्ति य-
स्मिन्त्सर्व्वाणि रूपाणि भवन्ति यो वा जवसमृद्धः सह-
स्त्रार्हम्पूर्व्यं य्यो दक्षिणायान्धुर्य्यप्प्रतिधुरः ॥ १ ॥ तद्य-
त्सर्व्वरूपो भवति । सर्व्वं वै रूपः सर्व्वमश्श्वमेधः सर्व्वस्याप्प्त्यै
सर्व्वस्यावरुद्ध्या ऽअथ यज्जवसमृद्धो वीर्य्यं वै जवो वीर्य्य-
स्याप्प्त्यै वीर्य्यस्यावरुद्ध्या ऽअथ यत्सहस्त्रार्हः सर्व्वं वै
सहस्त्रः सर्व्वमश्श्वमेधः सर्व्वस्याप्प्त्यै सर्व्वस्यावरुद्ध्या ऽअथ
यत्पूर्व्यं ऽएष वा ऽअपरिमितं वीर्य्यमभिवर्द्धते यत्पूर्व्योऽ-
परिमितस्यैव वीर्य्यस्यावरुद्ध्या ऽअथ यद्दक्षिणायान्धुर्य्य-
प्प्रतिधुर ऽएष वा ऽएष य ऽएष तपति न वा ऽएतङ्कश्चन
प्प्रतिप्रतिरेतस्यैवावरुद्ध्यै ॥ २ ॥ तदु होवाच भाल्लवेयः ।
द्विरूप ऽएवैषोऽश्श्वः स्यात्कृष्णसारङ्गः प्प्रजापतेर्वा ऽएषोऽ-
क्ष्णः समभवद्द्विरूपं वा ऽइदञ्चक्षुः शुक्लञ्चैव कृष्णञ्च
तदेनथ्ठं स्वेन रूपेण समर्द्धयतीति ॥ ३ ॥ अथ होवाच
सात्ययज्ञिः । त्रिरूप ऽएवैषोऽश्श्वः स्यात्तस्य कृष्णः
पूर्व्वार्द्धः शुक्लोऽपरार्द्धः कृत्तिकाञ्जिः पुरस्तात्तद्यत्कृष्णः
पूर्व्वार्द्धो भवति यदेवेदङ्कृष्णमक्ष्णस्तदस्य तदथ यच्छु-
क्लोऽपरार्द्धो यदेवेदः शुक्लमक्ष्णस्तदस्य तदथ यत्कृत्ति-

काश्चिꣳ पुरस्तात्सा कनीनका स ऽएव रूपसमृद्धोऽतो यतमोऽस्योपकल्पेत बहुरूपो वा द्विरूपो वा त्रिरूपो वा कृत्तिकाञ्जिस्तमालभेत जवेन ह्येव समृद्धꣳ स्यात् ॥ ४ ॥ तस्यैते पुरस्ताद्रक्षितार ऽउपक्लृप्ता भवन्ति । राजपुत्त्राꣳ कवचिनꣳ शतꣳ राजन्या निषङ्गिणꣳ शतꣳ सूतग्रामण्यां पुत्त्रा ऽइषुपर्षिणꣳ शतं क्षात्त्रसङ्ग्रहीतॄणाम्पुत्त्रा दण्डिनꣳ शतमश्वशतन्निरष्टन्निरमणं य्यस्मिन्नेनमपिसृज्य रक्षन्ति ॥ ५ ॥ अथ सावित्रीमिष्टिन्निर्वपति । सवित्रे प्प्रसवित्रे द्वादशकपालम्पुरोडाशꣳ सविता वै प्प्रसविता सविता म ऽइमं य्यज्ञम्प्रसुवादिति ॥ ६ ॥ तस्यै पञ्चदश सामिधेन्यो भवन्ति । वार्त्रघ्नावाज्यभागौ 'य ऽइमा विश्वा जाताज्या देवो यातु सविता सुरत्न' ऽइत्युपाꣳशु हविषो याज्यानुवाक्ये विराजौ सꣳय्याज्ये हिरण्यन्दक्षिणा सुवर्णꣳ शतमानन्तस्योक्तम्ब्राह्मणम् ॥ ७ ॥ तस्यै प्प्रयाजेषु तायमानेषु । ब्राह्मणो वीणागाथी दीक्षणत ऽउत्तरमन्द्रामुदाघ्नँस्तिस्रꣳ स्वयꣳ सम्भृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तम्ब्राह्मणम् ॥ ८ ॥ अथ द्वितीयान्निर्वपति । सवित्र ऽआसवित्रे द्वादशकपालम्पुरोडाशꣳ सविता वा ऽआसविता सविता म ऽइमं य्यज्ञमासुवादिति [ * काण्डस्यार्धम २१६] ॥ ९ ॥ तस्यै सप्तदश सामिधेन्यो भवन्ति । सद्वन्तावाज्यभागौ सदेवावरुन्द्धे 'विश्वानि देव सवितꣳ' 'स घा नो

(१) ऋ० सं० ४. ४. २६।

* इदं काण्डार्धसंख्यात्र 'क' पुस्तक एवास्ति।

(२) ऋ० सं० ८. ४. २८। (३) ऋ० सं० ५. ८. १२।

देवः सविता सहावे'त्युपाꣳशु हविषो याज्यानुवाक्ये ऽअनुष्टुभौ सꣳयाज्ये रजतꣳ हिरण्यन्दक्षिणा नानारूपताया ऽअथो ऽउत्क्रमायानपक्रमाय शतमानम्भवति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं वीर्यमात्मन्धत्ते ॥१०॥ तस्यै प्रयाजेषु तायमानेषु । ब्राह्मणो वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाघ्नꣳस्तिस्रः स्वयꣳ सम्भृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तम्ब्राह्मणम् ॥ ११ ॥ अथ तृतीयान्निर्वपति । सवित्रे सत्यप्रसवाय द्वादशकपालम्पुरोडाशमेष ह वै सत्यः प्रसवो यः सवितुः सत्येन मे प्रसवेनेमं यज्ञम्प्रसुवादिति ॥ १२ ॥ तस्यै सप्तदशैव सामिधेन्यो भवन्ति । रयिमन्तावाज्यभागौ वीर्यं वै रयिर्वीर्यस्याप्त्यै वीर्यस्यावरुद्ध्या '[1]ऽआ विश्वदेवꣳ सत्पति'न्न [2]प्रेमिये सवितुर्दैव्यस्य तदि'त्युपाꣳशु हविषो याज्यानुवाक्ये नित्ये सꣳयाज्ये नेद्यज्ञपथादयानीति क्लृप्त ऽएव यज्ञेऽन्ततः प्रतितिष्ठति त्रिष्टुभौ भवत ऽइन्द्रियं [3]वै वीर्यन्त्रिष्टुबिन्द्रियस्यैव वीर्यस्यावरुद्ध्यै हिरण्यन्दक्षिणा सुवर्णꣳ शतमानन्तस्योक्तम्ब्राह्मणम् ॥ १३ ॥ तस्यै प्रयाजेषु तायमानेषु । ब्राह्मणो वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाघ्नꣳस्तिस्रः स्वयꣳ सम्भृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तम्ब्राह्मणम् ॥ १४ ॥ एतस्याꣳ सꣳस्थितायाम् । उपोत्थायाध्वर्युश्च यजमानश्चाश्वस्य

---

( १ ) ऋ० सं० ४. ४. २६ । ( २ ) ऋ० सं० ३. ८. ५ । ( ३ ) 'ग' 'ज' पुस्तकयो 'इन्द्रे वै' इति पाठः ।

दक्षिणे कर्णे ऽआजपतो 'विभूर्म्मात्रा प्रभूः पित्रेति तस्योक्तम्ब्राह्मणमथैनमुदञ्चम्प्राञ्चम्प्रसृजत ऽएषा ह्युभयेषान्देवमनुष्याणान्दिग्यदुदीची प्राची स्वायामेवैनन्तद्दिशि धत्तो न वै स्व ऽआयतने प्रतिष्ठितो रिष्यत्यरिष्ट्यै ॥ १५ ॥ स ऽआह 'देवा ऽआशापालाः । एतन्देवेभ्योऽश्वम्मेधाय प्रोक्षितः रक्षते'त्युक्ता मानुषा ऽआशापाला ऽअथैते देवा ऽआप्याः साध्या ऽअन्वाध्या मरुतस्तमेत ऽउभये देवमनुष्याः संविदाना ऽअप्रत्यावर्त्तयन्तः संवत्सरः रक्षन्ति तद्यन्न प्रत्यावर्त्तयन्त्येष वा ऽएष य ऽएष तपति क ऽउ ह्येतमर्हति प्रत्यावर्त्तयितुं रुयद्ध्येनम्प्रत्यावर्त्तयेयुः परागेवेदः सर्वः स्यात्तस्मादप्रत्यावर्त्तयन्तो रक्षन्ति ॥ १६ ॥ स ऽआहाशापालाः । ये वा ऽएतस्योदृचङ्गमिष्यन्ति राष्ट्रन्ते भविष्यन्ति राजानो भविष्यन्त्यभिषेचनीया ऽअथ य ऽएतस्योदृचन्न गमिष्यन्त्यराष्ट्रन्ते भविष्यन्त्यराजानो भविष्यन्ति राजन्या विशोऽनभिषेचनीयास्तस्मान्मा प्रमदत स्नात्वाच्चैवैनमुदकान्निरुन्धीद्ध्वं वडवाभ्यश्च ते यद्यद्ब्राह्मणजातमुपनिगच्छेत तत्तत्पृच्छेत ब्राह्मणाः कियद्यूयमश्वमेधस्य वित्थेति ते ये न विद्युर्जिनीयात तान्सर्वं वा ऽअश्वमेधः सर्वस्यैष न वेद यो ब्राह्मणः सन्नश्वमेधस्य न वेद सोऽब्राह्मणो ज्येय ऽएव स पानङ्खाथ खादन्निवपाथाथ यत्किञ्च जनपदे कृतान्नः सर्वं

(१) शु० य० सं० २२. १९। (२) शु० य० सं० २२. १९।

वस्तत्सुतन्तेषाᳩ रथकारकुलऽएव वो वसतिस्तद्ध्यश्व-
स्यायतनमिति ॥ १७ ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ ११७ ॥

—०—

प्रमुच्याश्वन्दक्षिणेन वेदिम् । हिरण्मयङ्कशिपूप-
स्तृणाति तस्मिन्होतोपविशति दक्षिणेन होतारᳩ हिर-
ण्मये कूर्चे यजमानो दक्षिणतो ब्रह्मा चोद्गाता च
हिरण्मययोः कशिपुनोः पुरस्तात्प्रत्यङ्ङध्वर्युर्हिरण्मये
वा कूर्चे हिरण्मये वा फलके ॥ १ ॥ समुपविष्टेष्व-
ध्वर्युः सम्प्रेष्यति । होतर्भूतान्याचक्ष्व भूतेष्विमं यज-
मानमध्यूहेति सम्प्रेषितो होताध्वर्युमामन्त्रयते पारिप्लव-
माख्यानमाख्यास्यन्नध्वर्यविति हवै होतरित्यध्वर्युः ॥ २ ॥
मनुर्वैवस्वतो राजेत्याह । तस्य मनुष्या विशस्त इम
आसत इत्यश्रोत्रिया गृहमेधिन उपसमेता भवन्ति
तानुपदिशत्यृचो वेदः सोऽयमित्यृचाᳩ सूक्तं व्याचक्षाण
इवानुद्रवेद्वीणागणगिन उपसमेता भवन्ति तानध्वर्युः
सम्प्रेष्यति वीणागणगिन इत्याह पुराणैरिमं यजमानᳩ
राजभिः साधुकृद्भिः सङ्गायतेति तन्ते तथा सङ्गायन्ति
तद्यदेनमेवᳩ सङ्गायन्ति पुराणैरेवैनन्तद्राजभिः साधुकृद्भिः

सलोकङ्कुर्वन्ति ॥ ३ ॥ सम्प्रेष्ष्याद्ध्वर्युः प्प्रक्क्रमाञ्जुहोति । अन्वाहार्य्यपचने व्वाश्श्वस्य वा पदुम्परिलिख्य यतरथास्य तत्रावृद्भवति पूर्व्वा त्वेव स्थितिः ॥ ४ ॥ सावित्र्या ऽएवेष्टेः । पुरस्तादनुद्धुत्य सकृदेव रूपाण्ण्याहवनीये जुहोत्यथ सायन्धृतिषु हूयमानासु राजन्न्यो व्वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाग्घ्नँस्तिस्रः स्वयः सम्भृता गाथा गायतीत्ययुद्ध्यतेत्यमुः सङ्ग्राममजयदिति तस्योक्तम्ब्राह्मणम् ॥ ५ ॥ अथ श्श्वोभूते द्वितीयेऽहन् । एवमेवैतासु सावित्रीष्ष्विष्टिषु सः स्थितास्वेषैवावृदुद्ध्वर्य्यविति हवै होतरित्त्येवाद्ध्वर्य्युर्य्यमो व्वैवस्वतो राजेत्याह तस्य पितरो व्विशस्त ऽइम ऽआसत ऽइति स्थविरा ऽउपसमेता भवन्ति तानुपदिशति यजूः षि व्वेदः सोऽयमिति यजुषामनुवाकं व्व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्य्युः सम्प्रेष्ष्यति न प्प्रक्क्रमाञ्जुहोति ॥ ६ ॥ अथ तृतीयेऽहन् । एवमेवैतास्विष्टिषु सः स्थितास्वेषैवावृदुद्ध्वर्य्यविति हवै होतरित्त्येवाद्ध्वर्य्युर्व्वरुण ऽआदित्यो राजेत्याह तस्य गन्धर्व्वा व्विशस्त ऽइम ऽआसत ऽइति युवानः शोभना ऽउपसमेता भवन्ति तानुपदिशत्त्यथर्व्वाणो व्वेदः सोऽयमित्त्यथर्व्वणामेकम्पर्व्व व्व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्य्युः सम्प्रेष्ष्यति न प्प्रक्क्रमाञ्जुहोति ॥ ७ ॥ अथ चतुर्थेऽहन् । एवमेवैतास्विष्टिषु सः स्थितास्वेषैवावृदुद्ध्वर्य्यविति हवै होतरित्त्येवाद्ध्वर्य्युः सोमो व्वैष्णवो राजेत्याह तस्याप्सरसो व्विशस्ता ऽइमा ऽआसत ऽइति युवतयः शोभना ऽउपसमेता भवन्ति ता ऽउपदिशत्त्यङ्गिरसो व्वेदः सोऽयमि-

त्यङ्गिरसामेकम्पर्व्व व्याचक्षाण ऽइवानुद्रवेदेवमेवाध्वर्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ ८ ॥ अथ पञ्चमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदुद्धर्य्यवितिं हवै होतरित्येवाध्वर्युरर्बुदः काद्रवेयो राजेत्याह तस्य सर्प्पा विशस्त ऽइम ऽआसत ऽइति सर्प्पाश्च सर्प्पविदश्चोपसमेता भवन्ति तानुपदिशति सर्प्पविद्या वेदः सोऽयमिति सर्प्पविद्याया ऽएकम्पर्व्व व्याचक्षाण ऽइवानुद्रवेदेवमेवाध्वर्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ ९ ॥ अथ षष्ठेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदुद्धर्य्यवितिं हवै होतरित्येवाध्वर्युः कुबेरो वैश्रवणो राजेत्याह तस्य रक्षाꣳसि विशस्तानीमान्यासत ऽइति सेलगाः पापकृत ऽउपसमेता भवन्ति तानुपदिशति देवजनविद्या वेदः सोऽयमिति देवजनविद्याया ऽएकम्पर्व्व व्याचक्षाण ऽइवानुद्रवेदेवमेवाध्वर्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ १० ॥ अथ सप्तमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदुद्धर्य्यविति हवै होतरित्येवाध्वर्युरसितो धान्वो राजेत्याह तस्यासुरा विशस्त ऽइम ऽआसत ऽइति कुसीदिन ऽउपसमेता भवन्ति तानुपदिशति माया वेदः सोऽयमिति काञ्चिन्मायाङ्कुर्य्यादेवमेवाध्वर्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ ११ ॥ अथाष्टमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदुद्धर्य्यविति हवै होतरित्येवाध्वर्युर्म्मत्स्यः साम्मदो राजेत्याह तस्योदकेचरा विशस्त ऽइम ऽआसत ऽइति मत्स्याश्च मत्स्यहनश्चोपसमेता भवन्ति तानुपदिशतीति-

हासो वेदः सोऽयमिति कश्चिदितिहासमाचक्षीतैवमेवा-ध्वर्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ १२ ॥ अथ नवमेऽहन् । एवमेवैतास्विष्टिषु सᳬस्थितास्वेषैवावृदध्वर्यविति हवै होतरित्येवाध्वर्युस्ताक्ष्र्यो वैपश्यतो राजेत्याह तस्य वयाᳬसि विशस्तानीमान्यासत ऽइति वयाᳬसि च वायोविद्याश्चोपसमेता भवन्ति तानुपदिशति पुराणं वेदः सोऽयमिति किञ्चित्पुराणमाचक्षीतैवमेवाध्वर्युः स-म्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ १३ ॥ अथ दशमेऽहन् । एवमेवैतास्विष्टिषु सᳬस्थितास्वेषैवावृदध्वर्यविति हवै हो-तरित्येवाध्वर्युर्धर्म्म ऽइन्द्रो राजेत्याह तस्य देवा विशस्त ऽइम ऽआसत ऽइति श्रोत्रिया अप्रतिग्राहका ऽउप-समेता भवन्ति तानुपदिशति सामानि वेदः सोऽयमिति साम्नान्दशतम्ब्रूयादेवमेवाध्वर्युः सम्प्रेष्यति न प्रक्रमा-ञ्जुहोतीति ॥ १४ ॥ एतत्पारिप्लवम् । सर्वाणि राज्यान्न्या-चष्टे सर्वा विशः सर्वान्न्वेदान्त्सर्वान्देवान्त्सर्वाणि भूतानि सर्वेषाᳬ ह वै स ऽएतेषाᳬ राज्यानाᳬ सायुज्यᳬ सलो-कतामश्नुते सर्वासां विशामैश्वर्यमाधिपत्यङ्गच्छति सर्वा-न्वेदानवरुन्द्धे सर्वान्देवान्प्रीत्वा सर्वेषु भूतेष्वन्ततः प्र-तितिष्ठति यस्यैवंविदेतद्धोता पारिप्लवमाख्यानमाचष्टे यो वैतदेवं वेदैतदेव समानमाख्यानम्पुनः पुनः सँवत्सर-म्परिप्लवते तद्यत्पुनः पुनः परिप्लवते तस्मात्पारिप्लवᳬ षट्त्रिᳬशतन्दशाहानाचष्टे षट्त्रिᳬशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशूनवरुन्द्धे ॥ १५ ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ यूपकाष्ठादि ]

सँवत्सरे पर्य्यवेते दीक्षा । प्प्राजापत्त्यमालभ्योत्सीदन्तीष्ट्यः पुरोहितस्याग्निषु यजेतेत्त्यु हैक ऽआहुः किमु दीक्षितो यजेत द्वादश दीक्षा द्वादशोपसदस्तिस्रः सुत्त्यास्तत्त्रिणवमभिसम्पद्यते व्वज्ज्रो वै त्रिणवः क्षत्त्रमश्श्वः क्षत्त्रꣳ राजन्न्यो व्वज्ज्रेण खलु वै क्षत्त्रꣳ स्पृतन्तद्वज्ज्रेणैव क्षत्त्रꣳ स्पृणोति ॥ १ ॥ दीक्षणीयायाꣳ सꣳस्थितायाम् । सायं व्वाचि व्विसृष्टायां व्वीणागणगिन ऽउपसमेता भवन्ति तानद्ध्वर्य्युः सम्प्रेष्ष्यति व्वीणागणगिन ऽइत्त्याह देवैरिमं यजमानꣳ सङ्गायतेति तन्ते तथा सङ्गायन्ति ॥ २ ॥ अहरहर्व्वाचि व्विसृष्टायाम् । अग्नीषोमीयाणामन्ततः सꣳस्थाया-म्परिहृतासु व्वसतीवरीषु तद्यदेनन्देवैः सङ्गायन्ति देवैरेवैनन्तत्सलोकङ्कुर्व्वन्ति ॥ ३ ॥ प्रजापतिना सुत्त्यासु । एवमेवाहरहः परिहृतास्वेव व्वसतीवरीषूदवसानीयायामन्ततः सꣳस्थितायां तद्यदेनम्प्रजापतिना सङ्गायन्ति प्प्रजापतिनैवैनन्तदन्ततः सलोकङ्कुर्व्वन्ति ॥ ४ ॥ एकविꣳशतिर्य्यूपाः । सर्व्वे ऽएकविꣳशत्यरत्नयो राज्जुदालोऽग्निष्ठो भवति पैतुदारवावभितः षड्वैल्वास्त्रय ऽइत्थास्त्रय ऽइत्थात्षट् खादिरास्त्रय ऽएवेत्थास्त्रय ऽइत्थात्षट् पालाशास्त्रय ऽएवेत्थास्त्रय ऽइत्थात् ॥ ५ ॥ तद्यदेत ऽएवं य्यूपा भवन्ति । प्प्रजापतेः प्प्राणेषूत्क्रान्तेषु शरीरꣳ श्वयितुमद्ध्रियत तस्य यः श्लेष्ष्मासीत्त्ससार्द्धꣳ समवद्रुत्त्य मद्ध्यतो नस्त ऽउदभिनत्स ऽएष व्वनस्प्पतिरभवद्रज्जुदालस्तस्मात्स श्लेष्षणः

श्लेष्म्मणो हि समभवत्तेनैवैनन्तद्रूपेण समर्द्धयति तद्य-
स्सोऽग्निष्ठो भवति मद्ध्यं वा ऽएतद्यूपानां यदग्निष्ठो*
मद्ध्यमेतत्प्राणानां यन्नासिके स्व ऽएवैनन्तदायतने दधाति
॥ ६ ॥ अथ यदापोमयन्तेज ऽआसीत्। यो गन्धः स
सार्द्धꣳ समवद्रुत्य चक्षुष्ट ऽउदभिनत्स ऽएष वनस्पति-
रभवत्पीतुदारुस्तस्म्मात्स सुरभिर्ग्गन्धाद्धि समभवत्तस्म्मादु
ज्वलनस्तेजसो हि समभवत्तेनैवैनन्तद्रूपेण समर्द्धयति तद्य-
त्तावभितोऽग्निष्ठम्भवतस्तस्म्मादिमे ऽअभितो नासिकाञ्च-
क्षुषी स्व ऽएवैनौ तदायतने दधाति ॥ ७ ॥ अथ यत्कु-
न्तापमासीत्। यो मज्जा स सार्द्धꣳ समवद्रुत्य श्श्रोत्रत
ऽउदभिनत्स ऽएष वनस्पतिरभवद्बिल्ल्वस्तस्म्मात्तस्यान्तरतः
सर्व्वमेव फलमाद्यम्भवति तस्म्मादु हारिद्र ऽइव भवति
हारिद्र ऽइव हि मज्जा तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे पैतुदा-
रवौ[1] भवतो बाह्ये बैल्ल्वा ऽअन्तरे हि चक्षुषी बाह्ये श्श्रोत्रे
स्व ऽएवैनाँस्तदायतने दधाति ॥ ८ ॥ अस्त्थिब्भ्य ऽएवास्य
खदिरः समभवत्। तस्म्मात्स दारुणो बहुसारो दारुणमिव
ह्यस्त्थि तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे बैल्ल्वा भवन्ति
बाह्ये खादिरा ऽअन्तरे हि मज्जानो बाह्यान्यस्त्थीनि स्व
ऽएवैनाँस्तदायतने दधाति ॥ ९ ॥ माꣳसेब्भ्य ऽएवास्य
पलाशः समभवत्। तस्म्मात्स बहुरसो लोहितरसो लोहि-
तमिव हि माꣳसन्तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे खादिरा
भवन्ति बाह्ये पालाशा ऽअन्तराणि ह्यस्त्थीनि बाह्यानि

* अग्निसमीपे तिष्ठतीति-अग्निष्ठः=मध्यमो यूप इत्यर्थः।

( १ ) 'पैतुदारुवौ' इति 'ग' 'ज' पुस्तकयोः पाठः।

माꣳसानि स्व ऽएवैनाँस्तदायतने दधाति ॥ १० ॥ अथ यदेकविꣳशतिर्भवन्ति । एकविꣳशत्यरत्नय ऽएकविꣳशो वा ऽएष य ऽएष तपति द्वादश मासाः पञ्चऽर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳशः सोऽश्वमेध ऽएष प्रजापतिरेवमेतम्प्रजापतिं यज्ञङ्कृत्स्नꣳ संस्कृत्य तस्मिन्नेकविꣳशतिमग्नीषोमीयान्पशूनालभते तेषाꣳ समानङ्कर्म्मेत्येतत्पूर्वेद्युः कर्म्म ॥ ११ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

—०—

[ सवनीयाः पशवः ]

अथ प्रातर्ग्गोतमस्य । चतुरुत्तर स्तोमो भवति तस्य चतसृषु बहिष्पवमानमष्टास्वष्टास्वाज्यानि द्वादशसु माध्यन्दिनः पवमानः षोडशसु पृष्ठानि विꣳशत्यामार्भवः पवमानश्चतुर्विꣳशत्यामग्निष्टोमसाम* ॥ १ ॥ तस्य हैके । अग्निष्टोमसाम चतुःसाम कुर्वन्ति नाग्निष्टोमो नोक्थ्य ऽइति वदन्तस्तद्यदि तथा कुर्य्युः सार्द्धꣳ स्तोत्रियꣳ शस्त्वा सार्द्धमनुरूपꣳ शꣳसेद्रथन्तरम्पृष्ठꣳ राथन्तरꣳ शस्त्रमग्निष्टोमो यज्ञस्तेनेमँल्लोकमृद्ध्नोति ॥ २ ॥ एकविꣳशतिः सवनीयाः पशवः । सर्व्व ऽआग्नेयास्तेषाꣳ समानङ्कर्म्मेत्यु हैक ऽआहुर्द्वे त्वेवैते ऽएकादशिन्यावालभेत य ऽएवैकाद

* येन साम्ना अग्निष्टोमसंस्था समाप्यते तदग्निष्टोमसाम ।

शिनेषु कामस्तस्य कामस्याप्त्यै ॥ ३ ॥ सꣳस्थितेऽग्नि-
ष्टोमे । परिहृतासु वसतीवरीष्वद्ध्वर्य्युरन्नहोमाञ्जुहोति
तेषामुक्तम्ब्राह्मणं 'प्राणाय स्वाहापानाय स्वाहे'ति द्वादशभि-
रनुवाकैर्द्वादश मासाः सँवत्सरः सर्वꣳ सँवत्सरः सर्वमश्वमेधः
सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ४ ॥ एकविꣳशम्मद्ध्यममहर्ब्भ-
वति । असौ वा ऽआदित्य ऽएकविꣳशः सोऽश्वमेधः
स्वेनैवैनꣳ स्तोमेन स्वायान्देवतायाम्प्रतिष्ठापयति तस्मा-
देकविꣳशम् ॥ ५ ॥ यद्वेवैकविꣳशम् । एकविꣳशो वै पुरुषो
दश हस्त्या ऽअङ्गुलयो दश पाद्या ऽआत्मैकविꣳशस्तदने-
नैकविꣳशेनात्मनैतस्मिन्नेकविꣳशे प्प्रतिष्ठायाम्प्रतितिष्ठति
तस्मादेकविꣳशम् ॥ ६ ॥ यद्वेवैकविꣳशम् । एकविꣳशो वै
स्तोमानाम्प्रतिष्ठा बहु खलु वा ऽएतदेतस्मिन्नहन्न्युच्चा-
वचमिव कर्म्म क्रियते तद्यदेतदेतस्मिन्नहन्न्युच्चावचम्बहु
कर्म्म क्रियते तदेतस्मिन्नेकविꣳशे प्प्रतिष्ठायाम्प्रतिष्ठित-
ङ्क्रियाता ऽइति तस्माद्वेवैतदेकविꣳशमहः ॥ ७ ॥ तस्य
प्प्रातःसवनम् । 'अग्निन्तम्मन्ये यो वसु'रिति होता
पाङ्क्तमाज्यꣳ शस्त्वैकाहिकमुपसꣳशꣳसति बार्हतञ्च प्रऽउग-
म्माधुच्छन्दसञ्च त्रिचश ऽउभे सꣳशꣳसति यश्च बार्हते
प्रऽउगे कामो य ऽउ च माधुच्छन्दसे तयोरुभयोः काम-
योराप्त्यै क्क्लृप्तम्प्रातःसवनम् ॥ ८ ॥ अथातो माद्ध्य-
न्दिनꣳ सवनम् । अतिच्छन्दाः प्रतिपन्मरुत्वतीयस्य 'त्रिक-

(१) शु० य० सं० २२. २३। (२) शु० य० सं० १५. ४१। (३) ऋ० सं० २. ६. २८।

द्रुकेषु महिषो यवाशिर'मित्यतिष्ठा वा ऽएषा च्छन्दसां
ऽयदुतिच्छन्दा ऽअतिष्ठा ऽअश्वमेधो यज्ञानामश्वमेधस्यै-
वाप्त्यै सैषैव त्रिꣳ शस्ता त्रिचꣳ सम्पद्यते तेनो तङ्काममा-
प्नोति यस्त्रिच 'ऽइदं वसो सुतमन्ध' ऽइत्यनुचर ऽएष
ऽएव नित्य ऽएकाहातान 'ऽइत्था हि सोम ऽइन्मदे'ऽवि-
ताꣳसि सुन्वतो व्वृक्तबर्हिष' ऽइति पङ्क्तीश्च षट्पदाश्च
शस्त्वैकाहिके निविदन्दधातीति मरुत्वतीयम् ॥ ९ ॥ अथातो
निष्केवल्यम् । महानाम्न्यꣳ पृष्ठम्भवन्ति सानुरूपाꣳ
सप्रगाथाꣳ शꣳसति सर्वे वै कामा महानाम्नीषु सर्वे
कामा ऽअश्वमेधे सर्वेषाङ्कामानामाप्त्या 'ऽइन्द्रो मदाय
वावृधे' 'प्रेदम्ब्रह्म व्वृत्रतूर्येष्वाविथे'ति पङ्क्तीश्च षट्-
पदाश्च शस्त्वैकाहिके निविदन्दधाति क्क्लृप्तम्माध्यन्दि-
नꣳ सवनम् ॥ १० ॥ अथातस्तृतीयसवनम् । अतिच्छन्दा
ऽएव प्प्रतिपद्वैश्वदेवस्या'भि त्यन्देवꣳ सवितारमो-
ण्योरि'ति तस्या ऽएतदेव ब्ब्राह्मणं ऽयत्पूर्वस्या 'ऽअभि
त्वां देव सवित'रित्यनुचरोऽभिवानभिभूत्यै रूप'मुदु ष्य
देवꣳ सविता दमूना' ऽइति सावित्रꣳ शस्त्वैकाहिके
निविदन्दधाति 'मही द्यावापृथिवी ऽइह ज्येष्ठे' ऽइति
चतुर्ऋचन्द्यावापृथिवीयꣳ शस्त्वैकाहिके निविदन्दधा'त्यृभु-
र्विभ्वा व्वाज ऽइन्द्रो नो ऽअच्छे'त्यार्भवꣳ शस्त्वैकाहिके

(१) ऋ० सं० ५. ७. १७। (२) ऋ० सं० १. ५. २९। (३) ऋ० सं० ६ ३. १८। (४) ऋ० सं० १. ६. २१। (५) ऋ० सं० ६. ३. १६। (६) शु० य० सं ४. २५। (७) ऋ० सं० १. २. १३। (८) ऋ० सं० ५. ४. ५। (९) ऋ० सं ३. ८. ८। (१०) ऋ० सं० ३. ७. ३।

निविदन्दधाति 'को नु वाम्मित्रावरुणावृताय'न्निति वैश्वदेवꣳ शस्त्वैकाहिके निविदन्दधातीति वैश्वदेवम् ॥ ११ ॥
अथात ऽआग्निमारुतम् । 'मूर्द्धानन्दिवो ऽअरतिम्पृथिव्व्या' ऽइति वैश्वानरीयꣳ शस्त्वैकाहिके निविदन्दधा'त्यां रुद्रास ऽइन्द्रवन्तः सजोषस' ऽइति मारुतꣳ शस्त्वैकाहिके निविदन्दधाती'मम्ॅषु वो ऽअतिथिमुषर्ब्बुध'मिति नवर्च्चञ्जातवेदसीयꣳ शस्त्वैकाहिके निविदन्दधाति तद्यदैकाहिकानि निविद्धानानि भवन्ति प्प्रतिष्ठा वै ज्योतिष्टोमः प्प्रतिष्ठाया ऽअप्प्रच्च्युत्त्यै ॥ १२ ॥ तस्यैते पशवो भवन्ति । 'अश्वस्तूपरो* गोमृग,† ऽइति पञ्चदश पर्य्यङ्ग्यास्तेषामुक्तम्ब्राह्मणमथैत ऽआरण्या 'व्वसन्ताय कपिञ्जलानालभते ग्रीष्म्माय कलविङ्कान्वर्षाब्भ्यस्तित्तिरी'निति तेषाम्म्वेवोक्तम् ॥ १३ ॥
अथैतानेकविꣳशतये । चातुर्म्मास्यदेवताब्भ्य ऽएकविꣳशतिमेकविꣳशतिम्पशूनालभत ऽएतावन्तो वै सर्व्वे देवा यावन्तश्चातुर्म्मास्यदेवताः सर्व्वे कामा ऽअश्वमेधे सर्व्वान्देवान्प्रीत्त्वा सर्व्वान्कामानाप्नवानीति न तथा कुर्य्यात् ॥ १४ ॥
सप्तदशैव पशून्मद्ध्यमे यूप ऽआलभेत । प्प्रजापतिः सप्तदशः सर्व्वꣳ सप्तदशः सर्व्वमश्वमेधः सर्व्वस्याप्प्त्यै सर्व्वस्यावरुद्ध्यै षोडश षोडशेतरेषु षोडशकलं व्वा ऽइदꣳ सर्व्वꣳ

(१) ऋ० सं० ४. २. १३। (२) ऋ० सं० ४. ५. ९। शु० य० सं० ७. २५।३३. ८। (३) ऋ० सं० ४. ३. २१। (४) ऋ० सं० ४. ५. १७। (५) शु० सं० य० २४. १।

* 'शृङ्गोत्पत्तिकालेऽतीतेऽपि शृङ्गहीनश्छागः = तूपरः।

† गोमृगः = गवयः।

(६) शु० य० सं० २४. २०।

सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै त्रयोदश त्रयोदशारण्यानाकाशेष्वालभते त्रयोदश मासाः सँवत्सरः सर्व्वꣳ सँवत्सरः सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ १५ ॥ अथ पुरा बहिष्पवमानात् । अश्वन्निक्तवोदानयन्ति तेन पवमानाय सर्प्पन्ति तस्योक्तम्ब्राह्मणꣳ स्तुते बहिष्पवमानेऽश्वमास्तावमाक्क्रमयन्ति स यद्यव वा जिघ्रेद्वि वा वर्त्तेत समृद्धो मे यज्ञ इति ह विद्यात्तमुपाकृत्याद्ध्वर्य्युराह होतरभिष्टुहीति तमेकादशभिर्होताभिष्टौति ॥ १६ ॥ 'यदक्रन्दः[1] प्प्रथमञ्जायमान' इति । त्रिः प्रथमया त्रिरुत्तमया ताः पञ्चदश सम्पद्यन्ते पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैवैतद्वीर्य्येण यजमानः पुरस्तात्पाप्मानमपहते तद्वै यजमानायैव वज्रः प्रदीयते योऽस्य स्तृत्यस्तꣳ स्तत्त्वेव उप प्प्रागाच्छसनं वाज्यर्व्वोप प्प्रागात्परमं रुयत्सधस्थमिति ॥ १७ ॥ एते उद्धृत्य । '[2]मा नो मित्रो वरुणो अर्य्यमायु'रित्येतत्सूक्तमद्ध्रिगावावपति '[3]चतुस्त्रिꣳशद्वाजिनो देवबन्धो'रित्यु हैक एतां वङ्क्रीणाम्पुरस्ताद्दधति नेदुनायतने प्प्रणवन्दुधामेत्यथो नेदेकवचनेन बहुवचनं व्यवायामेति न तथा कुर्य्यात्साद्धमेव सूक्तमावपे'दुपॅ प्प्रागाच्छसनं वाज्यर्व्वो'प प्प्रागात्परमं रुयत्सधस्थ'मिति ॥ १८ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

(१) शु० य० सं० २९. १२। (२) शु० य० सं० २५. २४। (३) शु० य० सं० २५. ४१। (४) शु० य० सं० २९. २३। (५) शु० य० सं० २९. २४।

[ संवादः ]

एते ऽउक्त्वा । यदुद्भिगोः परिशिष्टम्भवति तदाह व्वासोऽधिवासः हिरण्यमित्यश्वायोपस्तृणन्ति तस्मिन्नेनमधि संज्ञपयन्ति संज्ञप्तेषुः पशुषु पत्न्यः पान्नेजनैरुदायन्ति चतस्रश्च जायाः कुमारी पञ्चमी चत्वारि च शतान्न्यनुचरीणाम् ॥ १ ॥ निष्ठितेषु पान्नेजनेषु । महिषीमश्वायोपनिपादयन्त्यथैनावधिवासेन * सम्प्रोर्णुवन्ति † '[1]स्वर्ग्गे लोके प्प्रोर्णुवाथा'मित्येष वै स्वर्ग्गो लोको यत्र पशुः संज्ञपयन्ति निरायत्याश्वस्य शिश्नम्महिष्युपस्थे निधत्ते ‡ '[2]वृषा व्वाजी रेतोधा रेतो दधात्वि'ति मिथुनस्यैव सर्व्वत्वाय ॥ २ ॥ तयोः शयानयोः । अश्वं यजमानोऽभिमेथ'[3]त्युत्सक्थ्या ऽअव गुदन्धेही'ति तन्न कश्चन प्प्रत्यभिमेथति नेद्यजमानम्प्रतिप्प्रतिः कश्चिदसदिति ॥ ३ ॥ अथाद्ध्वर्युः कुमारीमभिमेथति । कुमारि हये हये कुमारि '[4]यकासकौ शकुन्तिके'ति तङ्कुमारी प्प्रत्यभिमेथत्यद्ध्वर्यो हये हयेऽद्ध्वर्यो '[5]यकोऽसकौ शकुन्तक' ऽइति ॥ ४ ॥ अथ ब्ब्रह्मा महिषीमभिमेथति । महिषि हये हये महिषि '[6]माता च ते पिता च तेऽग्ग्रं व्वृक्षस्य रोहत' ऽइति तस्यै शतः राजपुत्र्योऽनुचर्य्यो भवन्ति ता ब्ब्रह्माणम्प्रत्यभिमेथ-

---

* अथ उपरिष्टाचाच्छादनक्षमं वासोऽधिवासः ।

† का० श्रौ० सू० २०. ६. १५ ।

(१) शु० य० सं० २३. २० ।

‡ 'अश्वशिश्नमुपस्थे कुरुते' ( का० श्रौ० सू० २०. ६. १६ ) ।

(२) शु० य० सं० २३ २० । (३) शु० य० सं० २३. २१ । (४) शु० य० सं० २३. २२ । (५) शु० य० सं० २३. २३ । (६) शु० य० सं० २३. २४ ।

न्ति ब्रह्मन्हये हये ब्रह्म'न्माता च ते पिता च तेऽग्रे वृक्षस्य क्रीडत' ऽइति ॥ ५ ॥ अथोद्गाता वावातामभिमेथति । वावाते हये हये वावात 'ऽऊर्द्ध्वामेनामुच्छ्रापये'ति तस्यै शतᳬ राजन्न्या ऽअनुचर्य्यो भवन्ति ता ऽउद्गातारम्प्रत्यभिमेथन्त्युद्गातर्हये हय ऽउद्गात'रूर्द्ध्वमेनमुच्छ्रयता'दिति ॥ ६ ॥ अथ होता परिवृक्तामभिमेथति । परिवृक्ते हये हये परिवृक्ते 'यदस्या अᳬहुभेद्या' ऽइति तस्यै शतᳬ सूतग्रामण्यान्दुहितरोऽनुचर्य्यो भवन्ति ता होतारम्प्रत्यभिमेथन्ति होतर्हये हये होत'र्यद्देवासो ललामगु'मिति ॥ ७ ॥ अथ क्षत्ता पालागलीमभिमेथति । पालागलि हये हये पालागलि 'यद्धरिणो यवमत्ति न पुष्टम्पशु मन्न्यत' ऽइति तस्यै शतङ्क्षात्रसङ्ग्रहीतॄणान्दुहितरोऽनुचर्य्यो भवन्ति ताᳬ क्षत्तारम्प्रत्यभिमेथन्ति क्षत्तर्हये हये क्षत्त'र्यद्धरिणो यवमत्ति न पुष्टम्बहु मन्न्यत' ऽइति ॥ ८ ॥ सर्व्वाप्तिर्व्वा ऽएषा वाचᳬ । यदभिमेथिकाᳬ सर्व्वे कामा ऽअश्वमेधे सर्व्वया वाचा सर्व्वान्कामानाप्नवामेत्युत्थापयन्ति महिषीन्ततस्ता यथेतम्प्रतिपरायन्त्यथेतरे सुरभिमतीमृचमन्ततोऽन्वाहु'र्दधिक्क्राव्णो ऽअकारिष'मिति ॥ ९ ॥ [ अर्धप्रपाठकः ॥५३॥ ] अप वा ऽएतेभ्य ऽआयुर्देवताᳬ क्रामन्ति । ये यज्ञेऽपूतां वाचं वदन्ति वाचमेवैतत्पुनते देवयज्ज्यायै देवतानामनपक्रमाय या च गोमृगे वपा भवति या चाजे तूपरे

(१) शु० य० सं० २३. २५। (२) शु० य० सं० २३. २६। (३) शु० य० सं० २३. २७। (४) शु० य० सं० २३. २८। (५) शु० य० सं० २३. २९। (६) शु० य० सं० २३. ३०। (७) शु० य० सं० २३. ३१। (८) शु० य० सं० २३. ३२।

ते ऽअश्श्वे प्प्रत्त्यवधायाहरन्ति नाश्श्वस्य व्वपास्तीति व्वदन्तो न तथा कुर्य्यादश्श्वस्यैव प्प्रत्यक्षम्मेद ऽआहरेत्त्प्रज्ञाता ऽह्युतराः ॥ १० ॥ श्रृतासु व्वपासु । स्वाहाकृतिभिश्चरित्त्वा प्प्रत्यञ्चः प्प्रातिपरेत्त्य सदसि ब्ब्रह्मोद्यं व्वदन्ति पूर्व्वया द्वारा प्प्रपद्य यथाधिष्ण्ण्यं ऽऽयुपविशन्ति ॥ ११ ॥ स होताद्ध्वर्य्युम्पृच्छति । 'कः स्विदेकाकी चरती'ति तम्प्रत्त्याह 'सूर्य्य ऽ[2]एकाकी चरती'ति ॥ १२ ॥ अथाद्ध्वर्य्युर्होतारम्पृच्छति । 'किंस्वि[3]त्सूर्य्यसमञ्ज्योति'रिति तम्प्रत्त्याह ब्ब्रह्म 'सू[4]र्य्यसमञ्ज्योति'रिति ॥ १३ ॥ अथ ब्ब्रह्मोद्गातारम्पृच्छति । 'पृ[6]च्छामि त्त्वा चितये देवसखे'ति तम्प्रत्त्याहा'पि तेषु त्त्रिषु पदेष्ष्वस्म्मी'ति ॥ १४ ॥ अथोद्गाता ब्ब्रह्माणम्पृच्छति । 'केष्ष्वन्तः पुरुष ऽआविवेशे'ति तम्प्रत्त्याह 'पञ्चस्वन्तः पुरुष ऽआविवेशे'ति ॥ १५ ॥ एतस्यामुक्तायामुत्त्थाय । सदसोऽधि प्प्राञ्चो यजमानमब्भ्यायन्त्यग्ग्रेण हविर्द्धाने ऽआसीनमेत्त्य यथायतनम्परर्य्युपविशन्ति ॥ १६ ॥ स होताद्ध्वर्य्युम्पृच्छति । 'कीं स्विदासीत्पूर्व्वचित्ति'रिति तम्प्रत्त्याह 'द्यौरासीत्पूर्व्वचित्ति'रिति ॥ १७ ॥ अथाद्ध्वर्य्युर्होतारम्पृच्छति । 'का[11] ऽईमरे पिशङ्गिले'ति तम्प्रत्त्याहा'जा[12]रे पिशङ्गिले'ति ॥ १८ ॥ अथ ब्ब्रह्मोद्गातारम्पृच्छति । 'कु[13]र्य्यस्य

---

( १ ) शु० य० सं० २३. ४५ । ( २ ) शु० य० सं० २३. ४६ । ( ३ ) शु० य० सं० २३. ४७ । ( ४ ) शु० य० सं० २३. ४८ । ( ५ ) शु० य० सं० २३. ४९ । ( ६ ) शु० य० सं० २३. ५० । ( ७ ) शु० य० सं० २३. ५१ । ( ८ ) शु० य० सं० २३. ५२ । ( ९ ) शु० य० सं० २३. ५३ । ( १० ) शु० य० सं० २३. ५४ । ( ११ ) शु० य० सं० २३. ५५ । ( १२ ) शु० य० सं० २३. ५६ । ( १३ ) शु० य० सं० २३. ५७ ।

व्विष्ट्वाः कत्यक्षराणी'ति तम्प्रत्याह 'षडस्य व्विष्ठाः शतमक्षराणी'ति ॥ १९ ॥ अथोद्गाता ब्रह्माणम्पृच्छति । 'को ऽअस्य व्वेद भुवनस्य नाभि'मिति तम्प्रत्याह 'व्वेदाहमस्य भुवनस्य नाभि'मिति ॥ २० ॥ अथाध्वर्युं यजमानः पृच्छति । 'पृच्छामि त्वा परमन्तम्पृथिव्व्या' ऽइति तम्प्रत्याहे'यं व्वेदिः परो ऽअन्तः पृथिव्व्या' ऽइति ॥ २१ ॥ सर्वाप्तिर्वा ऽएषा व्वाचः । यद्ब्रह्मोद्यꣳ सर्वे कामा ऽअश्वमेधे सर्वया व्वाचा सर्वान्कामानाप्नवामेति ॥ २२ ॥ उदिते ब्रह्मोद्ये । प्रपद्याध्वर्युर्हिरण्मयेन पात्रेण प्राजापत्यम्महिमानङ्गृह्णाति तस्य पुरोरुग्घिरण्यगर्भः समवर्त्तताग्र' ऽइत्यथास्य पुरोऽनुवाक्क्या 'सुभूः स्वयम्भूः प्रथम' ऽइति 'होर्ता यक्षत्प्रजापति'मिति प्रैषः 'प्रजापते न त्वदेतान्न्य-न्न्य' ऽइति होता यजति व्वषट्कृते जुहोति 'यस्तेऽहन्त्सँवत्सरे महिमा सम्बभूवे'ति नानुवषट्करोति सर्वहुतꣳ हि जुहोति ॥ २३ ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—०—

[ वपाहोमः ]

अथातो व्वपानाꣳ होमः । नानैव चरेयुरा वैश्वदेवस्य व्वपायै वैश्वदेवस्य व्वपायाꣳ हुतायान्तदन्वितरा

(१) शु० य० सं० २३. ५८. । (२) शु० य० सं० २३. ५९ । (३) शु० य० २३. ६० । (४) शु० य० सं० २३. ६१ । (५) शु० य० सं० २३. ६२ । (६) शु० य० सं० २३. १ । (७) शु० य० सं० २३. ६३ । (८) शु० य० सं० २३. ६४ । (९) शु० य० सं० २३. ६५ । (१०) शु० य० सं० २३. २

जुहुयुरिति ह स्माह सत्यकामो जाबालो विश्वे वै सर्वे देवास्तदेनान्यथादेवतम्प्रीणातीति ॥ १ ॥ ऐन्द्राग्नस्य वपायाᳫं हुतायाम् । तदन्वितरा जुहुयुरिति ह स्माहतुः सौमापौ मानुतन्तव्याविन्द्राग्नी वै सर्वे देवास्तद्वैनान्यथादेवतम्प्रीणातीति ॥ २ ॥ कायस्य वपायाᳫं हुतायाम् । तदन्वितरा जुहुयुरिति ह स्माह शैलालिः प्रजापतिर्वै कः प्रजापतिमु वाऽअनु सर्वे देवास्तद्वैनान्यथादेवतम्प्रीणातीति ॥ ३ ॥ एकविᳫंशतिश्चातुर्मास्यदेवताऽअनुद्रुत्य । एकविᳫंशतिधा कृत्वा प्रचरेयुरिति ह स्माह भाल्लवेयऽएतावन्तो वै सर्वे देवा यावत्यश्चातुर्मास्यदेवतास्तद्वैनान्यथादेवतम्प्रीणातीति ॥ ४ ॥ नानैव चरेयुः । इतीन्द्रोतः शौनकः किमुत स्वरेरँस्तद्वैनान्यथादेवतम्प्रीणातीत्येतदुह तेषां वचोऽन्या त्वेवात स्थितिः ॥ ५ ॥ अथ होवाच याज्ञवल्क्यः । सकृदेव प्राजापत्याभिः प्रचरेयुः सकृद्देवदेवत्याभिस्तद्वैनान्यथादेवतम्प्रीणात्यञ्जसा यज्ञस्य सᳫंस्थामुपैति न ह्वलतीति ॥ ६ ॥ हुतासु वपासु । प्रपद्याद्ध्वर्युः रजतेन पात्रेण प्राजापत्यम्महिमानमुत्तरङ्गृह्णाति तस्य पुरोरुग्यः [1]प्राणतो निमिषतो महित्वे'ति विपर्यस्ते याज्यानुवाक्ये ऽअयातयामताया ऽएष ऽएव प्रैषो वषट्कृते जुहोति '[2]यस्ते रात्रौ सँवत्सरे महिमा सम्बभूवे'ति नानुवषट्करोति तस्योक्तम्ब्राह्मणम् ॥ ७ ॥ नान्येषाम्पशूनान्तेदन्या ऽअवद्यन्ति । अवद्यन्त्यश्वस्य

(१) शु० य० सं० २३. ३। (२) शु० य० सं० २३. ४।

दक्षिणतोऽन्न्येषाम्पशूनामवद्यन्न्त्युत्तरतोऽश्श्वस्य प्लक्षशा-
खास्वन्न्येषाम्पशूनामवद्यन्ति वेतसशाखास्वश्श्वस्य ॥ ८ ॥
तदु होवाच सात्ययज्ञिः । इतरथैव कुर्य्युः पथ ऽएव ना-
पोदित्यमिति पूर्व्वां त्वेव स्थितिरुक्कथ्यो यज्ञस्तेनान्तरिक्ष-
लोकमृद्ध्नोति सर्व्वस्तोमोऽतिरात्र ऽउत्तममहर्ब्भवति सर्व्वं
वै सर्व्वस्तोमोऽतिरात्रः सर्व्वमश्श्वमेधः सर्व्वस्याप्त्यै सर्व्व-
स्यावरुद्ध्यै ॥ ९ ॥ तस्य त्रिवृद्बहिष्पवमानम् *। पञ्चदशा-
न्न्याज्यानि सप्तदशो माध्यन्दिनः पवमान ऽएकविंशानि
पृष्ठानि त्रिणवस्तृतीयः पवमानस्त्रयस्त्रिंशमग्निष्टोमसा-
मैकविंशान्न्युक्कथान्न्येकविंशः षोडशी पञ्चदशी रात्रि-
स्त्रिवृत्सन्धिरुर्व्वद्द्वितीयस्याह्नः पृष्ठ्यस्य षडहस्य तच्छस्त्रम-
तिरात्रो यज्ञस्तेनामुँल्लोकमृद्ध्नोति ॥ १० ॥ एकविंशतिः
सवनीयाः पशवः । सर्व्व ऽआग्नेयास्तेषाथं समानङ्कर्म्मेत्यु
हैक ऽआहुश्चतुर्विंशतिन्त्वेवैतान्गव्यानालभेत द्वादशभ्यो
देवताभ्यो द्वादश मासाः सँवत्सरः सर्व्वं सँवत्सरः सर्व्व-
मश्श्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ ११ ॥ †

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

—०—

* सामगानामुत्तरार्चिके तृचात्मकानि सूक्तान्याम्नातानि ( साम० उ० १. १. १-९ )। तत्र 'उपास्मै' इत्याद्यं सूक्तम्। 'देवि द्युतत्या' इति द्वितीयम्। 'पवमानस्य ते' इति तृतीयम्। तदिदं सूक्तत्रयगानसाध्यं स्तोत्रं प्रातःस्वनानुष्ठाने तेषु त्रिषु सूक्तेषु गायत्रं साम गीयते। तत्र स्थितानामृचां पवमानार्थत्वाद्बहिःसम्बन्धाच्च। बहिष्पवमानमित्युच्यते।

† शतम् ६७०० ।

[ प्रत्यृतु पश्वालम्भः ]

एतेन हैन्द्रोतो दैवापः शौनकः । जनमेजयम्पारिक्षितं य्याजयाञ्चकार तेनेष्ट्वा सर्व्वाम्पापकृत्याथं सर्वाम्ब्रह्महत्यामपजघान सर्व्वांथं ह वै पापकृत्याथं सर्व्वाम्ब्रह्महत्यामपहन्ति योऽश्वमेधेन यजते ॥ १ ॥ तदेतद्गाथयाभिगीतम् । आसन्दीवति धान्न्यादुः रुक्मिणः हरितस्रजम् ॥ अबद्ध्नादश्वः सारङ्गन्देवेभ्यो जनमेजय इति ॥ २ ॥ एते एव पूर्व्वे अहनी । ज्योतिरतिरात्रस्तेन भीमसेनमेते एव पूर्व्वे अहनी गौरतिरात्रस्तेनोग्रसेनमेते एव पूर्व्वे अहनी आयुरतिरात्रस्तेन श्रुतसेनमित्येते पारिक्षितीयास्तदेतद्गाथयाभिगीतम्पारिक्षिता यजमाना अश्वमेधैः परोऽवरम् ॥ अजहुः कर्म्म पापकम्पुण्ण्याः पुण्ण्येन कर्म्मणेति ॥ ३ ॥ एते एव पूर्व्वे अहनी । अभिजिदतिरात्रस्तेन ह पर आट्णार ईजे कौसल्ल्यो राजा तदेतद्गाथयाभिगीतमट्णारस्य परः पुत्रोऽश्वम्मेध्यमबन्धयत् ॥ हैरण्ण्यनाभः कौसल्ल्यो दिशः पूर्ण्णा अमंहतेति ॥ ४ ॥ एते एव पूर्व्वे अहनी । विश्वजिदतिरात्रस्तेन ह पुरुकुत्सो दौर्ग्गहेणेज ऐक्ष्वाको राजा तस्मादेतदृषिणाभ्यनूक्त'मस्माकमत्र पितरस्त आसन्त्सप्त ऋषयो दौर्ग्गहे वद्ध्यमान' इति ॥ ५ ॥ एते एव पूर्व्वे अहनी । महाव्रतमतिरात्रस्तेन ह मरुत्त आविक्षित ईज आयोगवो राजा तस्य ह ततो मरुतः परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः

---

(१) ऋ० सं० ३. ७. १८।

सभासदो बभूवुस्तदेतद्गाथयाभिगीतम्मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे ॥ आविक्षितस्याग्निः क्षत्ता विश्वे देवाः सभासद ऽइति मरुतो ह वै तस्य परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो भवन्ति योऽश्वमेधेन यजते ॥ ६ ॥ एते ऽएव पूर्वे ऽअहनी । अप्तोर्य्यामोऽतिरात्रस्तेन हैतेन क्रैव्य ऽईजे पाञ्चालो राजा क्रिवय ऽइति ह वै पुरा पञ्चालानाचक्षते तदेतद्गाथयाभिगीतमश्वम्मेध्य-मालभत क्रिवीणामतिपूरुषः ॥ पाञ्चालः परिवक्रायाᳬ सहस्रशतदक्षिणमिति ॥ ७ ॥ अथ द्वितीयया । सहस्रमास-न्नयुता शता च पञ्चविᳬशतिः ॥ दिक्कोदिक्कः पञ्चालाना-म्ब्राह्मणा या विभेजिर ऽइति ॥ ८ ॥ त्रिवृदग्निष्टोमः । पञ्चदश ऽउक्थ्यः सप्तदशन्तृतीयमहः सोक्थकमेकविᳬ-शः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरित्येषोऽनुष्टुप्सम्प-न्नस्तेन हैतेन ध्वसा द्वैतवन ऽईजे मात्स्यो राजा यत्रैत-द्द्वैतवनᳬ सरस्तदेतद्गाथयाभिगीतञ्चतुर्दश द्वैतवनो राजा सङ्ग्रामजिद्धयान् ॥ इन्द्राय वृत्रघ्नेऽबध्नात्तस्माद्द्वैतवनᳬ सर ऽइति ॥ ९ ॥ चतुर्विᳬशाः पवमानाः । त्रिवृदभ्या-वर्त्तश्चतुश्चत्वारिᳬशाः पवमाना ऽएकविᳬशमभ्यावर्त्तम-ष्टाचत्वारिᳬशाः पवमानास्त्रयस्त्रिᳬशमभ्यावर्त्तमाग्निष्टोम-सामाद्द्वात्रिᳬशान्युक्थान्येकविᳬशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरिति ॥ १० ॥ एतद्विष्णोः क्रान्तम् । तेन हैतेन भरतो दौःषन्तिरीजे तेनेष्ट्वेमां व्यष्टिं व्यानशे येयम्भरतानान्तदेतद्गाथयाभिगीतमष्टासप्ततिम्भरतो दौः-

षन्तिरुर्वंमुनामनु ॥ गङ्गायां व्वृत्रघ्ने ऽबध्नात्पञ्चपञ्चाशतꣳ हयानिति ॥ ११ ॥ अथ द्वितीयया । त्रयस्त्रिꣳशꣳ शतꣳ राजाश्वान्बद्धाय मेध्यान् ॥ सौद्युम्निरत्यष्ठादन्यानमायान्मायवत्तर ऽइति ॥ १२ ॥ अथ तृतीयया । शकुन्तला नाडपित्यप्सरा भरतन्दधे ॥ परꣳ सहस्रानिन्द्रायाश्वान्मेध्यान्य ऽआहरद्विजित्य पृथिवीꣳ सर्वामिति ॥ १३ ॥ अथ चतुर्थ्या । महदद्य भरतस्य न पूर्वे नापरे जनाः ॥ दिवम्मर्त्य ऽइव बाहुभ्यान्नोदापुः पञ्च मानवा ऽइति ॥१४॥ एकविꣳशस्तोमेन ऽऋषभो याज्ञतुर ऽईजे श्विक्नानाꣳ राजा तदेतद्गाथयाभिगीतं ऽयाज्ञतुरे यजमाने ब्राह्मण ऽऋषभे जनाः ॥ अश्वमेधे धनँल्लब्ध्वा विभजन्ते स्म दक्षिणा ऽइति ॥ १५ ॥ त्रयस्त्रिꣳशस्तोमेन । शोणः सात्रासाह ऽईजे पाञ्चालो राजा तदेतद्गाथयाभिगीतꣳ सात्रासाहे[1] यजमानेऽश्वमेधेन तौर्वशाः ॥ उदीरते त्रयस्त्रिꣳशाः षट् सहस्राणि वर्म्मिणामिति ॥ १६ ॥ अथ द्वितीयया । षट् षट् षड्ढा सहस्राणि यज्ञे कोकपितुस्तव ॥ उदीरते त्रयस्त्रिꣳशाः षट् सहस्राणि वर्म्मिणामिति ॥ १७॥ अथ तृतीयया । सात्रासाहे[2] यजमाने पाञ्चाले राज्ञि सुस्रजि॥ अमाद्यदिन्द्रः सोमेनातृप्यन्ब्राह्मणा धनैरिति ॥ १८ ॥ गोविनतेन शतानीकः । सात्राजित ऽईजे काश्यस्याश्वमादाय ततो हैतदर्वाक्काशयोऽग्नीन्नादधत ऽआत्तसोमपीथाः स्म ऽइति वदन्तः ॥ १९ ॥ तस्य विधा चतुर्विꣳशाः पव-

---

( १-२ ) 'सात्रासहे' इति 'ग' 'ज' पुस्तकयोः पाठः ।

मानाः । त्रिवृदभ्यावर्त्तश्चतुश्चत्वारिꣳशाः पवमाना ऽएकविꣳशान्याज्यानि तृणवान्न्युक्क्थन्न्येकविꣳशानि पृष्ठानि षट्त्रिꣳशाः पवमानास्त्रयस्त्रिꣳशमभ्यावर्त्तमाग्निष्टोमसामादेकविꣳशान्न्युक्क्थान्न्येकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ २० ॥ तदेतद्गाथयाभिगीतम् । शतानीकः समन्तासु मेद्ध्यꣳ सात्राजितो हयम् ॥ आदत्त यज्ञङ्काशीनाम्भरतः सत्वतामिवेति ॥ २१ ॥ अथ द्वितीयया । श्वेतꣳ समन्तासु वशञ्चरन्तꣳ शतानीको धृतराष्ट्रस्य मेद्ध्यम् ॥ आदाय सह्वा दशमास्यमश्वꣳ शतानीको गोविनतेन हेज ऽइति ॥ २२ ॥ अथ चतुर्थ्या । महदद्य भरतानान्न पूर्वे नापरे जनाः ॥ दिवम्मर्त्त्य ऽइव पक्षाभ्यान्नोदापुः सप्त मानवा ऽइति ॥ २३ ॥ अथातो दक्षिणानाम् । मद्ध्यम्प्रति राष्ट्रस्य यदन्न्यद्भूमेश्च पुरुषेभ्यश्च ब्राह्मणस्य च वित्तात्प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यद्ध्वर्य्योरुदीच्युद्गातुस्तदेव होतृका ऽअन्न्वाभक्ताः ॥ २४ ॥ उदयनीयायाꣳ सꣳस्थितायाम् । एकविꣳशतिं वशा ऽअनूबन्ध्या ऽआलभते मैत्रावरुणीर्वैश्वदेवीर्ब्बार्हस्पत्त्या ऽएतासान्देवतानामाप्त्यै तद्यद्बार्हस्पत्त्या ऽअन्त्या[1] भवन्ति ब्रह्म वै बृहस्पतिस्तद्ब्रह्मण्ण्येवान्ततः प्रतितिष्ठति ॥ २५ ॥ अथ यदेकविꣳशतिर्भवन्ति । एकविꣳशो वा ऽएष य ऽएष तपति द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳश ऽएतामभिसम्पदम् ॥ २६ ॥ उदवसानीयायाꣳ

(१) 'ग' 'ज' पुस्तकयोः "०स्पत्यान्त्या" इति पाठः ।

सꣳस्थितायाम् *। चतस्रश्च जायाः कुमारीम्पञ्चमीञ्च-त्वारि च शतान्न्यनुचरीणां य्यथासमुदितन्दक्षिणान्ददाति ॥ २७ ॥ अथोत्तरꣳ सँव्वत्सरमृतुपशुभिर्य्यजते† । षड्भिरा-ग्नेयैर्व्वसन्ते षड्भिरैन्द्रैग्ग्रीष्मे षड्भिः पार्जन्न्यैर्व्वा मारुतैर्व्वा व्वर्षासु षड्भिर्म्मैत्रावरुणैः शरदि षड्भिरैन्द्रावैष्णवैर्हेमन्ते षड्भिरैन्द्राबार्हस्पत्यैः शिशिरे षडृतवः सँव्वत्सर ऽऋतुष्ष्वेव सँव्वत्सरे प्प्रतितिष्ठति षट्त्रिꣳशदेते पशवो भवन्ति षट्त्रिꣳ-शदक्षरा बृहती बृहत्त्यामधि स्वर्ग्गो लोकः प्प्रतिष्ठितस्तद्व-न्ततो बृहत्त्यैव च्छन्दसा स्वर्ग्गे लोके प्प्रतितिष्ठति ॥२८॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिकासंख्या ॥ १०६ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

---

[ पुरुषमेधः ]

पुरुषो ह नारायणोऽकामयत । अतितिष्ठेयꣳ सर्व्वाणि भूतान्न्यहमेवेदꣳ सर्व्वꣳ स्यामिति स ऽएतम्पुरुषमेधम्प-ञ्चरात्रं य्यज्ञक्रतुमपश्श्यत्तमाहरत्तेनायजत तेनेष्ट्वात्यतिष्ठ-त्सर्व्वाणि भूतानीदꣳ सर्व्वमभवदतितिष्ठति सर्व्वाणि भूता-नीदꣳ सर्व्वम्भवति य ऽएवं व्विद्वान्पुरुषमेधेन यजते यो व्वैतदेवं व्वेद ॥ १ ॥ तस्य त्रयोविꣳशतिर्द्दीक्षाः‡ । द्वा-

---

* 'उदवसानीयान्ते भार्या ददाति यथासंवादꣳ सानुचरीः' (का० श्रौ०सू०२०.८.२४) इति ।

† तथा च सूत्रितं कात्यायनमहर्षिणा 'प्रत्यृतु पशूनालभते षट् षड् वसन्तायाग्नेयानैन्द्रा-न्पार्जन्यान्मारुतान्वा मैत्रावरुणानैन्द्रावार्हस्पत्यान्' ( का० श्रौ० सू० २०. ८. ३० ) इति ।

‡ 'पुरुषमेधस्त्रयोविꣳशतिदीक्षोऽतिष्ठाकामस्य' ( का० श्रौ० सू० २१. १. १ ) इति ।

दशोपसदः पञ्च सुत्याः स ऽएष चत्वारिᳪशद्रात्रः सदीक्षोपसत्कश्चत्वारिᳪशदक्षरा विराट् तद्विराजमभिसम्पद्यते '[1]ततो विराडजायत विराजो ऽअधि पूरुष' ऽइत्येषा वै सा विराडेतस्या ऽएवैतद्विराजो यज्ञम्पुरुषञ्जनयति ॥ २ ॥ ता वा ऽएताः । चतस्रो दशतो भवन्ति तद्यदेताश्चतस्रो दशतो भवन्त्येषाञ्चैव लोकानामाप्त्यै दिशाञ्चेममेव लोकम्प्रथमया दशताप्नुवन्नन्तरिक्षन्द्वितीयया दिवन्तृतीयया दिशश्चतुर्थ्या तथैवैतद्यजमान ऽइममेव लोकम्प्रथमया दशताप्नोत्यन्तरिक्षन्द्वितीयया दिवन्तृतीयया दिशश्चतुर्थ्यैतावद्वा ऽइदᳪ सर्वं यावदिमे च लोका दिशश्च सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ३ ॥ एकादशाग्नीषोमीयाः[2] पशव ऽउपवसथे । तेषाᳪ समानङ्क्ष्मैकादश यूपा ऽएकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ ४ ॥ ऐकादशिनाः सुत्यासु पशवो भवन्ति । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ ५ ॥ येद्वैवकादशिना भवन्ति । एकादशिनी वा ऽइदᳪ सर्वम्प्रजापतिर्ह्येकादशिनी सर्वᳪ हि प्रजापतिः सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ६ ॥ स वा ऽएष पुरुषमेधः पञ्चरात्रो यज्ञ-

(१) शु० य० सं० ३१. ५।

(२) 'ग' 'ज' पुस्तकयोः "एकादशाग्निषोमीयाः" इति पाठो दृश्यते, स तु प्रामादिक एव, 'ईदग्नेः सोमवरुणयोः' ( पा० ६. ३. २७ ) इति सूत्रेण—ईद्विधानात् ।

⁕ का० श्रौ० सू० २१. १. ५।

क्रतुर्भवति। पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्त्तवः सँवत्सरो यत्किञ्च पञ्चविधमधिदैवतमध्यात्मन्तदेनेन सर्व्वमाप्नोति ॥ ७ ॥ तस्याग्निष्टोमः प्रथममहर्भवति। अथोक्थ्योऽथातिरात्रोऽथोक्थ्योऽथाग्निष्टोमः स वाऽएषऽउभयतोज्योतिरुभयतऽउक्थ्यः ॥ ८ ॥ यवमध्यः पञ्चरात्रो भवति। इमे वै लोकाः पुरुषमेधऽउभयतोज्योतिषो वाऽइमे लोकाऽअग्निनेतऽआदित्येनामुतस्तस्मादुभयतोज्योतिरुभयतऽउक्थ्यऽआत्मातिरात्रस्तद्यदेताऽउक्थ्यावतिरात्रमभितो भवतस्तस्मादयमात्मान्नेन परिवृढोऽथ यदेष वर्षिष्ठोऽतिरात्रोऽह्नान्थ्ध्स मध्ये तस्माद्यवमध्यो युते ह वै द्विषन्तम्भ्रातृव्यमयमेवास्ति नास्य द्विषन्भ्रातृव्यऽइत्याहुर्यऽएवं वेद ॥ ९ ॥ तस्यायमेव लोकः प्रथममहः। अयमस्य लोको वसन्तऽऋतुर्यदूर्द्ध्वमस्माल्लोकादर्वाचीनमन्तरिक्षात्तद्द्वितीयमहस्तदस्य ग्रीष्मऽऋतुरन्तरिक्षमेवास्य मध्यममहरन्तरिक्षमस्य वर्षाशरदावृतू यदूर्द्ध्वमन्तरिक्षादर्वाचीनन्दिवस्तच्चतुर्थमहस्तदस्य हेमन्तऽऋतुर्द्यौरेवास्य पञ्चममहर्द्यौरस्य शिशिरऽऋतुरित्यधिदैवतम् ॥ १० ॥ अथाध्यात्मम्। प्रतिष्ठैवास्य प्रथममहः प्रतिष्ठाऽस्य वसन्तऽऋतुर्यदूर्द्ध्वम्प्रतिष्ठायाऽअवाचीनम्मध्यात्तद्द्वितीयमहस्तदस्य ग्रीष्मऽऋतुर्म्मध्यमेवास्य मध्यममहर्म्मध्यमस्य वर्षाशरदावृतू यदूर्द्ध्वम्मध्यादवाचीनꣳ शीर्ष्णस्तच्चतुर्थमहस्तदस्य हेमन्तऽऋतुः शिरऽएवास्य पञ्चममहः शिरोऽस्य शिशिरऽऋतु-

रेवमिमे च लोकाः सँवत्सरश्चात्मा च पुरुषमेधमभिसम्प-
द्यन्ते सर्वं वा ऽइमे लोकाः सर्वꣳ सँवत्सरः सर्वमात्मा
सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ११ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ ब्राह्मणादीनामष्टाचत्वारिंशत्संख्यकानामग्निष्ठे यूपे नियोजनादि ]

अथ यस्मात्पुरुषमेधो नाम। इमे वै लोकाः पूरय-
मेव पुरुषो योऽयम्पवते सोऽस्याम्पुरि शेते तस्मात्पुरुष-
स्तस्य यदेषु लोकेष्वन्नन्तदस्यान्नम्मेधस्तद्यदस्यैतदन्नम्मे-
धस्तस्मात्पुरुषमेधोऽथो यदस्मिन्मेध्यान्पुरुषानालभते
तस्मादेव पुरुषमेधः ॥ १ ॥ तान्वै मध्यमेऽहन्नालभते।
अन्तरिक्षं वै मध्यममहरन्तरिक्षमु वै सर्वेषाम्भूतानामायत-
नमथो ऽअन्नं वा ऽएते पशव ऽउदरम्मध्यममहरुदरे तदन्न-
न्दधाति ॥ २ ॥ तान्वै दश दशालभते। दशाक्षरा विरा-
ड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै ॥ ३ ॥ एका-
दश दशत ऽआलभते। एकादशाक्षरा त्रिष्टुब्वज्रस्त्रि-
ष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानो मध्यतः पाप्मा-
नमपहते ॥ ४ ॥ अष्टाचत्वारिꣳशतम्मध्यमे यूप ऽआल-
भते। अष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो
जगत्यैवास्मै पशूनवरुन्द्धे ॥५॥ एकादशैकादशेतरेषु। एका-
दशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण
यजमानोऽभितः पाप्मानमपहते ॥ ६ ॥ अष्टा ऽउत्तमाना-
लभते। अष्टाक्षरा गायत्री ब्रह्म गायत्री तद्ब्रह्मणैवैतदस्य

सर्व्वस्योत्तमङ्करोति तस्स्माद्ब्रह्मास्य सर्व्वस्योत्तममित्याहुः ॥ ७ ॥ ते वै प्प्राजापत्त्या भवन्ति। ब्ब्रह्म वै प्प्रजापति-र्ब्ब्राह्मो हि प्प्रजापतिस्तस्स्मात्प्राजापत्त्या भवन्ति ॥ ८ ॥ स वै पशूनुपाकरिष्ष्यन् *। एतास्तिस्रः सावित्त्री-राहुतीर्ज्जुहोति 'देव सवितस्तत्त्सवितुर्व्वरेण्ण्यं विश्श्वानि देव सवित'रिति सवितारम्प्रीणाति सोऽस्स्मै प्प्रीत ऽएतान्पु-रुषान्प्रसौति तेन प्प्रसूतानालभते ॥ ९ ॥ ब्रह्मणे ब्ब्राह्म-णमालभते। ब्ब्रह्म वै ब्ब्राह्मणो ब्ब्रह्मैव तद्ब्रह्मणा समर्द्ध-यति क्षत्त्राय राजन्न्यं क्षत्त्रं वै राजन्न्यः क्षत्त्रमेव तत्क्षत्त्रेण समर्द्धयति मरुद्भ्यो वैश्श्यं विशो वै मरुतो विशमेव तद्विशा समर्द्धयति तपसे शूद्रन्तपो वै शूद्रस्तप ऽएव तत्त-पसा समर्द्धयत्त्येवमेता देवता यथारूपम्पशुभिः समर्द्धयति ता ऽएनꣳ समृद्धाः समर्द्धयन्ति सर्व्वैः कामैः ॥ १० ॥ आज्ज्येन जुहोति। तेजो वा ऽआज्ज्यन्तेजसैवास्स्मिँस्त-त्तेजो दधात्त्याज्ज्येन जुहोत्त्येतद्वै देवानाम्प्प्रियन्धाम यदाज्ज्य-म्प्रियेणैवैनान्धाम्म्ना समर्द्धयति त ऽएनꣳ समृद्धाः सम-र्द्धयन्ति सर्व्वैः कामैः ॥ ११ ॥ नियुक्तान्पुरुषान्। ब्रह्मा दक्षिणतः पुरुषेण नारायणेनाभिष्टौति 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपा'दित्त्येतेन षोडशर्च्चेन षोडशकलं वा ऽइदꣳ सर्व्वꣳ सर्व्वम्पुरुषमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्या ऽइत्थमसी-त्थमसीत्त्युपस्तौत्त्येवैनमेतन्महयत्त्येवाथो यथैष तथैनमेतदाह

* 'पशूनुपाकरिष्यन्नतिरात्रेण देव सवितरिति प्रत्यृचं जुहोति' ( का० श्रौ० सू २१. १. ६ ) इति।

( १ ) शु० य० सं० ३०। १-३। ( २ ) शु० य० सं० ३१. १।

तत्पुरुषैरग्निकृताः पशवो बभूवुरसंज्ञप्ताः ॥ १२ ॥ अथ हैनं वागभ्युवाद । पुरुष मा सन्तिष्ठिपो यदि सꣳस्थापयिष्यसि पुरुष एव पुरुषमत्स्यतीति तान्पर्यग्निकृतानेवोदसृजत्तद्देवत्या आहुतीरजुहोत्ताभिस्ता देवता अप्रीणात्ता एनम्प्रीता अप्रीणन्त्सर्वैः कामैः ॥ १३ ॥ आज्येन जुहोति । तेजो वा आज्यन्तेजसैवास्मिँस्तत्तेजो दधाति ॥ १४ ॥ ऐकादशिनैः सꣳस्थापयति । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानो मध्यतः पाप्मानमपहते ॥ १५ ॥ उदयनीयायाꣳ सꣳस्थितायाम् । एकादश वशा अनूबन्ध्या आलभते मैत्रावरुणीर्वैश्वदेवीर्बार्हस्पत्या एतासान्देवतानामाप्त्यै तद्यद्बार्हस्पत्या अन्त्या भवन्ति ब्रह्म वै बृहस्पतिस्तदु ब्रह्मण्येवान्ततः प्रतितिष्ठति ॥ १६ ॥ अथ यदेकादश भवन्ति । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानोऽन्ततः पाप्मानमपहते त्रैधातव्युदवसानीयासावेव बन्धुः ॥ १७ ॥ अथातो दक्षिणानाम् । मध्यम्प्रति राष्ट्रस्य यदन्यद्भूमेश्च ब्राह्मणस्य च वित्तात्सपुरुषम्प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुस्तदेव होतृका अन्वाभक्ताः ॥१८॥ अथ यदि ब्राह्मणो यजेत । सर्ववेदसन्दद्यात्सर्वं वै ब्राह्मणः सर्वꣳ सर्ववेदसꣳ सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै

(१) 'ग' 'ज' पुस्तकयोः "मध्यतः" इति पाठः ।

॥१९॥ अथात्मन्नग्नी समारोह्य *। उत्तरनारायणेनादित्यमुप- स्थायानपेक्षमाणोऽरण्यमभिप्प्रेयात्तदेव मनुष्येभ्यस्तिरो भवति यद्यु ग्रामे विवत्सेदरण्योरग्नी समारोह्योत्तरनारा- यणेनैवादित्यमुपस्थाय [1] गृहेषु प्प्रत्यवस्येदुथ तान्यज्ञक्रू- तूनाहरेत यानभ्याप्नुयात्स वा ऽएष न सर्वस्मा ऽअनु- वक्तव्यः सर्वᳪ हि पुरुषमेधो नेत्सर्वस्मा ऽइव सर्वम्ब्र- वाणीति यो न्वेव ज्ञातस्तस्मै ब्रूयादुथ योऽनूचानोऽथ योऽस्य प्प्रियः स्यान्नेत्त्वेव सर्वस्मा ऽइव ॥ २० ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

—॰—

## [ सर्वमेधः ]

ब्रह्म वै स्वयम्भु तपोऽतप्प्यत । तदैक्षत न वै तप- स्यानन्त्यमस्ति हन्ताहम्भूतेष्वात्मानञ्जुहवानि भूतानि चात्मनीति तत्सर्वेषु भूतेष्वात्मानᳪ हुत्वा भूतानि चात्मनि सर्वेषाम्भूतानाᳪ श्रैष्ठ्यᳪ स्वाराज्यमाधिपत्यम्पर्य्यैत्तथै- वैतद्यजमानः सर्वमेधे सर्वान्मेधान्हुत्वा [2]सर्वेषाम्भूतानाᳪ

---

* का० श्रौ० सू० २१. १. १७। 'गार्हपत्येऽधरारणिमनुप्रहृत्याहवनीय उत्तरारणिमात्मन्यग्नी समारोप्यारण्यं व्रजेत्' इति शाङ्खायनोक्तिः । तथा च मनुः 'आत्मन्यग्निं समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्' ( मनु० ६. ३८ ) इति ।

'त्रैधातव्यन्ते समारोह्यात्मन्नग्नी सूर्यमुपस्थायाद्भ्यः सम्भृत इत्यनुवाकेनानपेक्षमाणोऽ० गत्वा न प्रत्यवेयात्' 'ग्रामे वा विवत्सन्नरण्योः' ( का० श्रौ० सू० २१ । १ । १७–१८ ) इति कात्यायनोक्तिः ।

( १ ) "अद्भ्यः सम्भृतः" इत्यादिषण्णां कण्डिकानामुत्तरनारायणमिति संज्ञा ।

( २ ) 'ग' 'ज' पुस्तकयोः 'सर्व्वेषाम्भूतानाम्' इत्यस्य स्थाने 'सर्व्वाणि भूतानि' इति पाठः समुपलभ्यते ।

श्रैष्ठ्यꣳ स्वाराज्यमाधिपत्यम्पर्य्येति ॥ १ ॥ स वा ऽएष सर्व्वमेधो दशरात्रो यज्ञक्रतुर्ब्भवति । दशाक्षरा विराड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै तस्मिन्नग्निम्पराद्ध्र्यञ्चिनोति परमो वा ऽएष यज्ञक्रतूनां यत्सर्वमेधः परमेणैवैनम्परमताङ्गमयति ॥ २ ॥ तस्याग्निष्टुदग्निष्टोमः प्रथममहर्ब्भवति । अग्निर्वा ऽअग्निष्टुदग्निष्टोमोऽग्निमुखा ऽउ वै सर्व्वे देवाः सर्व्वेषान्देवानामाप्त्यै तस्याग्नेया ग्रहा भवन्त्याग्नेय्यः पुरोरुचः सर्व्वमाग्नेयमसदिति ॥ ३ ॥ इन्द्रस्तुदुक्थ्यो द्वितीयमहर्ब्भवति । इन्द्रो वै सर्व्वे देवाः सर्व्वेषान्देवानामाप्त्यै तस्यैन्द्रा ग्रहा भवन्त्यैन्द्र्यः पुरोरुचः सर्व्वमैन्द्रमसदिति ॥ ४ ॥ सूर्य्यस्तुदुक्थ्यस्तृतीयमहर्ब्भवति । सूर्य्यो वै सर्व्वे देवाः सर्व्वेषान्देवानामाप्त्यै तस्य सौर्य्या ग्रहा भवन्ति सौर्य्यः पुरोरुचः सर्व्वꣳ सौर्य्यमसदिति ॥ ५ ॥ वैश्वदेवश्चतुर्त्थमहर्ब्भवति । विश्वे वै सर्व्वे देवाः सर्व्वेषान्देवानामाप्त्यै तस्य वैश्वदेवा ग्रहा भवन्ति वैश्वदेव्यः पुरोरुचः सर्व्वं वैश्वदेवमसदिति ॥ ६ ॥ आश्वमेधिकम्मद्ध्यमम्पञ्चममहर्ब्भवति । तस्मिन्नश्वम्मेद्ध्यमालभतेऽश्वमेधस्यैवाप्त्यै ॥ ७ ॥ पौरुषमेधिकम्मद्ध्यमहः षष्ठमहर्ब्भवति । तस्मिन्मेद्ध्यान्पुरुषानालभते पुरुषमेधस्यैवाप्त्यै ॥ ८ ॥ अप्तोर्य्यामः सप्तममहर्ब्भवति । सर्व्वेषां यज्ञक्रतूनामाप्त्यै तस्मिन्त्सर्व्वान्मेद्ध्यानालभते यच्च प्राणि यच्चाप्राणं वपा वपावताञ्जुहोति

(१-२) 'ग' 'ज' पुस्तकयोः 'तस्य' इति पाठो नोपलभ्यते ।

त्वच ऽउत्कर्त्तमवपाकानाथं संव्रश्चमोषधिवनस्पतीनाम्प्र-
किरन्ति शुष्काणाञ्चार्द्राणाञ्चान्नमन्नञ्जुहोत्यन्नस्यान्नस्याप्त्यै
सर्वञ्जुहोति सर्वस्मै जुहोति सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै
प्रातःसवने हुतासु वपास्वेवमेव तृतीयसवने हुतेषु
हविःषु ॥ ९ ॥ त्रिणवमष्टममहर्भवति । वज्रो वै त्रिणवो
वज्रेण खलु वै क्षत्रं स्पृतन्तद्वज्रेणैव क्षत्रं स्पृणोति
॥ १० ॥ त्रयस्त्रिंशन्नवममहर्भवति । प्रतिष्ठा वै त्रय-
स्त्रिंशः प्रतिष्ठित्यै ॥ ११ ॥ विश्वजित्सर्वपृष्ठोऽति-
रात्रो दशममहर्भवति । सर्वं वै विश्वजित्सर्वपृष्ठोऽति-
रात्रः सर्वं सर्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ १२ ॥
अथातो दक्षिणानाम् । मद्ध्यम्प्रति राष्ट्रस्य यदन्यद्ब्रा-
ह्मणस्य वित्तात्सभूमि सपुरुषम्प्राची दिग्घोतुर्दक्षिणा
ब्रह्मणः प्रतीच्यद्ध्वर्योरुदीच्युद्गातुस्तदेव होतृका
ऽअन्वाभक्ताः ॥ १३ ॥ तेन हैतेन विश्वकर्म्मा भौवन
ऽईजे । तेनेष्ट्वात्यतिष्ठत्सर्वाणि भूतानीदं सर्वमभवदति-
तिष्ठति सर्वाणि भूतानीदं सर्वम्भवति य ऽएवं विद्वा-
न्त्सर्वमेधेन यजते यो वैतदेवं वेद ॥ १४ ॥ तं ह कश्यपो
याजयाञ्चकार । तदपि भूमिः श्लोकञ्जगौ न मा मर्त्यः
कश्चन दातुमर्हति विश्वकर्म्मन्भौवन मन्द ऽआसिथ ।
उपमङ्क्ष्यति स्या सलिलस्य मद्ध्ये मृषैष ते सङ्गर
कश्यपायेति ॥ १५ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

—o—

[ ब्राह्मणचतुष्टयेन पितृमेधनिरूपणम् ]

* अथास्म्मै श्म्मशानङ्कुर्वन्ति । गृहान्न्वा प्प्रज्ञानं व्वा यो वै कश्च म्म्रियते स शवस्तस्म्मा ऽएतदन्नङ्करोति तस्म्माच्छवान्नꣳ शवान्नꣳ ह वै तच्छ्मशानमित्त्याचक्षते परोक्षꣳ श्मशा ऽउ हैव नाम पितृणामत्तारस्ते हामुष्म्मिँल्लोके ऽक्कृतश्म्मशानस्य साधुकृत्त्यामुपदम्भयन्ति तेब्भ्य ऽएतदन्नङ्करोति तस्म्माच्छ्मशान्नꣳ श्मशान्नꣳ ह वै तच्छ्मशानमित्त्याचक्षते परोऽक्षम् ॥ १ ॥ तद्वै न क्षिप्प्रङ्कुर्य्यात् । नेन्नवमघङ्करवाणीति चिर ऽएव कुर्य्यादघमेव तत्तिरः करोति यत्र समा नानु चन स्म्मरेयुरश्श्रुतिमेव तदघङ्गमयति यद्यनुस्म्मरेयुः ॥ २ ॥ अयुङ्गेषु सँव्वत्सरेषु कुर्य्यात् । अयुङ्ग्घि हि पितृणामेकनक्षत्र ऽएकनक्षत्रꣳ हि पितृणाममावास्यायाममावास्या वा ऽएकनक्षत्रमेको हि यद्वेताꣳ रात्रिꣳ सर्व्वाणि भूतानि सँव्वसन्ति तेनो तङ्काममाप्नोति यः सर्व्वेषु नक्षत्रेषु ॥ ३ ॥ शरदि कुर्य्यात् । स्वधा वै शरत्स्वधो वै पितृणामन्नन्तदेनमन्ने स्वधायान्दधाति माघे वा मा नोऽघमभूदिति निदाघे वा नि नोऽघन्धीयाता ऽइति ॥४॥ [अर्धप्रपाठकः ॥५०॥] चतुःस्त्रक्ति । देवाश्चासुराश्चोभये प्प्राजापत्त्या दिक्ष्वस्प्पर्द्धन्त ते देवा ऽअसुरान्त्सपत्नान्भ्रातृव्व्यान्दिग्भ्योऽनुदन्त तेऽदिक्काः पराभवँस्तस्म्माद्या दैव्व्यः प्प्रजा-

* अत्राध्यायारम्भे 'अथास्मै कल्याणङ्कुर्व्वन्ति' इत्यधिकः पाठः 'ग' 'ज' पुस्तकयोरुपलभ्यते । स तु प्रामादिक एव प्रतीयते, प्राचीनतमहस्तलिखितपुस्तकेष्वदर्शनात् ।

श्चतुःस्रक्तीनि ताः श्मशानानि कुर्वतेऽथ या ऽआसुर्य्यः प्राच्यास्त्वद्ये त्वत्परिमण्डलानि तेऽनुदन्त ह्येनान्दिग्भ्य ऽउभे दिशावन्तरेण विदधाति प्राचीञ्च दक्षिणाञ्चैत-स्याथं ह दिशि पितृलोकस्य द्वारन्द्वारैवैनम्पितृलोकम्प्रपाद-यति स्रक्तिभिर्दिक्षु प्रतितिष्ठतीतरेणात्मनावान्तरदिक्षु तदेनः सर्वासु दिक्षु प्रतिष्ठापयति ॥ ५ ॥ अथातो भूमिजोषणस्य । उदीचीनप्रवणे करोत्युदीची वै मनु-ष्याणान्दिक्तदेनम्मनुष्यलोक ऽआभजत्येतद्ध वै पितरो मनुष्यलोक ऽआभक्ता भवन्ति यदेषाम्प्रजा भवति प्रजा हास्य श्श्रेयसी भवति ॥ ६ ॥ दक्षिणाप्रवणे * कुर्य्या-दित्याहुः । दक्षिणाप्रवणो वै पितृलोकस्तदेनम्पितृलोक ऽआभजतीति न तथा कुर्य्यादामीवद्ध नाम तच्छ्मशान-करणङ्क्षिप्रे हैषामपरोऽनुप्रैति ॥ ७ ॥ दक्षिणाप्रवणस्य प्रत्यर्षे कुर्य्यादित्यु हैक ऽआहुः । तत्प्रत्युच्छ्रितमघम्भव-तीति नो ऽएव तथा कुर्य्याद्यद्वा ऽउदीचीनप्रवणे करोति तदेव प्रत्युच्छ्रितमघम्भवति ॥ ८ ॥ यस्यैव समस्य सतः । दक्षिणतः पुरस्तादाप ऽएत्य सꣳस्थायाप्रघ्नत्य ऽएता-न्दिशमभिनिष्पद्याक्षय्या ऽअपोऽपिपद्येरँस्तत्कुर्य्यादन्नं वा ऽआपोऽन्नाद्यमेवास्मा ऽएतत्परस्तात्प्रत्यग्दधात्यमृतमु त्वा ऽआप ऽएषो ह जीवानान्दिगन्तरेण सप्तऽर्षीणाञ्चो-दुयनमादित्यस्य चास्तमयनममृतमेव तज्जीवेषु दधाति तद्धैतत्प्रतिमीवन्नाम श्मशानकरणञ्जीवेभ्यो हितं यद्वात्र

* 'दक्षिणाप्रवण एके' ( का० श्रौ० सू० २१. ३. १७ ) ।

जीवेभ्यो हितन्तत्पितृभ्यः ॥ ९ ॥ कम्वति * कुर्य्यात् । कम्मेऽसदित्यथो शम्वति शम्मेऽसदिति नाधिपथङ्कुर्य्यान्नाकाशे नेदाविरघङ्करवाणीति ॥ १० ॥ गुहा सदवतापि स्यात् । तद्यद्गुहा भवत्यघमेव तद्गुहा करोत्यथ यदवताप्यसौ वा ऽआदित्यः पाप्मनोऽपहन्ता स ऽएवास्मात्पाप्मानमपहन्त्यथो ऽआदित्यज्योतिषमेवैनङ्करोति ॥११॥ न तस्मिन्कुर्य्यात् । यस्येत्थादनूकाशः स्याद्याचमानꣳ ह नाम तस्मिन्प्रे हैषामपरोऽलुप्यतीति ॥ १२ ॥ चित्रम्पश्चात्स्यात् । प्रजा वै चित्रञ्चित्रꣳ हास्य प्प्रजा भवति यदि चित्रन्न स्यादापः पश्चाद्वोत्तरतो वा स्युरापो ह्येव चित्रञ्चित्रꣳ हैवास्य प्प्रजा भवति ॥ १३ ॥ ऊषरे करोति । रेतो वा ऽऊषाः प्प्रजननन्तदेनम्प्रजनन ऽआभजत्येतद्ध वै पितरः प्प्रजनन ऽआभक्ता भवन्ति यदेषाम्प्रजा भवति प्प्रजा हास्य श्श्रेयसी भवति ॥ १४ ॥ समूले समूलꣳ हि पितृणां वीरिणमिश्श्र[1] ऽएतद्धास्याः पित्र्यमनतिरिक्तमथो ऽअघमेव तद्बद्धं करोति ॥ १५ ॥ न भूमिपाशमभिविदध्यात् । न शरन्नाश्मगन्धान्नाद्ध्याण्डान्न पृश्निपर्णीन्नाश्वत्थस्यान्तिकङ्कुर्य्यान्न विभीतकस्य न तिल्वकस्य न स्फूर्ज्जकस्य न हरिद्रोर्न्न न्यग्रोधस्य ये चान्न्ये पापनामानो मङ्गलोपेप्सया नाम्नामेव परिहाराय ॥ १६ ॥ अथात ऽआवृदेव । अग्निविधयाग्निचितः श्मशानङ्करोति

* 'शम्वति कम्वति वा' ( का० श्रौ० सू० २१. ३. २२. ) इति ।

( १ ) 'वीरिणमिश्रमेतद्धास्याः' इति 'ग' पुस्तके । 'वीरिणमिश्रमेतमेतद्धास्याः' इति च 'ज' पुस्तके ।

यद्वै यजमानोऽग्निञ्चिनुतेऽमुष्मै तल्लोकाय यज्ञेनात्मानꣳ संस्कुरुत ऽएतदु ह यज्ञियङ्कर्म्मासꣳस्थितमा श्मशानकरणात्तद्यदग्निविधयाग्निचितꣳ श्मशानङ्करोत्यग्निचित्यामेव तत्सꣳस्थापयति ॥१७॥ तद्वै न महत्कुर्य्यात् । नेन्महदघङ्करवाणीति यावानपक्षपुच्छोऽग्निस्तावत्कुर्य्यादित्यु हैक ऽआहुꣳ समानो ह्यस्यैष ऽआत्मा यथैवाग्नेस्तथेति ॥ १८ ॥ पुरुषमात्रन्त्वेव कुर्य्यात् । तथापरस्म्मा ऽअवकाशन्न करोति पश्चाद्वरीयꣳ प्प्रजा वै पश्चात्प्रजामेव तद्वरीयसीङ्कुरुत ऽउत्तरतो वर्षीयꣳ प्प्रजा वा ऽउत्तराꣳ प्प्रजामेव तद्वर्षीयसीङ्कुरुते तद्विधायापसलविसृष्टाभि स्पन्द्याभिꣳ पर्य्यातनोत्यपसलवि पित्र्यꣳ हि कर्म्म ॥१९॥ अथोद्धन्तवा ऽआह । स यावत्येव निवप्स्यन्त्स्यात्तावदुद्धन्न्यात्पुरुषमात्रन्त्वेवोद्धन्न्यात्तथापरस्म्मा ऽअवकाशन्न करोत्यथो ऽओषधिलोको वै पितर ऽओषधीनाꣳ ह मूलान्न्युपसर्प्पन्त्यथो नेदस्या ऽअन्तर्हितोऽसदिति ॥ २० ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

अन्तर्द्धायो हैके निवपन्ति । देवाश्चासुराश्चोभये प्प्राजापत्या ऽअस्मिँल्लोकेऽस्पर्द्धन्त ते देवा ऽअसुरान्त्सपत्नान्भ्रातृव्व्यानस्म्माल्लोकादनुदन्त तस्माद्या दैव्व्यꣳ प्प्रजा ऽअनन्तर्हितानि ताꣳ श्मशानानि कुर्वतेऽथ या ऽआसुर्य्यꣳ प्प्राच्च्यास्त्वद्ये त्वदन्तर्हितानि ते चम्वान्त्वद्यस्मिँस्त्वत् ॥ १ ॥ अथैनत्परिश्रिद्भिꣳ परिश्रयति ।

या ऽएवामूः परिश्रितस्ता ऽएता यजुषा ताः परिश्रयति तूष्णीमिमा देवश्चैव तत्पितृयश्च व्याकरोत्यपरिमिताभिरपरिमितो ह्यसौ लोकः ॥ २ ॥ अथैनत्पलाशशाखया व्युदूहति *। यदेवादो व्युदूहनन्तदेत'दुपेतो यन्तु पणयोऽसुम्ना देवपीयव, ऽइति पणीनेवैतदसुम्नान्देवपीयूनसुररक्षसान्यस्माल्लोकादपह'न्त्यस्य लोकः सुतावत' ऽइति सुतवान्हि ह य ऽईजानो 'द्युभिरहोभिरक्तुभिर्व्यक्त'मिति तदेनमृतुभिश्चाहोरात्रैश्च सलोकङ्करोति ॥ ३ ॥ 'यमो ददात्ववसानमस्मा' ऽइति। यमो ह वा ऽअस्या अवसानस्येष्टे तमेवास्मा ऽअस्यामवसानं याचति तान्दक्षिणोदस्यत्युदगितरान्देवश्चैव तत्पितृयश्च व्याकरोति ॥ ४ ॥ अथ दक्षिणतः सीरं युनक्ति। उत्तरत ऽइत्यु हैक ऽआहुः स यथा कामयेत तथा कुर्याद्युङ्क्तेति सम्प्रेष्याभिमन्त्रयते 'सविता ते शरीरेभ्यः पृथिव्याँल्लोकमिच्छत्वि'ति सवितैवास्यैतच्छरीरेभ्यः पृथिव्याँल्लोकमिच्छति 'तस्मै युज्यन्तामुस्त्रिया' ऽइत्येतस्मा ऽउ हि कर्म्मण ऽउस्त्रिया युज्यन्ते ॥ ५ ॥ षड्गवम्भवति। षडृतवः सँवत्सर ऽऋतुष्वेवैनमेतत्सँवत्सरे प्रतिष्ठायाम्प्रतिष्ठापयति तदपसलवि पर्य्याहृत्योत्तरतः प्रतीचीम्प्रथमाथं सीताङ्कृषति 'वायुः पुनात्वि'ति 'सविता

* का० श्रौ० सू० २१. ३. ३१।

(१) शु० य० सं० ३५. १। (२) शु० य० सं० ३५. १। (३) शु० य० ३५. १। (४) शु० य० सं० ३५. १। (५) शु० य० सं० ३५. २। (६) शु० य० सं० ३५. २। (७) शु० य० सं० ३५. ३। (८) शु० य० सं० ३५. ३।

पुनात्वि'ति जघनार्द्धेन दक्षिणा 'ग्नेर्भ्राजसे'ति दक्षिणार्द्धेन प्राचीᳬ 'सूर्य्यस्य वर्चसे'त्यग्रेणोदीचीम् ॥ ६ ॥ *

चतस्रः सीता यजुषा कृषति †। तद्यच्चतसृषु दिक्ष्वन्नन्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तद्वै यजुषाद्धा वै तद्यद्यजुरद्धो तद्यदिमा दिशः ॥ ७ ॥ अथाश्मानं विकृषति। तद्यदेव सँवत्सरेऽन्नन्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तूष्णीमपरिमिताभिरपरिमितो ह्यसौ लोकः ॥ ८ ॥ अथैनद्विमुञ्चति। कृत्वा तत्कर्म्म यस्मै कर्म्मण एनद्युङ्क्ते 'विमुच्यन्तामुस्रिया' इत्येतस्मा उ हि कर्म्मण उस्रिया युज्यन्ते दक्षिणोदस्यत्युदगितरद्देवत्रैव तत्पितृभ्यश्च व्याकरोति ॥ ९ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—— ० ——

अथ सर्वौषधं वपति। यद्वेवादः सर्वौषधन्तदेतद्वल्हीभिस्तद्वपत्येकयेदन्देवत्रैव तत्पितृभ्यश्च व्याकरो'त्यश्वत्थे वो निषदनम्पर्णे वो वसतिष्कृते'ति ज्योग्जीवातुमेवैभ्य एतदाशास्ते तथो हैषामेकैकोऽपरो जरसानुप्रैति ॥ १ ॥ अथैनन्निवपति। इयं वै पृथिवी प्रतिष्ठास्यामेवैनमेतत्प्रतिष्ठायाम्प्रतिष्ठापयति पुरादित्यस्योदयात्तिर इव वै पितरस्तिर इव रात्रिस्तिर एव तत्करोति यथा कुर्वतोऽभ्यु-

---

(१) शु० य० सं० ३५. ३। (२) शु० य० सं० ३५. ३

* अत्र शतम् ६८००।

† का० श्रौ० सू० २१. ४. १।

(३) शु० य० सं० ३५. ३।(४) शु० य० सं० ३५. ४।

दियात्तदेनमुभयोरहोरात्रयोः प्रतिष्ठापयति ॥२॥ 'सविता ते शरीराणि । मातुरुपस्थ ऽआवपतु'ति सवितैवास्यैतच्छरीराण्यस्यै पृथिव्यै मातुरुपस्थ ऽआवपति 'तस्यै पृथिवि शम्भवे'ति यथैनास्मा ऽइयᳪ᳭ शᳪ᳭ स्यादेवमेतदाह 'प्रजापतौ त्वा देवतायामुपोदके लोके निदधाम्यसा'विति नाम गृह्णात्ययं वै लोक ऽउपोदकस्तदेनम्प्रजापतौ देवतायामुपोदके लोके निदधाति ॥ ३ ॥ अथ कश्चिदाह । एतान्दिशमनवानन्त्सृत्वा कुम्भम्प्रक्षीयानपेक्षमाण ऽएहीति तत्र जपति 'परम्मृत्यो ऽअनु परेहि पन्थां यस्ते ऽअन्य ऽइतरो देवयानात् ॥ चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाᳪ᳭ रीरिषो मोत वीरा'निति ज्योग्जीवातुमेवैभ्य ऽएतदाशास्ते तथो हैषामेकैकोऽपरो जरसानुप्रैति ॥ ४ ॥ अथैनं यथाङ्कल्पयति । 'शं वातः शᳪ᳭ हि ते घृणिः शन्ते भवन्त्विष्टकाः ॥ शन्ते भवन्त्वग्नयः पार्थिवासो मा त्वाभिशूशुचन् ॥ 'कल्पन्तान्ते दिशस्तुभ्यमापः शिवतमास्तुभ्यम्भवन्तु सिन्धवः ॥ अन्तरिक्षᳪ᳭ शिवन्तुभ्यङ्कल्पन्तान्ते दिशः सर्वा' ऽइत्येतदेवास्मै सर्वङ्कल्पयत्येतदस्मै शिवङ्करोति ॥ ५ ॥ अथ त्रयोदश पादमात्र्य ऽइष्टका ऽअलक्षणाः कृता भवन्ति । या ऽएवामूरग्नाविष्टकास्ता ऽएता यजुषा ता ऽउपदधाति तूष्णीमिमा दैवञ्चैव तत्पित्र्यञ्च व्याकरोति ॥ ६ ॥ त्रयोदश भवन्ति । त्रयोदश मासाः

(१) शु० य० सं० ३५. ५। (२) शु० य० सं० ३५. ५। (३) शु० य० सं० ३५. ६। (४) शु० य० सं० ३५. ७। (५) शु० य० सं० ३५. ८। (६) शु० य० सं० ५१. ९।

सँवत्सर ऽऋतुष्वेवैनमेतत्सँवत्सरे प्रतिष्ठायाम्प्रतिष्ठापयति ॥ ७ ॥ पादमात्र्यो भवन्ति । प्रतिष्ठा वै पादः प्रतिष्ठामेवास्मै करोत्यलक्षणा भवन्ति तिर ऽइव वै पितरस्तिर ऽइव तद्यदलक्षणन्तिर ऽएव तत्तिरः करोति ॥ ८ ॥ तासामेकाम्मद्ध्ये प्राचीमुपदधाति । स ऽआत्मा तिस्रः पुरस्तान्मूर्द्धसꣳहितास्तच्छिरस्तिस्रो दक्षिणतः स दक्षिणः पक्षस्तिस्र ऽउत्तरतः स ऽउत्तरः पक्षस्तिस्रः पश्चात्तत्पुच्छꣳ सोऽस्यैष पक्षपुच्छवानात्मा यथैवाग्नेस्तथा ॥ ९ ॥ अथ प्रदरात्पुरीषमाहर्त्तवा ऽआह । एतद्धास्याः पित्र्यमनतिरिक्तमथो ऽअघमेव तद्बहु करोत्यस्मिन्नु हैकेऽवान्तरदेशे कर्षूङ्खात्वा ततोऽभ्याहारङ्कुर्वन्ति परिकृषन्त्यु हैके दक्षिणतः पश्चादुत्तरतस्ततोऽभ्याहारङ्कुर्वन्ति स यथा कामयेत तथा कुर्य्यात् ॥ १० ॥ तद्वै न महत्कुर्य्यात् । नेन्महदघङ्करवाणीति यावानुद्बाहुः पुरुषस्तावत्क्षत्रियस्य * कुर्य्यान्मुखदघ्नम्ब्राह्मणस्योपस्थदघ्नꣳ स्त्रिया ऽऊरुदघ्नं वैश्यस्याष्ठीवद्दघ्नꣳ शूद्रस्यैवं वीर्य्या ह्येत ऽइति ॥ ११ ॥ अधोजानु त्वेव कुर्य्यात् । तथापरस्मा ऽअवकाशन्न करोति तस्य क्रियमाणस्य तेजनीमुत्तरतो धारयन्ति प्रजा ह सा प्रजामेव तदुत्तरतो धारयन्ति तान्न न्यस्येद्धृत्वा वैनामूढ्वा वा गृहेषूच्छ्रयेत्प्रजामेव तद्गृहेषूच्छ्रयति ॥ १२ ॥ कृत्वा यवान्वपति । अघम्मे यवयानित्यवकाभिः प्रच्छादयति कम्मेऽसदिति दर्भैः प्रच्छादयत्यरूक्षतायै ॥ १३ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

अथैनञ्छङ्कुभिः परिणिहन्ति । पालाशम्पुरस्ताद्ब्रह्म वै पलाशो ब्रह्मपुरोगवमेवैनथं स्वर्ग्गँल्लोकङ्गमयति शमीमयमुत्तरतः शम्मेऽसदिति वारणम्पश्चादघम्मे वारयाता ऽइति व्वृत्रशङ्कुन्दक्षिणतोऽघस्यैवानत्ययाय ॥ १ ॥ अथ दक्षिणतः परिवक्के खनन्ति । ते क्षीरेण चोदकेन च पूरयन्ति ते हैनममुष्मिँमल्लोकेऽक्षिते कुल्ये ऽउपधावतः सप्तोत्तरतस्ता ऽउदकेन पूरयन्ति न ह वै सप्त स्रवन्तीरघमत्येतुमर्हत्यघस्यैवानत्ययाय ॥ २ ॥ अश्मनस्त्रींस्त्रीन्प्रकिरन्ति । ता ऽअभ्युत्तरन्त्य'श्मन्न्वती रीयते सङ्करभद्ध्वमुत्तिष्ठत प्रतरता सखायः ॥ अत्रा जहीमोऽशिवा ये ऽअसञ्छिवान्न्वयमुत्तरेमाभि व्वाजा'निति यथैव यजुस्तथा बन्धुः ॥ ३ ॥ अपामार्गैरपमृजते । अघमेव तदुपमृजतेऽ'पाघमप किल्विषमप कृत्यामपो रपः ॥ अपामार्ग्ग त्वमस्मदप दुःष्वप्प्न्यथं सुवे'ति यथैव यजुस्तथा बन्धुः ॥ ४ ॥ यत्रोदकम्भवति तत्स्नान्ति । 'सुमित्रिया न ऽआप ऽओषधयः सन्त्वि'त्यञ्जलिनाप ऽउपाचति व्वज्रो वा ऽआपो व्वज्रेणैवैतन्मित्रधेयङ्कुरुते 'दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्म' ऽइति यामस्य दिशन्द्वेष्यः स्यात्तान्दिशम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ ५ ॥ स यदि स्थावरा ऽआपो भवन्ति । स्थापयन्त्येषाम्पाप्मानमथ यदि व्वहन्ति व्वहन्त्येवैषाम्पाप्मानथं स्नात्वाहतानि व्वा-

* 'उरः क्षत्रियस्योर्ध्ववाहु वा' ( का० श्रौ० सू० २१. ४. १३ ) इति ।

( १ ) शु० य० सं० ३५. १० । ( २ ) शु० य० सं० ३५. ११ । ( ३ ) शु० य० सं० ३५. १२ । ( ४ ) शु० य० सं० ३५. १२ ।

साꣳसि परिधायानडुहः पुच्छमन्वारभ्यायन्त्याग्नेयो वा ऽअनड्वानग्निमुखा ऽएव तत्पितृलोकाज्जीवलोकमभ्याऽयन्त्यथो ऽअग्निर्वै पथोऽतिवोढा स ऽएनाननतिवहति ॥ ६ ॥ [1]'उद्वयन्तमसस्परी'ति । एतामृचञ्जपन्तो यन्ति तत्तमसः पितृलोकादादित्यञ्ज्योतिरभ्यायन्ति तेभ्य ऽआगतेभ्य ऽआञ्जनाभ्यञ्जने प्रयच्छन्त्येष ह मानुषोऽलङ्कारस्तेनैव तम्मृत्युमन्तर्दधते ॥ ७ ॥ अथ गृहेष्वग्निꣳ समाधाय । वारणान्परिधीन्परिधाय वारणेन स्रुवेणाग्नय ऽआयुष्मत ऽआहुतिञ्जुहोत्यग्निर्वा ऽआयुष्मानायुष ऽईष्टे तमेवैभ्य ऽआयुर्याचत्य[2]'ग्न ऽआयूꣳषि पवस' ऽइति पुरोऽनुवाक्ययाभाजनम् ॥ ८ ॥ अथ जुहोति । [3]'आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि ॥ घृतम्पीत्वा मधु चारु गव्यम्पितेव पुत्रमभिरक्षतादिमान्त्स्वाहे'ति यथैवैनानभिरक्षेद्यथाभिगोपायेदेवमेतदाह ॥ ९ ॥ तस्य पुराणोऽनड्वान्दक्षिणा * । पुराणा यवाः पुराण्यासन्दी सोपबर्हणैषा न्वादिष्टा दक्षिणा कामं यथाश्रद्धम्भूयसीन्दद्यादिति न्वनग्निचितः ॥ १० ॥ अथानग्निचितः । एतदेव भूमिजोषणमेतत्समानङ्कर्म यदन्यदग्निकर्म्मणः कुर्याद्वाहिताग्नेः शर्करा ऽइत्यु हैक ऽआहुर्या ऽएवामूरग्न्याधेयशर्करास्ता ऽएता ऽइति न कुर्यादित्येक ऽईश्वरो हैता ऽअनग्निचितꣳ सन्तप्तोरिति स यथा कामयेत तथा ।

(१) शु० य० सं० ३५. १४; (२) शु० य० सं० ३५. १६। (३) शु० य० सं० ३५. १७।

* तथा च कात्यायनः "आसन्दी सोपधाना दक्षिणाऽनड्वान्यवाश्च सर्वं पुराणम् ( का० श्रौ० सू० २१. ४. २९ ) इति।

कुर्य्यात् ॥ ११ ॥ मर्य्यादाया ऽएव लोष्टमाहृत्य । अन्तरेण निदधाती'मञ्जीवेभ्यः परिधिन्दधामि मैषान्नु गादपरो ऽअर्थमेतम् ॥ शतञ्जीवन्तु शरदः पुरूचीरन्तर्म्मृत्युन्दधतां पर्वतेने'ति जीवेभ्यश्चैवैतात्पितृभ्यश्च मर्य्यादाङ्करोत्यसम्भेदाय तस्मादु हैतज्जीवाश्च पितरश्च न सन्दृश्यन्ते ॥ १२ ॥

अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ॥१००॥

इत्यऽष्टमोऽध्यायः ॥ ८ ॥

अश्वमेधनाम त्रयोदशं काण्डं † समाप्तम् ॥ १३ ॥



(१) शु० य० सं० ३५. १५।

† अस्मिन्काण्डे कण्डिकासंख्या ४.३२ ।

# अथोपनिषन्नाम* चतुर्दशं काण्डम्

—— ०—— ——

काण्डेऽस्मिन्प्रतिपाद्या विषयाः—घर्मः, प्रवर्ग्यः, महावीरः, प्रवर्ग्योत्सादनम्' प्रवर्ग्यकर्तृनियमः, बृहदारण्यकम्, काम्यहवनादि, गर्भाधानादि, जातकर्म, वंशब्राह्मणमिति ।

[ घर्मोपक्रमः ]

॥ ॐ ॥ देवा ह वै सत्रन्निषेदुः । अग्निरिन्द्रः सोमो मखो विष्णुर्विश्वे देवा ऽअन्यत्रैवाश्विभ्याम् ॥ १ ॥ तेषाङ्कुरुक्षेत्रन्देवयजनमास । तस्मादाहुः कुरुक्षेत्रन्देवानान्देवयजनमिति तस्माद्यत्र क्व च कुरुक्षेत्रस्य निगच्छति तदेव मन्यत ऽइदन्देवयजनमिति तद्धि देवानान्देवयजनम् ॥ २ ॥ त ऽआसत । श्रियङ्गच्छेम यशः स्यामान्नादाः स्यामेति तथो ऽएवेमे सत्रमासते ये[1] सत्रमासते श्रियङ्गच्छेम यशः स्यामान्नादाः स्यामेति ॥३॥ ते होचुः । यो नः श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिर्यज्ञस्योदृचम्पूर्वोऽवगच्छात्स नः श्रेष्ठोऽसत्तदु नः सर्वेषाꣳ सहेति तथेति ॥ ४ ॥ तद्विष्णुः प्रथमः प्राप । स देवानाꣳश्रेष्ठोऽभवत्तस्मादाहुर्विष्णुर्देवानाꣳ श्रेष्ठ ऽइति ॥ ५ ॥ स यः स विष्णुर्यज्ञः स । स यः स यज्ञोऽसौ स ऽआदित्यस्तद्धेदं यशो विष्णुर्न्न शशाक सँयन्तुन्तदिद-

---

* उपनिषच्छब्देन मुख्यया वृत्त्या ब्रह्मविद्यैवोच्यते । उप समीपस्थं प्रत्यगात्मैकत्वं नीति निश्चितं सत् तत्पराणं सहेतुं संसारं सादयतीत्युपनिषदिति व्युत्पत्तेः । ग्रन्थस्तु विद्यासमर्थकत्वेनोपचाराद्युपनिषदित्युच्यते ।

( १ ) 'ये सत्रमासते'' इति पाठः 'ग' 'ज' पुस्तकयोर्न दृश्यते ।

मप्येतर्हि नैव सर्वं ऽइव यशः शक्नोति सँरुधन्तुम् ॥ ६ ॥ स तिसृधन्वमादायापचक्राम । स धनुरार्त्न्या शिर ऽउपस्तभ्य तस्थौ तन्देवा ऽअनभिधृष्णुवन्तः समन्तम्परिण्यविशन्त ॥ ७ ॥ ता ह वम्र्य ऽऊचुः । इमा वै वम्र्यो यदुपदीका योऽस्य ज्यामप्यद्यात्किमस्मै प्रयच्छेतेत्यन्नाद्यमस्मै प्रयच्छेमापि धन्वन्नपोऽधिगच्छेत्तथास्मै सर्वमन्नाद्यम्प्रयच्छेमेति तथेति ॥ ८ ॥ तस्योपपरासृत्य । ज्यामपिजक्षुस्तस्याञ्छिन्नायान्धनुरार्त्न्यौ विष्फुरन्त्यौ विष्णोः शिरः प्रचिच्छिदतुः ॥ ९ ॥ तद्घृङ्ङिति पपात । तत्पतित्वासावादित्योऽभवदथेतरः प्राङेव प्रावृज्यत तद्यद्घृङ्ङित्यपतत्तस्माद्घर्म्मोऽथ यत्प्रावृज्यत तस्मात्प्रवर्ग्यः ॥ १० ॥ ते देवा ऽअब्रुवन् । महान्वत नो वीरोऽपादीति तस्मान्महावीरस्तस्य यो रसो व्यक्षरत्तम्पाणिभिः सम्ममृजुस्तस्मात्सम्राट् ॥ ११ ॥ तन्देवा ऽअभ्यमृज्यन्त । यथा वित्तिं वेत्स्यमाना ऽएवन्तमिन्द्रः प्रथमः प्राप तमन्वङ्गमनुन्यपद्यत तम्पर्यगृह्णात्तम्परिगृह्येदं यशोऽभवद्यदिदमिन्द्रो यशो यशो ह भवति य ऽएवं वेद ॥ १२ ॥ स ऽउ ऽएव मखः स विष्णुः । तत ऽइन्द्रो मखवानभवन्मखवान्ह वै तम्मघवानित्याचक्षते परोऽक्षम्परोऽक्षकामा हि देवाः ॥ १३ ॥ ताभ्यो वम्रीभ्योऽन्नाद्यम्प्रायच्छन् । आपो वै सर्वमन्नन्ताभिर्हीदमभिक्नूयमिवादन्ति यदिदङ्किञ्चादन्ति ॥ १४ ॥ अथेमं विष्णुं यज्ञन्त्रेधा व्यभजन्त ।

(१) ग' 'ज' पुस्तकयोः 'किम्वदन्ति" इति ।

व्वसवः प्प्रातःसवनन्द् रुद्रा माद्ध्यन्दिनः सवनमादित्या-
स्तृतीयसवनम् ॥ १५ ॥ अग्निः प्प्रातःसवनम् । इन्द्रो
माद्ध्यन्दिनः सवनं व्विश्श्वे देवास्तृतीयसवनम् ॥ १६ ॥
गायत्री प्प्रातःसवनम् । त्रिष्टुम्माद्ध्यन्दिनः सवनञ्जगती
तृतीयसवनन्तेनापशीर्ष्णा यज्ञेन देवा ऽअर्च्चन्तः श्राम्म्य-
न्तश्चेरुः ॥ १७ ॥ तद्ध्यङ् ह व्वा ऽआथर्व्वणः । एतद् शुक्क्र-
मेतं य्यज्ञं व्विदाञ्चकार यथा यथैतद्यज्ञस्य शिरः प्प्रति-
धीयते यथैष कृत्स्नो यज्ञो भवति ॥ १८ ॥ स हेन्द्रेणोक्त
ऽआस । एतञ्चेदन्न्यस्म्मा ऽअनुब्ब्रूयास्तत ऽएव ते
शिरश्छिन्द्यामिति ॥ १९ ॥ तदु हाश्श्विनोरनुश्श्रुतमास ।
दद्ध्यङ्ङु ह व्वा ऽआथर्व्वण ऽएतद् शुक्क्रमेतं य्यज्ञं व्वेद यथा
यथैतद्यज्ञस्य शिरः प्प्रतिधीयते यथैष कृत्स्नो यज्ञो भवतीति
॥ २० ॥ तौ हेत्योचतुः । उप त्त्वायावेति किमनुवक्ष्यमाणा-
विर्त्येतद् शुक्क्रमेतं य्यज्ञं य्यथा यथैतद्यज्ञस्य शिरः प्प्रति-
धीयते यथैष कृत्स्नो यज्ञो भवतीति ॥ २१ ॥ स होवाच ।
इन्द्रे-[1] व्वा ऽउक्तोऽस्म्येतञ्चेदन्न्यस्म्मा ऽअनुब्ब्रूयास्तत ऽएव
ते शिरश्छिन्द्यामिति तस्म्माद्वै बिभेमि यद्वै मे स शिरो
न च्छिन्द्यान्न वामुपनेष्य ऽइति ॥ २२ ॥ तौ होचतुः ।
आवान्त्वा तस्म्मात्त्रास्या[2]वहे ऽइति कथम्मा त्त्रास्येथे
ऽइति यदा ना ऽउपनेष्यसेऽथ ते शिरश्छित्त्वान्न्यत्रापनि-
निधास्यावोऽथाश्श्वस्य शिर ऽआहृत्य तत्ते प्प्रतिधास्या-
वस्तेन नावनुवक्ष्यसि स यदा नावनुवक्ष्यस्यथ ते तदिन्द्रः

(१) "[illegible]" इति 'ग' 'ज' पुस्तकयोः । (२) 'ग' 'ज' पुस्तकयोः "व्वह" इति ।

शिरश्छेत्स्यत्त्यथ ते स्वꣳ शिर ऽआहृत्य तत्ते प्प्रतिधास्याव
ऽइति तथेति ॥२३॥ तौ होपनिन्न्ये। तौ यदोपनिन्न्येऽथास्य
शिरश्छित्त्वान्न्यत्रापनिदधतुरथाश्श्वस्य शिर ऽआहृत्य तद्धास्य
प्प्रतिदधतुस्तेन हाब्भ्यामनूवाच स यदाब्भ्यामनूवाचा-
थास्य तदिन्द्रः शिरश्चिच्छेदाथास्य स्वꣳ शिर ऽआहृत्य
तद्धास्य प्प्रतिदधतुः ॥२४॥ तस्म्मादेतदृषिणाब्भ्यनूक्तम् ।
दद्ध्यङ् ह यन्न्मद्ध्वाथर्व्वणो वामश्श्वस्य शीर्ष्णा प्प्र यदी-
मुवाचेत्त्ययतन्तदुवाचेति हैव तदुक्तम् ॥ २५ ॥ तन्न सर्व्वस्म्मा
ऽअनुब्ब्रूयात् । एतस्यꣳ हि तदुथो नेन्न्म ऽइन्द्रः शिरश्छि-
नददिति यो न्न्वेव ज्ञातस्तस्म्मै ब्ब्रूयादथ योऽनूचानोऽथ
योऽस्य प्प्रियः स्यान्न त्वेव सर्व्वस्म्मा ऽइव ॥ २६ ॥ सँव-
त्सरवासिनेऽनुब्ब्रूयात् । एष वै सँवत्सरो य ऽएष तपत्त्येष
ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मात्सँवत्सरवासिनेऽ-
नुब्ब्रूयात् ॥ २७ ॥ तिस्रो रात्रीर्व्रतञ्चरति । त्रयो वा ऽऋ-
तवः सँवत्सरस्य सँवत्सर ऽएष य ऽएष तपत्त्येष ऽउ
प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मात्तिस्रो रात्रीर्व्रतञ्चरति
॥२८॥ तप्प्तमाचामति । तपस्व्यनुब्ब्रवा ऽइत्त्यमाꣳसाश्श्य-
नुब्ब्रूते तपस्व्यनुब्ब्रवा ऽइति ॥ २९ ॥ अमृन्न्मयपायी ।
अस्ति वा ऽअस्याꣳ सꣳसृष्टमिव यदस्यामनृतं वदति
तस्म्मादमृन्न्मयपायी ॥ ३० ॥ अशूद्रोच्छिष्टी । एष वै
घर्म्मो य ऽएष तपति सैषा श्रीः सत्त्यञ्ज्योतिरनृतꣳ
स्त्री शूद्रः श्वा कृष्णः शकुनिस्तानि न प्प्रेक्षेत नेच्छ्रियञ्च
पाप्प्मानञ्च नेज्ज्योतिश्च तमश्च नेत्सत्यानृते सꣳसृजा-

नीति ॥ ३१ ॥ अथैष वाव यशः । य ऽएष तपति तद्य-त्तदादित्यो यशो यज्ञो हैव तद्यशस्तद्यत्तद्यज्ञो यशो यज-मानो हैव तद्यशस्तद्यत्तद्यजमानो यश ऽऋत्विजो हैव तद्यशस्तद्यत्तदृत्विजो यशो दक्षिणा हैव तद्यशस्तस्माद्या-मस्मै दक्षिणामानयेयुर्न्न ताᳩं सद्योऽन्न्यस्मा ऽअति-दिशेन्नेद्यन्नमेदं यश आगँस्तत्सद्योऽन्न्यस्मा ऽअतिदिशा-नीति श्वो वैव भूते द्व्यहे वा तदात्मन्न्येवैतद्यशः कृत्वा यदेव तद्भवति तत्स ददाति हिरण्यङ्गां वासोऽश्वं वा ॥ ३२ ॥ अथैतद्व्रं[2] । आयुरेतज्ज्योतिः प्प्रविशति य ऽएत-मनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या नातपति प्प्रच्छादयेत नेदेतस्मात्तिरोऽसानीति नातपति निष्ठी-वेन्नेदेतमभिनिष्ठीवानीति नातपति प्प्रस्रावयेत नेदेतमभि-प्प्रस्रावया ऽइति यावद्वा ऽएष ऽआतपति तावानेष नेदेत-मेतैर्हिनसानीत्यवज्ज्योत्य रात्रावश्नीयात्तदेतस्य[3] रूपङ्क्रियते य ऽएष तपति तदु होवाचासुरिरेकः ह वै देवा व्रतञ्च-रन्ति यत्सत्त्यन्तस्मादु सत्यमेव वदेत् ॥ ३३ ॥

प्रथमाध्याये प्रथमं ब्रह्मणम् ॥ १ ॥

—०—

[ प्रवर्ग्यः * ]

स वै सम्भारान्त्सम्भरति । स यद्वा ऽएनानित्थाच्चे-त्थाच्च सम्भरति तत्सम्भाराणाᳩं सम्भारत्वᳩं स वै यत्र

( १ ) "ता ऽइत्सद्यो०" इति 'ग' 'ज' पुस्तकयोः ।
( २ ) "अथैतद्वा" इति 'ग' 'ज' पुस्तकयोः ।
( ३ ) "०तदस्य" इति 'ग' 'ज' पुस्तकयोः पाठः ।
* तप्ते घृते पयःप्रक्षेपादिना प्रणीयते 'घर्मः' खाद्यविशेषः । स एव प्रक्षेपः प्रवृञ्जन-

यत्र यज्ञस्य न्न्यक्तन्ततस्ततः सम्भरति ॥ १ ॥ कृष्णाजिने सम्भरति । यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैनमेतत्सम्भरति लोमतश्छन्दाᳬंसि वै लोमानि च्छन्दःस्वेवैनमेतत्सम्भरत्युत्तरत ऽउदीची हि मनुष्याणान्दिक्प्राचीनग्ग्रीवे तद्धि देवत्रा ॥ २ ॥ अब्भ्र्या । वज्रो वा ऽअब्भ्रिर्व्वीर्य्यं वै वज्रो व्वीर्य्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥ औदुम्बरी भवति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ४ ॥ अथो वैकङ्कती । प्प्रजापतिर्य्याम्प्रथमामाहुतिमजुहोत्स हुत्वा यत्र न्न्यमृष्ट ततो विकङ्कतः समभवद्यज्ञो वा ऽआहुतिर्य्यज्ञो विकङ्कतो यज्ञेनैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ५ ॥ अरत्निमात्री भवति । बाहुर्व्वा ऽअरत्निर्ब्बाहुनो वै व्वीर्य्यङ्क्रियते व्वीर्य्यसम्मितैव तद्भवति व्वीर्य्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ६ ॥ तामादत्ते । 'देवस्य त्वा सवितुः प्प्रसवेऽश्श्विनोर्ब्बाहुब्भ्याम्पूष्णो हस्ताब्भ्यामाददे नारिरसी'त्त्यसावेव बन्धुः ॥ ७ ॥ ताᳬं सव्ये पाणौ कृत्वा । दक्षिणेनाभिमृश्य जपति 'युञ्जते मन ऽउत युञ्जते धियो विप्प्रा विप्प्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक ऽइन्न्मही देवस्य सवितुः परिष्टुति'रित्त्यसावेव बन्धुः ॥ ८ ॥ अथ मृत्पिण्डं

---

मुच्यते । तादृशप्रवृञ्जननिबन्धनैवास्य कर्मणः समाख्या प्रवर्ग्य इति । तत्र घर्मपाकाय मृन्निर्मित उलूखलाकारपात्रविशेषो महावीरः । गौण्या तु वृत्त्या घर्मः, प्रवर्ग्यः, महावीरः' इति त्रीण्येव पदानि समानार्थानीति विवेकः । (तै० साय० भा० ५. ११. १. । शत० ब्रा० १४. १. १-११)

(१) 'ग' 'ज' पुस्तकयोः '०जिनᳬं स०'' इति पाठः ।

(२) शु० य० सं० ३७. १ । (३) शु० य० सं० ३७. २ ।

परिगृह्णाति *। अभ्र्या च दक्षिणतो हस्तेन च हस्तेनैवोत्तरतो 'देवी[1] द्यावापृथिवी' ऽइति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स ऽइमे द्यावापृथिवी ऽअगच्छद्यन्मृदियन्तद्यदापोऽसौ तन्मृदश्चापाश्च महावीराः कृता भवन्ति तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति तस्मादाह देवी द्यावापृथिवी ऽइति 'मखस्य[2] वामद्य शिरो राध्यास'मिति यज्ञो वै मखो यज्ञस्य वामद्य शिरो राध्यासमित्येवैतदाह 'देवयजने[3] पृथिव्या' ऽइति देवयजने हि पृथिव्यै सम्भरति 'मखाय[4] त्वा मखस्य त्वा शीर्ष्णे' ऽइति यज्ञो वै मखो यज्ञाय त्वा यज्ञस्य त्वा शीर्ष्णे ऽइत्येवैतदाह ॥ ९ ॥ अथ वल्मीकवपाम्। 'देव्यो[5] वम्र्य' ऽइत्येता वा ऽएतदकुर्वत यथा यथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति 'भूतस्य[6] प्रथमजा' ऽइतीयं वै पृथिवी भूतस्य प्रथमजा तदनयैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति 'मखस्य[7] वोऽद्य शिरो राध्यासन्देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुः ॥ १० ॥ अथ वराहविहतम्। 'इयत्यग्र[8] ऽआसी'दितीयती ह वा ऽइयमग्रे पृथिव्यास प्रादेशमात्री तामेमूष ऽइति वराह ऽउज्जघान सोऽस्याः पतिः प्रजापतिस्तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्द्धयति कृत्स्नङ्करोति 'मखस्य[9] तेऽद्य शिरो राध्यासन्देवयजने

* 'मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी' ( का० श्रौ० सू० २६. १. ४ ) इति।

(१) शु० य० सं० ३७. ३। (२) शु० य० सं० ३७. ३। (३) शु० य० सं० ३७. ३। (४) शु० य० सं० ३७. ३। ( ५ ) शु० य० सं० ३७. ४। ( ६ ) शु० य० सं० ३७. ४। ( ७ ) शु० य० सं० ३७. ४। ( ८ ) शु० य० सं० ३७. ५। ( ९ ) शु० य० सं० ३७. ५।

पृथिव्व्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्त्यसावेव बन्धुः ॥ ११ ॥ अथादारान् । 'इन्द्रस्यौज स्त्थे'ति यत्र वा ऽएनमिन्द्र ऽओजसा पर्य्यगृह्णात्तदस्य परिगृहीतस्य रसो व्व्यक्षरत्स पूयन्निवाशेत सोऽब्ब्रवीदादृीर्य्येव वत म ऽएष रसोऽस्तौषीदिति तस्म्मादादारा ऽअथ यत्पूयन्निवाशेत तस्म्मात्पूतीकास्तस्म्मादग्ग्नावाहुतिरिवाब्भ्याहिता ज्वलन्ति तस्म्मादु सुरभयो यज्ञस्य हि रसात्सम्भूता ऽअथ यदे-नन्तदिन्द्र ऽओजसा पर्य्यगृह्णात्तस्म्मादाहेन्द्रस्यौज स्त्थेति 'मखस्य वोऽद्य शिरो राद्ध्यासन्देवयजने पृथिव्व्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्त्यसावेव बन्धुः ॥१२॥ अथाजा-क्षीरम् । यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्क्रामत्ततोऽजा समभवत्त-यैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्त्यसावेव बन्धुः ॥१३॥ तान्वा ऽएतान्पञ्च सम्भारात्सम्भरति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्त्तवः सँवत्सरस्य सँवत्सर ऽएष य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्य-स्तदेतमेवैतत्प्रीणाति तान्त्सम्भृतानभिमृशति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्त्यसावेव बन्धुः ॥१४॥ अथोत्तरतः परिश्श्रितम्भवति । तदभिप्प्रयन्तो जपन्ति 'प्प्रैतु ब्ब्रह्मण-स्प्पतिरि'त्त्येष वै ब्ब्रह्मणस्प्पतिर्य्य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह प्प्रैतु ब्ब्रह्मण-स्प्पतिरिति 'प्प्र देव्व्येतु सूनृते'ति देवी ह्येषा सूनृता-

(१) शु० य० सं० ३७. ६ । (२) शु० य० सं० ३७. ६ । (३) शु० य० सं० ३७. ६ । (४) शु० य० सं० ३७. ६ । (५) शु० य० सं० ३७. ७ । (६) शु० य० सं० ३७. ७ ।

'च्छा वीरन्नर्य्यम्पङ्क्तिराधस'मित्युपस्तौत्येवैनमेतन्महयत्येव 'देवा यज्ञन्नयन्तु न' ऽइति सर्वानेवास्मा ऽएतद्देवानभिगोप्तॄन्करोति ॥ १५ ॥ परिश्रितम्भवति । एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्मा ऽएताम्पुरम्पर्य्यश्रयꣳस्तथैवास्मा ऽअयमेताम्पुरम्परिश्रयति ॥ १६ ॥ अथ खरे सादयति । 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरथ प्रयौति मखाय त्वा मखस्य त्वा शीर्ष्णे ऽइत्यसावेव बन्धुरथ मृत्पिण्डमुपादाय महावीरङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुः प्रादेशमात्रम्प्रादेशमात्रमिव हि शिरो मध्ये सङ्गृहीतम्मध्ये सङ्गृहीतमिव हि शिरोऽथास्योपरिष्टात्त्र्यङ्गुलम्मुखमुन्नयति नासिकामेवास्मिन्नेतद्दधाति तन्निष्ठितमभिमृशति 'मखस्य शिरोऽसी'ति मखस्य ह्येतत्सौम्यस्य शिर ऽएवमितरौ तूष्णीम्पिन्वने तूष्णीꣳ रौहिणकपाले ॥ १७ ॥ प्रजापतिर्वा ऽएष यज्ञो भवति । उभयं वा ऽएतत्प्रजापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति यदेवास्य निरुक्तम्परिमितꣳ रूपन्तदस्य तेन संस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्तमपरिमितꣳ रूपन्तदस्य तेन संस्करोति स ह वा ऽएतꣳ सर्वङ्कृत्स्नम्प्रजापतिꣳ संस्करोति य ऽएवं विद्वानेतदेवङ्करोत्यथोपशयायै पिण्डम्परिशिनष्टि प्रायश्चित्तिभ्यः ॥ १८ ॥ अथ गवेधुकाभिर्धिन्वति ।

(१) शु० य० सं० ३७. ७। (२) शु० य० सं० ३७. ७। (३) शु० य० ३७. ७। (४) शु० य० सं० ३७. ८। (५) शु० य० सं० ३७. ८।

यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत ऽएता ऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णणीम्पिन्न्वने तूष्णणीᳪं रौहिणकपाले ॥ १९ ॥ अथैनान्धूपयति । 'अश्वस्य त्वा वृष्णः शक्ना धूपयामी'ति वृषा वा ऽअश्वो वीर्य्यं वै वृषा वीर्य्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति 'देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णणीम्पिन्न्वने तूष्णणीᳪं रौहिणकपाले ॥२०॥ अथैनाञ्छ्रपयति । श्रृतः हि देवानामिष्टकाभिः श्रपयत्येता वा ऽएतदकुर्वत यथा यथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति तदु येनैव सुश्रृताः स्युस्तेन श्रपयेदथ पचनमवधाय महावीरमवदधाति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णणीम्पिन्न्वने तूष्णणीᳪं रौहिणकपाले तान्दिवैवोपवपेद्दिवोद्वपेदुह हिं देवानाम् ॥ २१ ॥ स ऽउद्वपति । 'ऋजवे त्वे'त्यसौ वै लोक ऽऋजुः सत्यᳪं ह्यृजुः सत्यमेष य ऽएष तपत्येष ऽउ प्रथमः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाहऽर्जवे त्वेति ॥ २२ ॥ 'साधवे त्वे'ति । अयं वै साधुर्योऽयम्पवत ऽएष हीमाँल्लोकान्त्सद्धोऽनुपवत ऽएष ऽउ द्वितीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह साधवे त्वेति ॥ २३ ॥

(१) शु० य० सं० ३७. ८। (२) शु० य० सं० ३७. ९। (३) शु० य० सं० ३७. ९ ।(४) शु० य० सं० ३७. ९। (५) शु० य० सं० ३७. १०। (६) शु० य० सं० ३७. १०।

'सुक्षित्यै त्वे'ति । अयं वै लोकः सुक्षितिरस्मिन्निह लोके सर्वाणि भूतानि क्षियन्त्यथो ऽअग्निर्वै सुक्षितिरग्निर्ह्येवास्मिँल्लोके सर्वाणि भूतानि क्षियन्त्येष ऽउ तृतीयः प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सुक्षित्यै त्वेति तूष्णणीम्पिन्न्वने तूष्णणीᳬ रौहिणकपाले ॥ २४ ॥ अथैनानाच्छृणत्ति । अजायै पयसा 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णणीम्पिन्न्वने तूष्णणीᳬ रौहिणकपाले ॥ २५ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ २६ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—— ० ——

[ महावीरसंस्काराः ]

स यदैतदातिथ्येन प्प्रचरति । अथ प्प्रवर्ग्येण चरिष्ष्यन्पुरोपसदोऽग्ग्रेण गार्हपत्यम्प्राचः कुशान्त्सᳬस्तीर्य्य द्वन्द्वम्पात्राण्युपसादयत्युपयमनीम्महावीरम्परीशासौ पिन्न्वने रौहिणकपाले रौहिणहवन्न्यौ स्रुचौ यदु चान्न्यद्भवति तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञस्तद्विराजमेवैत यज्ञमभिसम्पादयत्यथ यद्द्वन्द्वन्द्वन्द्वं वै वीर्य्यं यदा वै द्वौ सᳬरभेते ऽअथ तौ वीर्य्यङ्कुरुतो द्वन्द्वं वै मिथुनम्प्रजननम्मिथुनेनैवैनमेतत्प्रजननेन समर्द्धयति कृत्स्नङ्करोति ॥ १ ॥ अथाद्भ्रुर्य्युः । प्रोक्षणीरादायोपोत्तिष्ठन्नाह

(१) शु० य० सं० ३७. १०। (२) शु० य० सं० ३७. १०।

ब्ब्रह्मन्प्रचरिष्ष्यामो होतरभिष्टुहीति ब्ब्रह्मा वै यज्ञस्य दक्षिणत ऽआस्तेऽभिगोप्ता तमेवैतदाहाप्रमत्त ऽआस्व यज्ञस्य शिरः प्प्रतिधास्याम ऽइति होतरभिष्टुहीति यज्ञो वै होता तमेवैतदाह यज्ञस्य शिरः प्प्रतिधेहीति प्प्रतिपद्यते होता ॥ २ ॥ 'ब्रह्म जज्ञानम्प्रथमम्पुरस्ताद्'[1] इति । असौ वा ऽआदित्यो ब्ब्रह्माहरहः पुरस्ताज्जायत ऽएष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह ब्ब्रह्म जज्ञानम्प्रथमम्पुरस्तादित्यथ प्प्रोक्षत्यसावेव बन्धुः ॥ ३ ॥ स प्प्रोक्षति । 'यमाय[2] त्वे'त्येष वै यमो य ऽएष तपत्येष हीदꣳ सर्वं य्यमयत्येतेनेदꣳ सर्वं य्यतमेष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह यमाय त्वेति ॥ ४ ॥ 'मखाय[3] त्वे'ति । एष वै मखो य ऽएष तपत्येष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह मखाय त्वेति ॥ ५ ॥ 'सूर्य्यस्य[4] त्वा तपस' ऽइति । एष वै सूर्य्यो य ऽएष तपत्येष प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह सूर्य्यस्य त्वा तपस ऽइति ॥ ६ ॥ पूर्व्वया द्वारा स्त्थूणान्निर्हृत्य । दक्षिणतो निमिन्न्वन्ति यथैनाꣳ होताभिष्टुवन्न्परापश्श्येद्यज्ञो वै होता स ऽएवास्यामेतद्यज्ञम्प्रतिदधाति तथैषा घर्म्मम्पिन्न्वते ॥ ७ ॥ [अर्धः प्रपाठकः ॥६६॥] अग्ग्रेणाहवनीयꣳ सम्म्राडासन्दीम्परय्य्याहृत्य दक्षिणतः प्प्राचीमासादयत्युत्तराꣳ राजासन्द्यै ॥ ८ ॥ औदुम्बरी भवति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥९॥ अꣳसदघ्घ्ना भवति । अꣳसयोर्व्वा

(१) शु० य० सं० ३७. ३ । (२) शु० य० सं० ३७. ११ । (३) शु० य० सं० ३७. ११ । (४) शु० य० सं० ३७. ११ ।

ऽइदꣳ शिरꣳ प्प्रतिष्ठितन्तदुꣳसयोरेवैतच्छिरꣳ प्प्रतिष्ठापयति ॥ १० ॥ बाल्वजीभी रज्जुभिर्व्युता भवति । यज्ञस्य शीर्षञ्छिन्नस्य रसो व्व्यक्षरत्तत ऽएता ऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ११ ॥ अथ यदुत्तरत ऽआसादयति । यज्ञो वै सोमꣳ शिरꣳ प्प्रवर्ग्य ऽउत्तरं वै शिरस्तस्मादुत्तरत ऽआसादयत्त्यथो राजा वै सोमꣳ सम्म्राट् प्रवर्ग्य ऽउत्तरं वै राज्यात्साम्म्राज्यन्तस्मादुत्तरत ऽआसादयत्त्युत्तरो वै प्प्रजा तस्मादुत्तरत ऽआसादयति ॥ १२ ॥ स यत्रैताꣳ होतान्न्वाह । 'अञ्जन्ति[2] यम्प्रथयन्तो न विप्प्रा' ऽइति तदेतम्प्रचरणीयम्महावीरमाज्येन समनक्ति 'देवस्त्वा[3] सविता मद्ध्वानक्त्वि'ति सविता वै देवानाम्प्रसविता सर्वं व्वा ऽइदम्मधु यदिदङ्किञ्च तदेनमनेन सर्वेण समनक्ति तदस्मै सविता प्प्रसविता प्प्रसौति तस्मादाह देवस्त्वा सविता मद्ध्वानक्त्विति ॥ १३॥ * अथोत्तरतꣳ सिकता ऽउपकीर्णा भवन्ति । तद्रजतꣳ हिरण्यमधस्तादुपास्यति 'पृथिव्व्याꣳ सꣳस्पृशस्प्पाही'त्त्येतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममधस्ताद्रक्षाꣳसि नाष्ट्रा न हन्न्युरित्त्यग्निर्व्वा ऽएतद्रेतो यद्धिरण्यन्नाष्ट्राणाꣳ रक्षसामपहत्त्या ऽअथो पृथिव्व्यु ह व्वा ऽएतस्माद्बिभयाञ्चकार यद्वै मायन्तप्तꣳ शुशुचानो न

(१) "आसादयत्त्युत्तरो वै प्प्रजा तस्मादुत्तरत" इति पाठः 'ग' 'ज' पुस्तकयोर्न दृश्यते
(२) ऋ० सं० ४. २. २१ । (३) शु० य० सं० ३७, ११ ।
* शतम् ६६०० ।
(४) शु० य० सं० ३७ ११ ।

हिंस्यादिति तदेवास्या ऽएतदन्तर्दधाति रजतम्भवति रजतैव हीयम्पृथिवी ॥ १४ ॥ स यत्रैताᳬं होतान्वाह । 'संसीदस्व महाँ२॥ ऽअसी'ति तदुभयत ऽआदीप्ता मौञ्जाः प्प्रलवा भवन्ति तानुपास्य तेषु प्प्रवृणक्ति यज्ञस्य शीर्षच्छिन्नस्य रसो ऽव्यक्षरत्तत ऽएता ऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ १५ ॥ अथ यदुभयत ऽआदीप्ता भवन्ति । सर्वाभ्य ऽएवैतद्दिग्भ्यो रक्षाᳬंसि नाष्ट्रा ऽअपहन्ति तस्मिन्प्रवृज्यमाने पत्नी शिरः प्प्रोर्णुते तप्तो वा ऽएष शुशुचानो भवति नेन्मेऽयन्तप्तः शुशुचानश्चक्षुः प्प्रमुष्णादिति ॥ १६ ॥ स प्प्रवृणक्ति । 'अर्चिरसि शोचिरसि तपोऽसी'त्येष वै घर्म्मो य ऽएष तपति सर्वं वा ऽएतदेष तदेतमेवैतत्प्रीणाति तस्मादाहार्चिरसि शोचिरसि तपोऽसीति ॥ १७ ॥ अथास्यामाशिष ऽआशास्ते । इयं वै यज्ञोऽस्यामेवैतदाशिष ऽआशास्ते ता ऽअस्मा ऽइयᳬं सर्वाः समर्द्धयति ॥ १८ ॥ 'अनाधृष्टा पुरस्ता'दिति । अनाधृष्टा ह्येषा पुरस्ताद्रक्षोभिर्नाष्ट्राभि'रग्नेराधिपत्य' ऽइत्यग्निमेवास्या ऽअधिपतिङ्करोति नाष्ट्राणाᳬं रक्षसामपहत्या 'ऽआयुर्म्मे दा' ऽइत्यायुरेवात्मन्धत्ते तथो ह सर्वमायुरेति ॥ १९ ॥ 'पुत्रवती दक्षिणत' ऽइति । नात्र तिरोहितमिवास्ती'न्द्रस्याधिपत्य' ऽइतीन्द्रमेवास्या ऽअधिपतिङ्करोति

(१) ऋ० सं० १. ३. ९। (२) शु० य० सं० ३७. ११। (३) शु० य० सं० ३७. १२। (४) शु० य० सं० ३७. १२। (५) शु० य० सं० ३७. १२। (६) शु० य० सं० ३७. १२। (७) शु० य० सं० ३७. १२।

नाष्ट्राणाꣳ रक्षसामपहत्यै ‘[1]प्रजाम्मे दा’ ऽइति प्रजामेव पशूनात्मन्धत्ते तथो ह पुत्री पशुमान्भवति ॥ २० ॥ ‘[2]सुषदा पश्चा’दिति । नात्र तिरोहितमिवास्ति ‘[3]देवस्य सवितुराधिपत्य’ ऽइति देवमेवास्यै सवितारमधिपतिङ्करोति नाष्ट्राणाꣳ रक्षसामपहत्यै ‘[4]चक्षुर्म्मे दा’ ऽइति चक्षुरेवा-त्मन्धत्ते तथो ह चक्षुष्मान्भवति ॥ २१ ॥ ‘[5]आश्श्रुतिरु-त्तरत’ ऽइति । आश्श्रावयन्नुत्तरत ऽइत्येवैतदाह ‘[6]धातुराधि-पत्य’ ऽइति धातारमेवास्या ऽअधिपतिङ्करोति नाष्ट्राणाꣳ रक्षसामपहत्यै ‘[7]रायस्पोषम्मे दा’ ऽइति रयिमेव पुष्टि-मात्मन्धत्ते तथो ह रयिमान्पुष्टिमान्भवति ॥ २२ ॥ ‘[8]विधृतिरुपरिष्टा’दिति । विधारयन्नुपरिष्टादित्येवैतदाह ‘[9]बृहस्पतेराधिपत्य’ ऽइति बृहस्पतिमेवास्या ऽअधिपतिङ्क-रोति नाष्ट्राणाꣳ रक्षसामपहत्या ‘[10]ऽओजो मे दा’ ऽइ-त्योज ऽएवात्मन्धत्ते तथौजस्वी बलवान्भवति ॥ २३ ॥ अथ दक्षिणत ऽउत्तानेन पाणिना निह्नुते । ‘[11]विश्श्वाब्भ्यो मा नाष्ट्राब्भ्यस्पाही’ति सर्वाब्भ्यो मार्त्तिब्भ्यो गोपा-येत्येवैतदाह यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छत्त्रया वै पितरस्तैरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ २४ ॥ अथेमामभिमृश्श्य जपति । ‘[12]मनोरश्श्वासी’त्यश्श्वा ह

(१) शु० य० सं० ३७. १२ । (२) शु० य० सं० ३७ १२ । (३) शु० य० सं० ३७. १२ । (४) शु० य० सं० ३७. १२ । (५) शु० य० सं० ३७ १२ । (६) शु० य० सं० ३७. १२ । (७) शु० य० सं० ३७. १२ । (८) शु० य० सं० ३७. १२ । (९) शु० य० सं० ३७. १२ । (१०) शु० य० सं० ३७. १२ । (११) शु० य० सं० ३७. १२ ।

* अत्र “रसो व्यक्षरत्स” इत्यधिकः पाठः । ‘ग’ ‘ज’ पुस्तकयोः [ ] इति चिह्नान्तर्गत उपलभ्यते ।

(१२) शु० य० सं० ३७. १२ ।

वा ऽइयम्भूत्वा मनुमुवाह सोऽस्याः पतिः प्रजापति- स्तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्द्धयति कृत्स्न- ङ्करोति ॥ २५ ॥ अथ वैकङ्कतौ शकलौ परिश्रयति प्राञ्चौ । 'स्वाहा[1] मरुद्भिः परिश्रीयस्वे'त्यवरथं स्वाहाकारङ्क- रोति परान्देवतामेष वै स्वाहाकारो य ऽएष तपत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादुवरथं स्वाहाकार- ङ्करोति परान्देवताम् ॥ २६ ॥ मरुद्भिः परिश्रीयस्वेति विशो वै मरुतो विशैवैतत्क्षत्रम्परिबृंहति तदिदङ्क्षत्रमु- भयतो विशा परिबृढन्तूष्णीमुदञ्चौ तूष्णीम्प्राञ्चौ तूष्णी- मुदञ्चौ तूष्णीम्प्राञ्चौ ॥ २७ ॥ त्रयोदश सम्पादयति । त्रयोदश वै मासाः सँवत्सरस्य सँवत्सर ऽएष य ऽएष तपत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मात्त्रयोदश सम्पादयति ॥ २८ ॥ अथ सुवर्णं हिरण्यमुपरिष्टान्निदधाति । 'दिवः[2] सथंस्पृशस्पाही'त्येतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममुपरिष्टाद्रक्षाथंसि नाष्ट्रा न हन्न्युरित्यग्नेर्वा ऽएत- द्रेतो यद्धिरण्यन्नाष्ट्राणाथं रक्षसामपहत्या ऽअथो द्यौर्ह वा ऽएतस्माद्बिभयाञ्चकार यद्वै मायन्तप्तः शुशुचानो न हिथंस्यादिति तदेवास्या ऽएतदन्तर्दधाति हरितम्भवति हरिणीव हि द्यौः ॥ २९ ॥ अथ धवित्रैराधूनोति । 'मधु[3] मध्वि'ति त्रिः प्राणो वै मधु प्राणमेवास्मिन्नेतद्दधाति त्रीणि भवन्ति त्रयो वै प्राणाः प्राण ऽउदानो व्यानस्तानेवा-

(१) शु० य० सं० ३७. १३ । (२) शु० य० सं० ३७. १३ । (३) शु० य० सं० ३७. १३ ।

स्मिन्नेतद्दधाति ॥ ३० ॥ अथापसलवि त्रिर्द्धून्वन्ति । यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छत्तया वै पितरस्तैरेवै-नमेतत्समीरयति ॥ ३१ ॥ अप वा ऽएतेभ्यः प्राणाः क्रामन्ति । य यज्ञे धुवनन्तन्वते पुनः प्रसलवि त्रिर्द्धून्वन्ति षट् सम्पद्यन्ते षड्वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्द-धाति श्रपयन्ति रौहिणौ स यदार्चिर्जायतेऽथ हिरण्य-मादत्ते ॥ ३२ ॥ स यत्रैताꣳ होतान्वाह । 'अप्नस्वतीम-श्विना वाचमस्मे' ऽइति तदद्ध्वर्युरुपोत्तिष्ठन्नाह रुचितो घर्म्म ऽइति स यदि रुचितः स्याच्छ्रेयान्यजमानो भविष्य-तीति विद्यादथ यद्यरुचितः पापीयान्भविष्यतीति विद्या-दथ यदि नैव रुचितो नारुचितो नैव श्रेयान्न पापी-यान्भविष्यतीति विद्याद्यथा त्वेवं[2] रुचितः स्यात्तथा धवितव्यम्[3] ॥३३॥ अथैतद्वै । आयुरेतज्ज्योतिः प्रविशति य ऽएतमनुवा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥३४॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

———०———

स यदैतदद्ध्वर्युः । उपोत्तिष्ठन्नाह रुचितो घर्म्म ऽइति तदुपोत्थायावकाशैरुपतिष्ठन्ते प्राणा वा ऽअवकाशाः प्राणानेवास्मिन्नेतद्दधाति षडुपतिष्ठन्ते षड्वा ऽइमे शीर्ष-न्प्राणास्तानेवास्मिन्नेतद्दधाति ॥ १ ॥ 'गर्भो देवाना'मिति।

* अत्र "रसो व्यक्षरत्स" इत्यधिकः पाठः [ ] इति चिह्नान्तर्गतः 'ग' 'ज' पुस्तकयो-रुपलभ्यते ।

(१) शु० य० सं० ३४. २९ । (२) "न्वेव" इति 'ग' 'ज' पुस्तकयोः । (३) "घवितव्यः" इति 'ग' 'ज' पुस्तकयोः । (४) शु० य० सं० ३७. १४ ।

एष वै गर्ब्भो देवानां य्य एष तपत्त्येष हीदꣳ सर्व्वङ्गृब्भ्णा-
त्येतेनेदꣳ सर्व्वङ्गृभीतमेष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति
तस्म्मादाह गर्ब्भो देवानामिति ॥ २ ॥ 'पिता मतीना'-
मिति । पिता ह्येष मतीना'म्पतिः प्प्रजाना'मिति पतिर्ह्येष
प्प्रजानाम् ॥ ३ ॥ 'सन्देवो देवेन सवित्त्रा गते'ति सꣳ हि
देवो देवेन सवित्त्रा गत 'सꣳ सूर्य्येण रोचत' ऽइति सꣳ
हि सूर्य्येण रोचते ॥ ४ ॥ 'समग्ग्निरग्ग्निना गते'ति । सꣳ
ह्यग्ग्निरग्ग्निना गत 'सन्दैवेन सवित्त्रे'ति सꣳ हि दैवेन
सवित्त्रा गत 'सꣳ सूर्य्येणारोचिष्ट्टे'ति सꣳ हि सूर्य्येणारो-
चिष्ट्ट ॥ ५ ॥ 'स्वाहा समग्ग्निस्तपसा गते'ति सꣳ
ह्यग्ग्निस्तपसा गतावरꣳ स्वाहाकारङ्करोति परान्देवतामसा-
वेव बन्धुः 'सन्दैव्व्येन सवित्त्रे'ति सꣳ हि दैव्व्येन सवि-
त्त्रा गत 'सꣳ सूर्य्येणारूरुचते'ति सꣳ हि सूर्य्येणारूरुचत
॥ ६ ॥ ते वा ऽएते त्त्रयोऽवकाशा भवन्ति । त्त्रयो वै
प्प्राणाः प्प्राण ऽउदानो व्व्यानस्तानेवास्म्मिन्नेतद्दधाति
॥ ७ ॥ 'धर्त्ता दिवो व्विभाति तपसस्पृथिव्व्या'मिति । धर्त्ता
ह्येष दिवो व्विभाति तपसस्पृथिव्व्या'न्धर्त्ता देवो देवानाम-
मर्त्यस्तपोजा' ऽइति धर्त्ता ह्येष देवो देवानाममर्त्यस्तपोजा
'व्वाचमस्म्मे नियच्छ देवायुव'मिति यज्ञो वै व्वाग्ग्यज्ञमस्म्म-

(१) "गृह्णा०" इति 'ग' 'ज' पुस्तकयोः । (२) शु० य० सं० ३७. १४ । (३) शु० य० सं० ३७. १४ । (४) शु० य० सं० ३७. १४ । (५) शु० य० सं० ३७. १४ । (६) शु० य० सं० ३७. १५ । (७) शु० य० सं० ३७. १५ । (८) शु० य० सं० ३७. १५ । (९) शु० य० सं० ३७. १५ । (१०) शु० य० सं० ३७. १५ । (११) शु० य० सं० ३७. १५ । (१२) "०स्तेनै" इति 'ग' 'ज' पुस्तकयोः । (१३) शु० य० सं० ३७. १६ । (१४) शु० य० सं० ३७. १६ । (१५) शु० य० सं० ३७. १६ ।

भ्यम्प्रयच्छ येन देवान्प्रीणामेत्येवैतदाह ॥ ८ ॥ 'अपश्यं[1]
गोपामनिपद्यमान'मिति । एष वै गोपा स एष तपत्येष
हीदꣳ सर्वङ्गोपायत्यथो न निपद्यते तस्मादाहापश्यङ्गोपा-
मनिपद्यमानमिति ॥ ९ ॥ 'आ[2] च परा च पथिभिश्चरन्त'-
मिति । आ च ह्येष परा च देवैः पथिभिश्चरति 'स[3]
सध्रीचीः स विषूचीर्वसान' इति सध्रीचीश्च ह्येष विषू-
चीश्च दिशो वस्तेऽथो रश्मी'नावरीवर्त्ति भुवनेष्वन्त'रिति
पुनः पुनर्ह्येष एषु लोकेषु वरीवर्त्यमानश्चरति ॥ १० ॥
'विश्वासाम्भुवाम्पते । विश्वस्य मनसस्पते विश्वस्य
वचसस्पते सर्वस्य वचसस्पत' इत्येतस्य सर्वस्य पत
इत्येत'द्देवश्श्रुत्त्वन्देव घर्म्म देवो देवान्पाही'ति नात्र
तिरोहितमिवास्ति ॥ ११ ॥ 'अत्र[7] प्रावीरनु वान्देववीतय'
इति । अश्विनावेवैतदाहाश्विनौ वा एतद्यज्ञस्य शिरः
प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहात्र प्रावीरनु वान्दे-
ववीतय इति ॥ १२ ॥ 'मधु[8] माध्वीभ्याम्मधु माधूचीभ्या'-
मिति । दध्यङ् ह वा आभ्यामाथर्वणो मधु नाम ब्राह्म-
णमुवाच तदेनयोः प्रियन्धाम तदेवैनयोरेतेनोपगच्छति
तस्मादाह मधु माध्वीभ्याम्मधु माधूचीभ्यामिति
॥ १३ ॥ 'हृदे[9] त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा ।
ऊर्ध्वो अध्वरन्दिवि देवेषु धेही'ति नात्र तिरोहितमि-

(१) शु० य० सं० ३७. १७ । (२) शु० य० सं० ३७. १७ । (३) शु० य सं० ३७. १७ । (४) शु० य० सं० ३७. १७ । (५) शु० य० सं० ३७. १८ । (६) शु० य० सं० ३७. १८ । (७) शु० य० सं० ३७. १८ । (८) शु० य० सं० ३७. १८ । (९) शु० य० सं० ३७. १९ ।

वास्ति ॥ १४ ॥ 'पिता नोऽसि पिता नो बोधी'ति । एष वै पिता य ऽएष तपत्येष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह पिता नोऽसि पिता नो बोधीति 'नमस्ते ऽअस्तु मा मा हिꣳसी'रित्याशिषमेवैतदाशास्ते ॥ १५ ॥ अथ पत्न्यै शिरोऽपावृत्य । महावीरमीक्षमाणां वाचयति 'त्वष्टृमन्तस्त्वा सपेमे'ति व्वृषा वै प्प्रवर्ग्यो योषा पत्नी मिथुनमेवैतत्प्रजननङ्क्रियते ॥ १६ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्प्रविशति य ऽएतमनु वा ब्ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ १७ ॥

प्रथमाध्याये चतुर्थ ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

—०—

[ रौहिणहोमः, महावीरेषु अजापयस आसेकश्च ]

अथातो रौहिणौ जुहोति । 'अहः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहे'त्युभावेतेन यजुषा प्प्रात 'रात्रिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहे'त्युभावेतेन यजुषा सायम् ॥ १ ॥ तद्यद्रौहिणौ जुहोति । अग्निश्च ह व्वा ऽआदित्यश्च रौहिणावेताभ्याꣳ हि देवताभ्यां यजमानाः स्वर्गँल्लोकꣳ रोहन्ति ॥ २ ॥ अथो ऽअहोरात्रे वै रौहिणौ । आदित्यः प्प्रवर्ग्योऽमुन्तदादित्यमहोरात्राभ्या-

(१) शु० य० सं० ३७. २०। (२) शु० य० सं० ३७. २०। (३) "०प०" इति 'ग' 'ज' पुस्तकयोः। (४) शु० य० सं० ३७. २०। (५) शु० य० सं० ३७ २१। (६) शु० य० सं० ३७. २१।

म्परिगृह्णाति तस्म्मादेषोऽहोरात्राब्भ्याम्परिगृहीतः ॥ ३ ॥ अथो ऽइमौ वै लोकौ रौहिणौ आदित्यः प्प्रवर्ग्ग्यो ऽमुन्तदादित्यमाब्भ्याँल्लोकाब्भ्याम्परिगृह्णाति तस्म्मादेष ऽआब्भ्याँल्लोकाब्भ्याम्परिगृहीतः ॥ ४ ॥ अथो चक्षुषी वै रौहिणौ । शिरः प्प्रवर्ग्ग्यः शीर्षँस्तच्चक्षुर्द्दधाति ॥५॥ अथ रज्जुमादत्ते । 'देवस्य त्वा सवितुः प्प्रसवेऽश्श्विनोर्ब्बाहुब्भ्याम्पूष्ण्णो हस्ताब्भ्यामाददेऽदित्यै[2] रास्न्नासी'त्यसावेव बन्धुः ॥६॥ अथ गामाह्वयति । जघनेन गार्हपत्यं स्थ'न्निडे[3] ऽएह्यदित ऽएहि सरस्वत्त्येही'तीडा हि गौरदितिर्हि गौः सरस्वती हि गौरथोच्चै[4]राह्वयति नाम्म्ना'[5]सावेह्यसावेही'ति त्रिः ॥ ७ ॥ तामागतामभिदधाति । 'अदित्यै[6] रास्न्नासीन्द्राण्ण्या ऽउष्ण्णीष' ऽइतीन्द्राणी ह वा ऽइन्द्रस्य प्प्रिया पत्नी तस्या ऽउष्ण्णीषो विश्श्वरूपतमः सोऽसीति तदाह तमेवैनमेतत्करोति ॥ ८ ॥ अथ वत्समुपार्ज्जति । 'पूषासी'[7]त्ययं वै पूषा योऽयम्पवत ऽएष हीदꣳ सर्व्वम्पुष्ष्यत्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्प्रीणाति तस्म्मादाह पूषासीति ॥ ९ ॥ अथोन्नयति । 'घर्म्माय[8] दीष्ष्वे'त्येष वा ऽअत्र घर्म्मो रसो भवति यमेषा पिन्न्वते तस्यै दयस्वेत्त्येवैतदाह ॥ १० ॥ अथ पिन्न्वने पिन्न्वयति । '[9]अश्श्विब्भ्याम्पिन्न्वस्वे'त्त्यश्श्विनावेवैतदाहाश्श्विनौ वा ऽएतद्यज्ञस्य शिरः प्प्रत्त्यधत्तान्तावेवैतत्प्प्रीणाति तस्म्मादाहा-

(१) शु० य० सं० ३८. १। (२) 'ग' 'ज' पुस्तकयोः "ऽदित्यै" इति पाठो न दृश्यते। (३) शु० य० सं० ३८. २। (४) "तै" इति 'ग' 'ज' पुस्तकयोः। (५) शु० य० सं० ३८. २। (६) शु० य० ३८. ३। (७) शु० य० सं० ३८. ३। (८) शु० य० सं० ३८. ३। (९) शु० य० सं० ३८. ४।

श्विवभ्यामिपन्न्वस्वेति ॥ ११ ॥ '[1]सरस्वत्यै पिन्न्वस्वे'ति वाग्वै सरस्वती वाचा वा ऽएतदश्विनौ यज्ञस्य शिरः प्प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाह सरस्वत्यै पिन्न्वस्वेति ॥ १२ ॥ '[2]इन्द्राय पिन्न्वस्वे'ति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतदश्विनौ यज्ञस्य शिरः प्प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहेन्द्राय पिन्न्वस्वेति ॥ १३ ॥ अथ विप्प्रुषोऽभिमन्त्रयते । '[3]स्वाहेन्द्रवत्स्वाहेन्द्रव'दितीन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणाति तस्मादाह स्वाहेन्द्रवत्स्वाहेन्द्रवदिति त्रिष्कृत्व ऽआह त्रिवृद्धि यज्ञोऽवरर्थ्ठं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १४ ॥ अथास्यै स्तनमभिपद्यते । '[4]यँस्ते स्तनः शशयो यो मयोभू'रिति यस्ते स्तनो निहितो गुहायामित्त्येवैतदाह '[5]यो रत्नधा वसुविद्यः सुदत्र' ऽइति यो धनानान्दाता वसुविरपणाऽय ऽइत्त्येवैतदाह '[6]येन विश्श्वा पुष्ष्यसि वार्य्याणी'ति येन सर्वान्देवान्त्सर्वाणि भूतानि बिभर्षीत्त्येवैतदाह '[7]सँरस्वति तमिह धातवेऽक'रिति वाग्वै सरस्वती सैषा घर्म्मदुघा यज्ञो वै वाग्यज्ञमस्म्मभ्यम्प्रयच्छ येन देवान्प्रीणामेत्त्येवैतदाहाथ गार्हपत्त्यस्यार्द्धमे'[8]त्युर्वन्तरिक्षमन्न्वेमी'त्त्यसावेव बन्धुः ॥ १५ ॥ अथ शफावादत्ते । '[9]गायँत्रञ्छन्दोऽसि त्रैष्टुभञ्छन्दोऽसी'ति गायत्रेण चैवैना-

(१) शु० य० सं० ३८.४। (२) शु० य० सं० ३८.४। (३) शु० य० सं० ३८.४। (४) शु० य० सं० ३८.५। (५) शु० य० सं० ३८.५। (६) शु० य० सं० ३८. ५। (७) शु० य० सं० ३८.५। (८) शु० य० सं० ३८.५। (९) शु० य० सं० ३८.६।

वेतत्त्रैष्टुभेन च च्छन्दसादत्ते 'द्यावापृथिवीभ्यान्त्वा परिगृह्णामी'तीमे वै द्यावापृथिवी परीशासावादित्यः प्रवर्ग्योऽमुन्तदादित्यमाभ्यान्द्यावापृथिवीभ्याम्परिगृह्णात्यथ मौञ्जेन वेदेनोपमाष्टर्यसावेव बन्धुः ॥ १६ ॥ अथोपयमन्योपगृह्णणाति । 'अन्तरिक्षेणोपयच्छामी'त्यन्तरिक्षं वा ऽउपयमन्यन्तरिक्षेण हीदꣳ सर्वमुपयतमथो ऽउदरं वा ऽउपयमन्युदरेण हीदꣳ सर्वमन्नाद्यमुपयतन्तस्मादाहान्तरिक्षेणोपयच्छामीति ॥ १७ ॥ अथाजाक्षीरमानयति । तप्तो वा ऽएष शुशुचानो भवति तमेवैतच्छमयति तस्मिम्ञ्छान्ते गोक्षीरमानयति ॥ १८ ॥ 'इन्द्राश्विने'ति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणात्यश्विनेत्यश्विनावेवैतदाहाश्विनौ वा ऽएतद्यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहेन्द्राश्विनेति ॥ १९ ॥ 'मधुनेः सारघस्ये'ति । एतद्वै मधु सारघ'ङ्घर्म्मम्पाते'ति रसम्पातेत्त्येवैतदाह 'वसवं' ऽइत्त्येते वै वसव ऽएते हीदꣳ सर्वं वासयन्ते 'यजंत वा'ङिति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति ॥ २० ॥ 'स्वाहा सूर्य्यस्य रश्म्मये वृष्टिवनय' ऽइति। सूर्य्यस्य ह वा ऽएको रश्मिर्वृष्टिवनिर्न्नाम येनेमाः सर्वाः प्रजा बिभर्त्ति तमेवैतत्प्रीणाति तस्मादाह स्वाहा सूर्य्यस्य रश्म्मये वृष्टिवनय ऽइत्यवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥२१॥ अथैतद्वै । आयुरेतज्ज्योतिः

(१) शु० य० सं० ३८. ६ । (२) शु० य० सं० ३८. ६ । (३) शु० य० सं० ३८. ६ । (४) शु० य० सं० ३८. ६ । (५) शु० य० सं० ३८. ६ । (६) शु० य० सं० ३८. ६ । (७) शु० य० सं० ३८. ६ । (८) शु० य० सं० ३८. ६ ।

प्रविशति स ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ २२ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥
कण्डिकासंख्या ॥ १३२ ॥

—०—

[ प्रवर्ग्यानुष्ठानम् ]

स यत्रैतांश्रं होतान्न्वाह । 'प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृते'ति तदध्वर्य्युः प्राङुदायन्वातनामानि जुहोत्येतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममन्तरा रक्षांश्रसि नाष्ट्रा न हन्न्युरिति तमेतत्पुरैवाहवनीयात्स्वाहाकारेणाजुहवुस्तद्धुतमेव सन्तमग्ग्नावजुहवुस्तथो ऽएवैनमेष ऽएतत्पुरैवाहवनीयात्स्वाहाकारेण जुहोति तद्धुतमेव सन्तमग्ग्नौ जुहोति ॥ १ ॥ 'समुद्राय त्वा वाताय स्वाहे'ति । अयं वै समुद्रो योऽयम्पवत ऽएतस्माद्वै समुद्रात्सर्वे देवाः सर्वाणि भूतानि समुद्रवन्ति तस्मा ऽएवैनञ्जुहोति तस्मादाह समुद्राय त्वा वाताय स्वाहा ॥ २ ॥ 'सरिराय त्वा वाताय स्वाहे'ति । अयं वै सरिरो योऽयम्पवत ऽएतस्माद्वै सरिरात्सर्वे देवाः सर्वाणि भूतानि सहेरते तस्मा ऽएवैनञ्जुहोति तस्मादाह सरिराय त्वा वाताय स्वाहा ॥ ३ ॥ 'अनाधृष्याय त्वा वाताय स्वाहा प्रतिधृष्याय त्वा

(१) शु० य० सं० ३७. ७। (२) शु० य० सं० ३८. ७। (३) शु० य० सं० ३८. ७। (४) शु० य० सं० ३८. ७।

व्वाताय स्वाहे’ति । अयं व्वा ऽअनाधृष्ष्योऽप्प्रतिधृष्ष्यो षोऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाहानाधृष्ष्याय त्त्वा व्वाताय स्वाहा प्प्रतिधृष्ष्याय त्त्वा व्वाताय स्वाहेति ॥ ४ ॥ ‘[1]अवस्युवे त्त्वा व्वाताय स्वाहाशिमिदाय त्त्वा व्वाताय स्वाहे’ति । अयं व्वा ऽअवस्युरशिमिदो षोऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाहावस्युवे त्त्वा व्वाताय स्वाहा-शिमिदाय त्त्वा व्वाताय स्वाहेति ॥ ५ ॥ ‘[2]इन्द्राय त्त्वा व्वसुमते रुद्रवते स्वाहे’ति । अयं व्वा ऽइन्द्रो षोऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाहेन्द्राय त्त्वेति व्वसु-मते रुद्रवत ऽइति तदिन्द्रमेवानु व्वसूँश्च रुद्राँश्चाभजत्त्यथो प्प्रातःसवनस्य चैवैतन्माद्ध्यन्दिनस्य च सवनस्य रूप-ङ्क्रियते ॥ ६ ॥ ‘[3]इन्द्राय त्त्वादित्त्यवते स्वाहे’ति । अयं व्वा ऽइन्द्रो षोऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मा-दाहेन्द्राय त्त्वेत्त्यादित्त्यवत ऽइति तदिन्द्रमेवान्वादित्त्याना-भजत्त्यथो तृतीयसवनस्यैवैतद्रूपङ्क्रियते ॥ ७ ॥ ‘[4]इन्द्राय त्त्वाभिमातिघ्घ्ने स्वाहे’ति । अयं व्वा ऽइन्द्रो षोऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाहेन्द्राय त्त्वेत्त्यभिमातिघ्घ्न ऽइति सपत्त्नो व्वा ऽअभिमातिरिन्द्राय त्त्वा सपत्त्नघ्घ्न ऽइत्त्येवैतदाह सोऽस्योद्धारो षथा श्श्रेष्ठस्योद्धार ऽएवमस्यैष ऽउद्धृते देवेब्भ्यः ॥ ८ ॥ ‘[5]सवित्रे त्त्व ऽऋभुमते व्विभुमते व्वाजवते स्वाहे’ति । अयं व्वै सविता षोऽयम्पवते तस्म्मा

(१) शु० य० सं० ३८.७। (२) शु० य० सं० ३८.८। (३) शु० य० सं० ३८.८। (४) शु० य० सं० ३८.८। (५) शु० य० सं० ३८.८।

ऽएवैनञ्जुहोति तस्म्मादाह सवित्रे त्वेर्त्तुभुमते विभुमते वाजवत ऽइति तदस्म्मिन्निविश्वान्देवानन्न्वाभजति ॥ ९ ॥ 'बृहस्प्पतये त्वा विश्श्वदेव्व्यावते स्वाहे'ति । अयं वै बृहस्प्पतिर्य्योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाह बृहस्प्पतये त्वेति विश्श्वदेव्व्यावत ऽइति तदस्म्मिन्विश्श्वान्त्सर्वान्देवानन्न्वाभजति ॥ १० ॥ 'यमाय त्वाङ्गिरस्वते पितृमते स्वाहे'ति । अयं वै यमो योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाह यमाय त्वेत्त्यङ्गिरस्वते पितृमत ऽइति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्त्रया वै पितरस्तानेवैतदन्न्वाभजति ॥ ११ ॥ द्वादशैतानि नामानि भवन्ति । द्वादश वै मासाः सँवत्त्सरस्य सँवत्त्सर ऽएष य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्माद्द्वादश भवन्ति ॥ १२ ॥ अथोपयमन्न्या महावीर ऽआनयति । 'स्वाहा घर्म्माये'त्येष वै घर्म्मो य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह स्वाहा घर्म्मायेत्त्यवरार्द्धं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १३ ॥ आनीते जपति । 'स्वाहा घर्म्मः पित्र' ऽइति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्त्रया वै पितरस्तानेवैतत्प्रीणात्त्यवरार्द्धं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १४ ॥ नानुवाक्क्या-

(१) शु० य० सं० १८. ८ । (२) शु० य० सं० ३८. ९ ।
(३) शु० य० सं० ३८. ९ । (४) शु० य० सं० ३८. ६ ।

* अत्र "रसो व्व्यक्षरस्स" इत्यधिकः पाठः 'ग' 'ज' पुस्तकयोः [ ] इति चिह्नान्तर्गत उपलभ्यते ।

मन्न्वाह । सकृदु ह्येव पराञ्चः पितरस्तस्म्मान्नानुवाक्क्या-
मन्न्वाहातिक्क्रम्म्याश्श्राव्याह घर्म्मस्य यजेति व्वषट्कृते
जुहोति ॥ १५ ॥ 'व्विश्श्वा[1] ऽआशा दक्षिणस'दिति । सर्व्वा
ऽआशा दक्षिणसदित्त्येवैतदाह 'व्विश्श्वा[2]न्देवानयाडिहे'ति
सर्व्वान्देवानयाक्षीदिहेत्त्येवैतदाह 'स्वा[3]हाकृतस्य घर्म्मस्य
मधोः पिबतमश्श्विने'त्त्यश्श्विनावेवैतदाहाश्श्विनौ ह्येतद्य-
ज्ञस्य शिरः प्प्रत्त्यधत्तान्तावेवैतत्प्रीणात्त्यवरथं स्वाहाकार-
ङ्करोति परान्देवतामसावेव बन्धुः ॥ १६ ॥ अथ हुत्त्वो-
र्द्ध्वमुत्त्कम्पयति । 'दिवि[4] धा ऽइमं यज्ञमिमं यज्ञन्दिवि धा'
ऽइत्त्यसौ वा ऽआदित्त्यो घर्म्मो यज्ञो दिवि वा ऽएष हितो
दिवि प्प्रतिष्ठितस्तमेवैतत्प्रीणाति तस्म्मादाह दिवि धा
ऽइमं यज्ञमिमं यज्ञन्दिवि धा ऽइत्त्यनुवषट्कृते जुहोति
॥ १७ ॥ 'स्वा[5]हाग्नये यज्ञियाये'ति । तत्स्विष्टकृद्राजन-
मग्निर्हि स्विष्टकृ'[6]च्छं यजुर्भ्य' ऽइति यजुर्भिर्ह्येषोऽ-
स्म्मिँल्लोके प्प्रतिष्ठितस्तान्त्येवैतत्प्रीणात्त्यवरथं स्वाहा-
कारङ्करोति परान्देवतामसावेव बन्धुः ॥ १८ ॥ अथ ब्ब्रह्मा-
नुमन्त्रयते । ब्ब्रह्मा वा ऽऋत्त्विजाम्भिषक्कमस्तद्य ऽएवऽ-
र्त्त्विजाम्भिषक्कमस्तेनैवैतद्यज्ञम्भिषज्ज्यति ॥ १९ ॥ 'अ-
श्श्विना घर्म्मम्पात'मिति । अश्श्विनावेवैतदाहाश्श्विनौ
ह्येतद्यज्ञस्य शिरः प्प्रत्त्यधत्तान्तावेवैतत्प्रीणाति ॥ २० ॥

---

(१) शु० य० सं० ३८. १० । (२) शु० य० सं० ३८. १० । (३) शु० य० सं० ३८. १० । (४) शु० य० सं० ३८. ११ । (५) शु० य० सं० ३८. ११ । (६) शु० य० सं० ३८. ११ । (७) "स्तेनैवैनमेत०" इति 'ग' 'ज' पुस्तकयोः पाठः । (८) शु० य० सं० ३८. १२ ;

'हार्द्दानिमहार्द्दित्राभिरूतिभि'रिति । अनिरुक्तमनिरुक्तो वै प्प्रजापतिः प्प्रजापतिर्य्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्भिषज्यति ॥ २१ ॥ 'तन्त्रायिण' ऽइति । एष वै तन्त्रायी य ऽएष तपत्येष हीमाँल्लोकाँस्तन्त्रमिवानुसञ्चरत्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह तन्त्रायिण ऽइति ॥ २२ ॥ 'नमो द्यावापृथिवीब्भ्या'मिति । तदाब्भ्यान्द्यावापृथिवीब्भ्यान्निह्नुते ययोरिदꣳ सर्व्वमधि ॥ २३ ॥ अथ यजमानः । यज्ञो वै यजमानो यज्ञेनैवैतद्यज्ञम्भिषज्यति ॥२४॥ 'अपाताम ऽश्विना घर्म्म'मिति । अश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्प्रत्यधत्तान्तावेवैतत्प्रीणाति ॥ २५ ॥ 'अनु द्यावापृथिवी ऽअमꣳसाता'मिति । तदिमे द्यावापृथिवी ऽआह ययोरिदꣳ सर्व्वमधी'हैव रातयः सन्त्वि'ति हैव नो धनानि सन्त्वित्येवैतदाह ॥ २६ ॥ अथ पिन्न्वमानमनुमन्त्रयते *। 'इषे पिन्न्वस्वे'ति व्वृष्ट्यै तदाह यदाहेषे पिन्न्वस्वेत्यू'र्ज्जे पिन्न्वस्वे'ति यो व्वृष्टादूर्ग्रसो जायते तस्मै तदाह 'ब्रह्मणे पिन्न्वस्वे'ति तद्ब्रह्मण ऽआह 'क्षत्राय पिन्न्वस्वे'ति तत्क्षत्रायाह 'द्यावापृथिवीब्भ्याम्पिन्न्वस्वे'ति तदाब्भ्यान्द्यावापृथिवीब्भ्यामाह ययोरिदꣳ सर्व्वमधि ॥ २७ ॥ स यदूर्द्ध्वः पिन्न्वते । तद्यजमानाय पिन्न्वते

(१) शु० य० सं० ३८. १२। (२) शु० य० सं० ३८. १२। (३) शु० य० सं० ३८. १२। (४) शु० य० सं० ३८. १३। (५) शु० य० सं० ३८. १३ (६) शु० य० सं० ३८. १३।

* का० श्रौ० सू० २६. ६. ८।

(७) शु० य० सं० ३८. १४। (८) शु० य० सं० ३८. १४। (९) शु० य० सं० ३८. १४। (१०) शु० य० सं० ३८. १४। (११) शु० य० सं० ३८. १४।

यत्प्राङ् तद्देवेभ्यो यद्दक्षिणा तत्पितृभ्यो यत्प्रत्यङ् तत्पशुभ्यो यदुदङ् तत्प्रजाया ऽअनपराद्धन्त्वेवं[1] यजमानस्योर्द्ध्वों ह्येव पिन्विन्त्वाथ[2] यान्दिशम्पिन्वते ताम्पिन्वते यदा शाम्यन्ति विप्रुषः ॥ २८ ॥ अथ प्राङिवोदङ्ङुत्क्रामति*। '[3]धर्म्मासि सुधर्म्मे'त्येष वै धर्म्मो य ऽएष तपत्येष हीदꣳ सर्वन्धारयत्येतेनेदꣳ सर्वन्धृतमेष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह धर्म्मासि सुधर्म्मेति ॥ २९ ॥ अथ खरे सादयति । '[4]अमेन्न्यस्म्मे नृम्म्णानि धारये'त्यक्रुद्ध्यन्नो धनानि धारयेत्येवैतदाह '[5]ब्रह्म धारय क्षत्रन्धारय विशन्धारये'त्येतत्सर्वन्धारयेत्येवैतदाह ॥३०॥ अथ शाकलैर्ज्जुहोति । प्राणा वै शाकलाः प्राणानेवास्मिन्नेतद्दधाति ॥ ३१ ॥ '[6]स्वाहा पूष्णे शरस' इति । अयं वै पूषा योऽयम्पवत ऽएष हीदꣳ सर्वम्पुष्यत्येष ऽउ प्राणः प्राणमेवास्मिन्नेतद्दधाति तस्मादाह स्वाहा पूष्णे शरस ऽइत्यवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुर्हुत्वा मद्ध्यमे परिधा ऽउपश्रयति ॥ ३२ ॥ '[7]स्वाहा ग्रावभ्य' ऽइति । प्राणा वै ग्रावाणः प्राणानेवास्मिन्नेतद्दधाति हुत्वा मद्ध्यमे परिधा ऽउपश्रयति ॥ ३३ ॥ '[8]स्वाहा प्रतिरवेभ्य' ऽइति । प्राणा वै प्रतिरवाः प्राणान्हीदꣳ सर्वम्प्रतिरत-

---

(१) "न्त्वेव" इति 'ग' 'ज' पुस्तकयोः । (२) "पिन्वत्याथ" इति 'ग' 'ज' पुस्तकयोः ।
* 'धर्म्मासीत्युत्क्रामत्युत्तरपूर्वार्द्धम्' का० श्रौ० सू० २६. ६. ९ ) इति ।
( ३ ) शु० य० सं० ३८. १४ । ( ४ ) शु० य० सं० ३८. १४ । ( ५ ) शु० य० सं० ३८. १४ । ( ६ ) शु० य० सं० ३८. १५ ।
(७) शु० य० सं० ३८. १५ । ( ८ ) शु० य० सं० ३८. १५ ।

न्प्राणानेवास्मिन्नेतद्दधाति हुत्वा मद्ध्यमे परिधा ऽउप-
श्श्रयति ॥ ३४ ॥ 'स्वाहा पितृब्भ्य ऽऊर्द्ध्वबर्हिब्भ्यो घर्म्म-
पावब्भ्य' ऽइति । अहुत्वैवोदङ्ङीक्षमाणो दक्षिणार्द्धे
बर्हिष ऽउपगूहति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छ-
न्रया वै पितरस्तानेवैतत्प्रीणात्यथ यन्न प्प्रेक्षते सकृदु
ह्येव पराञ्चः पितरः ॥ ३५ ॥ 'स्वाहा द्यावापृथिवी-
ब्भ्या'मिति । प्प्राणोदानौ वै द्यावापृथिवी प्प्राणोदाना-
वेवास्मिन्नेतद्दधाति हुत्वा मद्ध्यमे परिधा ऽउपश्श्रयति
॥ ३६ ॥ 'स्वाहा विश्श्वेब्भ्यो देवेब्भ्य ऽइति । प्प्राणा वै
विश्श्वे देवाः प्प्राणानेवास्मिन्नेतद्दधाति हुत्वा मद्ध्यमे
परिधा ऽउपश्श्रयति ॥ ३७ ॥ 'स्वाहा रुद्राय रुद्रहूतय'
ऽइति । अहुत्वैव दक्षिणेक्षमाणः प्प्रतिप्प्रस्त्थात्रे प्प्रय-
च्छति तः स ऽउत्तरतः शालाया ऽउदञ्चन्निरस्यत्त्येषा
ह्येतस्य देवस्य दिक्स्वायामेवैनमेतद्दिशि प्प्रीणात्यथ यन्न
प्प्रेक्षते नेद्दमा रुद्रो हिनसदिति ॥ ३८ ॥ सप्तैता ऽआहु-
तयो भवन्ति । सप्त वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्न-
न्नेतद्दधाति ॥ ३९ ॥ अथ महावीरादुपयमन्न्याम्प्रत्यानयति ।
'स्वाहा सञ्ज्योतिषा ज्योति'रिति ज्योतिर्वा ऽइतरस्मिन्न-
न्नयो भवति ज्योतिरितरस्यान्ते ह्येतदुभे ज्योतिषी सङ्ग-
च्छेते ऽअवरथं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः

* अत्र "रसो व्यक्षरत्स" इत्यधिकः पाठः 'ग' 'ज' पुस्तकयोः [ ] इति
चिह्नान्तर्गत उपलभ्यते ।

(१) शु० य० सं० ३८. १५ । (२) शु० य० सं० ३८. १५ । (३) शु० य० सं०
३८. १५ । (४) शु० य० सं० ३८. १६ । (५) शु० य० सं० ३८. १६ ।

